# आपस्तम्बीयं श्रौतसूत्रम्

श्रीगणेशाय नमः

अथातो दर्शपूर्णमासौ व्याख्यास्यामः १ प्रातरग्निहोत्रं हुत्वान्यमाहवनीयं प्रणीयाग्नीनन्वादधाति २ न गतश्रियोऽन्यमग्निं प्रणयति ३ देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति जपित्वा ममाग्ने वर्चो विहवेष्टस्त्वित्याहवनीयमुपसमिन्द्धे । उत्तरया गार्हपत्यमुत्तरयान्वाहार्यपचनम् ४ तिसृभिस्तिसृभिर्वा ५ उत्तमां तु जपेदाहवनीये वादध्यात् ६ व्याहृतीभिरन्वाधानमेके समामनन्ति ७ संनयतः पलाशशाखां शमीशाखां वाहरति बहुपर्णां बहुशाखामप्रतिशुष्काग्रामसुषिराम् ८ यं कामयेतापशुः स्यादित्यपर्णां तस्मै शुष्काग्रामाहरेदपशुरेव भवति यं कामयेत पशुमान्स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत्पशुमन्तमेवैनं करोतीति विज्ञायते ९ साया प्राच्युदीची प्रागुदीची वा भवतीषे त्वोर्जे त्वेति तामाच्छिनत्ति १० अपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा ११

इति प्रथमा कण्डिका

इमां प्राचीमुदीचीमिषमूर्जमभिसंस्कृतां बहुपर्णामशुष्काग्रां हरामि पशुपामहमित्याहरति १ वायव स्थोपायव स्थेति तया षडवरार्ध्यान्वत्सानपाकरोति २ दर्भैर्दर्भपुञ्जीलैर्वा ३ देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति ४ प्रस्थितानामेकां शाखयोपस्पृशति दर्भैर्दर्भपुञ्जीलैर्वा ५ आप्यायध्वमघ्निया इन्द्राय देवभागमित्येके समामनन्ति । महेन्द्रायेत्येके ६ इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिनः ७ शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः । रुद्रस्य हेतिः परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते ८ ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते ९ यजमानस्य पशून्पाहीत्यग्निष्ठे ऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपगूहति पश्चात्प्राचीं वा १० यो वा अध्वर्योर्गृहान्वेद गृहवान्भवति । आ चतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीत्येते वा अध्वर्योर्गृहाः । य एवं वेद गृहवान्भवतीति विज्ञायते ११

इति द्वितीया कण्डिका इति प्रथमः पटलः

उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहिता १ देवस्य त्वा सवितुः प्रसव इत्यसिदमश्वपर्शुं वादत्ते तूष्णीमनडुत्पर्शुम् २ यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा-सिदं प्रतितपति ३ न पर्शुम् ४ प्रेयमगादित्युक्त्वोर्वन्तरिक्षमन्विहीति प्रा-चीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति ५ देवानां परिषूतमसीति दर्भान्परिषौति ६ विष्णो स्तूपोऽसीत्यभिप्रेतानामेकं स्तम्ब-मुत्सृजति ७ एकं वा स्तम्बं परिषूय तं सर्वं दाति ८ अतिसृष्टो गवां भाग इति वैकां द्वे तिस्रो वा नाडीरुत्सृजति ९ इदं देवानामिति परिषूतानभिमृशति । इदं पशूनामित्यतिसृष्टान् १० देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभ इति विशाखेषु दर्भानारभते ११ देवबर्हिर्मा त्वान्वङ्गा तिर्यगिति संयच्छति १२ पर्व ते राध्यास-मित्यसिदमधिनिदधाति १३ आच्छेत्ता ते मा रिषमित्याच्छिनत्ति १४ संनखं मुष्टिं लुनोति १५ स प्रस्तरः १६ कुल्मिमात्रोऽरत्निः प्रादेश ऊर्वस्थि जान्वस्थि स्रुग्दण्ड इति वा तिर्यक्प्रमाणानि १७

इति तृतीया कण्डिका

पृथिव्याः संपृचः पाहीत्यनधो निदधाति १ अयुजो मुष्टींल्लुनोति २ तथा निधनानि ३ तेषां प्रस्तरोऽयुगर्थ इत्येके ४ प्रस्तरे याथाकामी ५ यद-न्यत्परिषवणादुत्सर्जनाच्च तत्सर्वत्रावर्तते ६ प्रस्तरमेव मन्त्रेण दाति तूष्णी-मितरदिति वाजसनेयकम् ७ सर्वं लुत्वा देवबर्हिः शतवल्शं विरोहेत्या-लवानभिमृशति ८ अदित्यै रास्नासीति त्रिधातु पञ्चधातु वा शुल्बं करोति १० आयुपिता योनिरिति प्रतिदधाति ११ अदित्यै रास्नासीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्यालुभिता योनिरित्युत्तमे नि-धने प्रस्तरमत्याधायेन्द्राण्यै संनहनमिति संनह्यति १२ पूषा ते ग्रन्थिं ग्र-थ्नात्विति ग्रन्थिं करोति १३ स ते मास्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुप-गूहति पश्चात्प्राञ्चं वा १४ आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । ब-र्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभ इति बर्हिरारभते । इन्द्रस्य त्वा बा-हुभ्यामुद्यच्छ इत्युद्यच्छते । बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधिनिधत्ते १५

इति चतुर्थो कण्डिका

प्रेयमगादुर्वन्तरिक्षमन्विहीति यौ गमनौ तौ प्रत्यायनौ १ अदित्यास्त्वोपस्थे सादयामीत्यन्तर्वेदि परिधिदेशेऽन्धः सादयति २ बर्हिरसि देवंगममित्या-सन्नमभिमन्त्रयते ३ देवंगममसीत्यनधो निदधाति यथा प्रागुपसादयेत् ४ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासं परिस्तरमाह-रन् । अपां मेध्यं यज्ञियं सदेवं शिवमस्तु मे । आच्छेत्ता वो मा रिषं जीवानि शरदः शतम् । अपरिमितानां परिमिताः संनह्ये सुकृताय कम् । एनो मा निगां कतमच्चनाहं पुनरुत्थाय बहुला भवन्त्विति परिस्तरणानामधि निधान्याच्छेदनी संनहनीति यथालिङ्गम् ५ खादिरं पालाशं वैकविंशति-दारुमिध्मं करोति ६ त्रयः परिधयः ७ पलाशकार्ष्मर्यखदिरोदुम्बरबि-ल्वरोहीतकविकङ्कतानां ये वा यज्ञिया वृक्षाः ८ आर्द्राः शुष्का वा सत्व-क्काः ९ स्तविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्त-रार्ध्यः १० द्वे आघारसमिधावनूयाजसमिदेकविंशीति ११ समूलानामृते-मूलानां वा दर्भाणां पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य १२

इति पञ्चमी कण्डिका

यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविंशतिधा संभरामि सुसंभृता । त्रीन्परिधीं स्तिस्त्रः समिधो यज्ञायुरनुसंचरान् । उ-पवेषं मेक्षणं धृष्टिं संभरामि सुसंभृतेति शुल्ब इध्मं संभरति १ कृष्णो ऽस्याखरेष्ठो देव पुरश्चर सघ्यासं त्वेति संनह्यति । पुरस्तात्प्रत्यञ्चं ग्रन्थिमु-पगूहति पश्चात्प्राञ्चं वा । अनधो निदधाति २ इध्मप्रवश्चनानि निदधाति ३ त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वांस्त्वया होता संतनोत्यर्धमासानिति दर्भाणां वेदं करोति ४ वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य ५ शुल्बात्प्रादेशे परिवास्य वेदपरिवासनानि निदधाति ६ अन्तर्वेदि शा-खायाः पलाशान्यसर्वाणि प्रशात्य मूलतः शाखां परिवास्योपवेषं करोत्युप-वेषोऽसि यज्ञाय त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः शिवः शग्मो भवासि न इति ७ तृतीयस्यै दिवो गायत्रिया सोम आभृतः । सो-मपीथाय संनयितुं वकलमन्तरमादद इति परिवासनशकलमादाय प्रज्ञातं निदधाति ८ त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायां

शिथिलमवसजति मूले मूलान्यग्रेऽग्राणि । न ग्रन्थिं करोति ९ त्रिवृत्पलाशे दर्भ इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे । इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ संचरतां पवित्रे हव्यशोधन इति क्रियमाणे यजमानोऽनुमन्त्रयते १० समूहन्त्यग्न्यगारमुपलिम्पन्त्यायतनानि ११ अलंकुर्वाते यजमानः पत्नी च १२ नवे सांनाय्यकुम्भ्यौ यावच्छर्करं गोमयेनालिप्ते भवतः १३

इति षष्ठी कण्डिका इति द्वितीयः पटलः

अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञंकुरुते १ अपराह्णेऽधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन चरन्ति २ अपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति ३ सकृदाच्छिन्नानि वा तृणान्युपमूलं दिनानि ४ दक्षिणा प्रागग्रैर्दर्भैर्दक्षिणमग्निं परिस्तीर्य दक्षिणतः पश्चाद्वा दर्भान्संस्तीर्य दक्षिणाप्राञ्च्येकैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति स्प्यं मेक्षणं कृष्णाजिनमुलूखलं मुसलं शूर्पमाज्यस्थालीं चरुस्थालीं येन चान्येनार्थी भवति ५ दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थितं भवति ६ अध्वर्युरुपवीती स्थालीमेकपवित्रेणान्तर्धाय तया दक्षिणतः शकटादधि निर्वपत्युत्तरतो वा ७ तां पूरयित्वा निमार्ष्टि ८ मृन्मये निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति तूष्णीं वा ९ अपरेणान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिन उलूखले प्रतिष्ठिते दक्षिणाप्राची तिष्ठन्ती पत्न्यवहन्ति परापावमविवेकम् १० सकृत्फलीकरोति ११ दक्षिणाग्नौ जीवतण्डुलं श्रपयति १२ अपहता असुरा रक्षांसि पिशाचा वेदिषद इत्यन्तरा गार्हपत्यान्वाहार्यपचनौ दक्षिणपूर्वेण वान्वाहार्यपचनं दक्षिणाप्राचीमेकस्प्यां पराचीं वेदिमुद्धत्य शुन्धन्तां पितर इत्यद्भिरवोक्ष्यायन्तु पितरो मनोजवस इत्यभिमन्त्र्य सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति सकृदाच्छिन्नेन बर्हिषा वेदिं स्तृणाति १३

इति सप्तमी कण्डिका

उत्पूतेन नवनीतेनानुत्पूतेन वा सर्पिषा स्थालीपाकमभिघार्यैकस्प्यायां मेक्षणमासाद्य स्थालीपाकमासादयति १ दक्षिणतः कशिपूपबर्हणमाञ्जन म-

भ्यञ्जनमुदकुम्भमित्येकैकश आसादयति २ अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य तेनावदायाभिघार्य सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ पुहोति ३ यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम् । अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् ४ ये मेक्षणे तण्डुलास्तान्हुत्वा तूष्णीं मेक्षणमादधाति ५ न यमाय जुहोतीत्येके ६ अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् । ये देवाः पितरो ये च मानुषा ये गर्भे मम्रुरुत ये परास्ताः । य उद्धता उत ये निखातास्ते सम्यञ्च इह मादयन्ताम् । ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् । ये ज्ञातीनां प्रतिरूपाः पितृन्मायया सुराः प्रविष्टाः । परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति ७ दक्षिणपूर्वमवान्तरदेशं सकृत्स्फ्येनोल्लिख्योदीरतामवर इत्यद्भिरवोक्ष्योल्लिखितान्ते निदधाति ८ यजमानो ऽत ऊर्ध्वं प्राचीनावीती कर्माणि करोति ९ मार्जयन्तां मम पितरो मार्जय-न्तां मम पितामहा मार्जयन्तां मम प्रपितामहा इत्येकस्फ्यायां त्रीनुदकाञ्जलीन्निनयति १० प्रसव्यं वा त्रिः परिषिञ्चति ११ त्रीनुदपात्रान्वाजसनेयिनः समामनन्ति १२

इत्यष्टमी कण्डिका

सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् १ तूष्णीं चतुर्थम् २ स कृताकृतः ३ प्रपितामहप्रभृतीन्वा ४ नानामगृहीतं गच्छति ५ यदि बन्धून विद्यात्स्वधा पितृभ्यः पृथिविषद्भ्य इति प्रथमं पिण्डं दद्यात् । स्व-धा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम् । स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् ६ यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौद्वावुपलक्षयेत् ७ यदि जीवपिता न दद्यादा होमात्कृत्वा विरमेत् ८ यन्मे माता प्रममाद यच्चचा-राननुव्रतम् । तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यतां पितृभ्यः स्वधा विभ्यः स्वधा नमः पितामहेभ्यः स्वधा विभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा विभ्यः स्वधा नम इत्युपस्थायात्र पितरो यथाभागं मन्दध्वमित्युक्त्वा परा-

ङावर्तते ९ ओष्मणो व्यावृत उपास्ते १० अमीमदन्त पितरः सोम्या इति व्यावृत्त ऊष्मण्यभिपर्यावर्ततेऽव्यावृत्ते वा ११ यः स्थाल्यां शेषस्तमव-जिघ्रति ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां वीरं धत्त पितर इति १२ आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय सन्नाद्यात्तेन वा प्राश्यः १३ पूर्ववदेकस्प्यायां त्री-नुदकाञ्जलीनुपनिनीयाञ्जनाभ्यञ्जने वासश्च त्रिरनुपिण्डं ददाति १४ आङ्क्ष्व ततासावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्याञ्जनम् १५ एवमभ्य-ञ्जनमभ्यङ्क्ष्वेति मन्त्रं संनमति १६ यदि नामानि न विद्यादाञ्जतां मम पितर आञ्जतां मम पितामहा आञ्जतां मम प्रपितामहा इत्याञ्जनम् । एवमभ्यञ्ज-नमभ्यञ्जतामिति मन्त्रं संनमति १७

इति नवमी कण्डिका ।

एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा योष्टेति वाससो दशां छि-त्त्वा निदधात्यूर्णास्तुकां वा पूर्वे वयसि । उत्तर आयुषि स्वं लोम १ वीतोष्मसु पिण्डेषु नमो वः पितरो रसायेति नमस्काराञ्जपति २ गृहान्नः पितरो दत्त सदो वः पितरो देष्मेति पितृनुपतिष्ठते ३ ऊर्जं बृहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितृनित्युदकं निनयति ४ मनो न्वाहुवामह इति मनस्वतीभिरुपतिष्ठते ५ उत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुवेता पुराणम् । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतास्विति पितृनुत्थापयति ६ परेत पितरः सोम्या इति प्रवा-हण्या पितृन्प्रवाहयति ७ प्रजापते न त्वदेतानीति यज्ञोपवीती गार्हपत्यदेशं गच्छति ८ यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते ९ अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं धत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छति १० आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति । पुमांसं ह जानुका भवतीति विज्ञायते ११ ये सजाताः समनसो जीवाजीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समा इत्यवशिष्टानामेकं यजमानः प्राश्नाति । न वा १२ स्थाल्यां पिण्डान्समवधाय ये समाना इति सकृदाच्छिन्नमग्नौ प्रहरति १३ अभून्नो दूतो हविषो जातवेदा अवाड्व्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येहि देवानित्येकोल्मुकं

प्रत्यपिसृज्य प्रोक्ष्य पात्राणि द्वन्द्वमभ्युदाहरति १४ संतिष्ठते पिण्डपितृयज्ञः १५ अपः पिण्डानभ्यवहरेद्ब्राह्मणं वा प्राशयेत् १६ सोऽयमेवंविहित एवानाहिताग्नेः १७ औपासने श्रपणधर्मा होमश्च १८ अतिप्रणीते वा जुहुयात् १९ यस्मिञ्जुहुयात्तमुपतिष्ठेत २० तत्र गार्हपत्यशब्दो लुप्येत संस्कारप्रतिषेधात् २१

इति दशमी कण्डिका इति तृतीयः पटलः

अमावास्यायां रात्र्यां स्वयं यजमानो यवाग्वाग्निहोत्रं जुहोत्यग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति १ नास्यैतां रात्रिं कुमाराश्चन पयसो लभन्ते २ हुते सायमग्निहोत्रे सायंदोहं दोहयति ३ अग्नीन्परिस्तीर्याग्निमग्नी वा सांनाय्यपात्राणि प्रक्षाल्योत्तरेण गार्हपत्यं दर्भान्संस्तीर्य द्वन्द्वं न्युञ्चि प्रयुनक्ति ४ कुम्भीं शाखापवित्रमभिधानीं निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वापिधानार्थमग्निहोत्रहवनीमुपवेषं च ५ समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते ६ पवित्रे स्थो वैष्णवी वायुर्वां मनसा पुनात्विति तृणं काष्ठं वान्तर्धाय छिनत्ति ७ न नखेन ८ विष्णोर्मनसा पूते स्थ इत्यद्भिरनुमृज्य पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्विति प्रथमम् । अच्छिद्रेण पवित्रेणेति द्वितीयम् । वसोः सूर्यस्य रश्मिभिरिति तृतीयम् ९ आपो देवीरग्रेपुव इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधाति । आपो देवीः शुद्धा स्थेमा पात्राणि शुन्धत । उपातङ्क्याय देवानां पर्णवल्कमुत शुन्धत । देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः । गां दोहपवित्रे रज्जुं सर्वा पात्राणि शुन्धतेति प्रोक्ष्यमाणान्यभिमन्त्र्यैता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते यजमानः १०

इत्येकादशी कण्डिका

निष्टप्तं रक्षो निष्टप्तोऽघशंस इति गार्हपत्ये सांनाय्यपात्राणि प्रतितप्य धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय निरूढं जन्यं भयं निरूढाः सेना अभीत्वर्यारिति

गार्हपत्यादुदीचोऽङ्गारान्निरूह्य मातरिश्वनो घर्मोऽसीति तेषु कुम्भीमधिश्रयति १ अप्रस्रंसाय यज्ञस्योखे उपदधाम्यहम् । पशुभिः संनीतं बिभृतामिन्द्राय शृतं दधीति वा २ भृगूणामङ्गिरसां तपसा तप्यस्वेति प्रदक्षिणमङ्गारैः पर्यूह्य वसूनां पवित्रमसीति तस्यां प्रागग्रं शाखापवित्रमत्यादधाति ३ उदक् प्रातः ४ कुम्भीमन्वारभ्य वाचं यच्छति ५ पवित्रं वा धारयन्नास्ते ६ अदित्यै रास्नासीत्यभिधानीमादत्ते ७ त्रयस्त्रिंशेऽसि तन्तूनां पवित्रेण सहागहि । शिवेयं रज्जुरभिधान्यघ्नियामुपसेवतामित्यादीयमानामभिमन्त्रयते यजमानः ८ पूषासीति वत्समभिदधाति ९ उपसृष्टां मे प्रब्रूतादिति संप्रेष्यति १० उपसृजामीत्यामन्त्रयते । अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीरिति वत्समुपसृजति ११ गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टेति संप्रेष्यति १२ यद्युपसृष्टां व्यवेयात्सांनाय्यं मा विलोपीति ब्रूयात् १३ उपसीदामीत्यामन्त्रयते । अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः । ऊर्जं पयः पिन्वमाना घृतं च जीवन्तीरुप वः सदेयमिति दोग्धोपसीदति १४ न शूद्रो दुह्याद्दुह्याद्वा १५ दारुपात्रे दोग्धि १६ उपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते । अयक्ष्मा वः प्रजया संसृजामीत्युपसृष्टाम् । द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधात्विति दुह्यमानाम् १७

इति द्वादशी कण्डिका ।

उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीं सुवर्विदम् । तदिन्द्राग्नी जिन्वतं सूनृतावत्तद्यजमानममृतत्वे दधात्विति धाराघोषम् १ दुग्ध्वा हरति २ तं पृच्छति कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियमिति ३ अमूमिति निर्दिशति । यस्यां देवानां मनुष्याणां पयो हितमिति प्रत्याह ४ सा विश्वायुरित्यनुमन्त्रयते ५ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवेति कुम्भ्यां तिरः पवित्रमासिञ्चति ६ हुत स्तोको हुतो द्रप्स इति विप्रुषोऽनुमन्त्रयते ७ एवं द्वितीयां तृतीयां च दोहयति ८ सा विश्वव्यचा इति द्वितीयामनुमन्त्रयते । सा विश्वकर्मेति तृतीयाम् ९ तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृज्यानन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहनेऽप

आनीय संपृच्यध्वमृतावरीरिति कुम्भ्यां संक्षालनमानीयाविष्यन्दयन्सुशृतं करोति १० दृंह गा दृंह गोपतिं मा वो यज्ञपती रिषदिति वर्त्म कुर्वन्प्रा-गुद्वासयत्युदक् प्रागुदग्वा ११ एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थं दोहयित्वा संततमभिदुहन्त्योपवसथात् १२ तेन शीतबुध्नमातनक्ति १३ सोमेन त्वातनच्मीन्द्राय दधीति दध्ना १४ यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यग्निहोत्रोच्छेषणमन्ववधायायं पयः सोमं कृत्वा स्वां योनिमपिगच्छतु । पर्णवल्कः पवित्रं सौम्यः सोमाद्धि निर्मित इति परिवासनशकलमन्ववदधाति १५

इति त्रयोदशी कण्डिका ।

ओषधयः पूतिकाः क्वलास्तण्डुलाः पर्णवल्का इत्यातञ्चनविकल्पाः १ उ-च्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभाव ओषधीभिः २ आपो हविःषु जागृत यथा देवेषु जाग्रथ । एवमस्मिन्यज्ञे यजमानाय जागृतेत्ययस्पात्रे दारुपात्रे वाप आनीयादस्तमसि विष्णवे त्वा यज्ञायापि दधाम्यहम् । अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इति तेनापिदधाति । अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम् । तिरः पवित्रमतिनीता आपो धारय माति-गुरिति यजमानो जपति ३ यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वापिधानेऽनु-प्रविध्येत् ४ विष्णो हव्यं रक्षस्वेत्यनधो निदधाति ५ इमौ पर्णं च दर्भं च देवानां हव्यशोधनौ । प्रातर्वेषाय गोपाय विष्णो हव्यं हि रक्षसीति प्रज्ञातं शाखापवित्रं निदधाति ६ तयैव शाखया दर्भैर्वा सायंदोहवत्प्रातर्दोहाय वत्सानपाकरोति ७ उपधाय कपालानि सायंदोहवत्प्रातर्दोहं दोहयति । आतञ्चनापिधाने निधानं च निवर्तते । नासोमयाजी संनयेत्संनयेद्वा ८ नागतश्रीर्महन्द्रं यजेत । त्रयो वै गतश्रिय इत्युक्तम् ९ और्वो गौतमो भार-द्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् १० यो वा कश्चित् ११ ततः संप्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु । अपां रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिंल्लोक इति १२ परिस्तरणीमेतामेके समामनन्ति १३ उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन्परिस्तृणाति १४ उदगग्राः पश्चात्पुरस्ताच्च १५ एतत्कृत्वोपवसति १६ अग्न्यन्वाधानं वत्सापाकरणमिध्माबर्हिर्वेदो वेदिः । प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूत

आप्यलेपं निनीयोत्तरं परिगृह्णीयात् । परिस्तरणं च । पूर्वेद्युरमावास्यायां पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः १७ सद्यो वा सद्यस्कालायां सर्वं क्रियते १८

इति चतुर्दशी कण्डिका इति चतुर्थः पटलः

उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः १ चत्वार ऋत्विजः २ पूर्ववदग्नीन्परिस्तृणाति यद्यपरिस्त्रीर्णा भवन्ति ३ कर्मणे वां देवेभ्यः शकेयमिति हस्तावनिज्य यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततामुलपराजीं स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तरां च ४ दक्षिणेनाहवनीयं ब्रह्मयजमानयोरासने प्रकल्पयति पूर्वं ब्रह्मणोऽपरं यजमानस्य ५ उत्तरेण गार्हपत्याहवनीयौ दर्भान्संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि ६ स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि ७ तान्युत्तरेणावशिष्टानि ८ अन्वाहार्यस्थालीमश्मानमुपवेषं प्रातर्दोहपात्राणीति ९ प्रणीताप्रणयनं पात्रसंसादनात्पूर्वमेके समामनन्ति । खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा १० एतेषां वा वृक्षाणामेकस्य स्रुचः कारयेत् ११ बाहुमात्र्योऽरत्निमात्र्यो वाग्राग्रास्त्वक्तोबिला हंसमुख्यः १२ स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि १३ वारणान्यहोमार्थानि भवन्ति १४

इति पञ्चदशी कण्डिका

अत्र पूर्ववत्पवित्रे करोति यदि न संनयति १ संनयतस्तु ते विभवतः २ वानस्पत्योऽसि देवेभ्यः शुन्धस्वेति प्रणीताप्रणयनं चमसमद्भिः परिक्षालयति तूष्णीं कंसं मृन्मयं च । कंसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठाकामस्य गोदोहनेन पशुकामस्य । अपरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन्को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि तस्मै वो गृह्णामि पोषाय व इत्यप आनयति ३ अपो गृह्णन्ग्रहीष्यंश्च पृथिवीं मनसा ध्यायति ४ उपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति ५ सर्वत्र प्रसव उक्ते करोति ६ प्रणीयमानासु

वाचं यच्छतोऽध्वर्युर्यजमानश्चा हविष्कृतः ७ को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञं संसादयन्तु नः । इरं मदन्तीर्घृतपृष्ठा उदाकुः सहस्रपोषं यजमाने न्यञ्चतीरिति समं प्राणैर्धारयमाणः स्फेनोपसंगृह्या-विषिञ्चन्हरति ८ पृथिवीं च मनसा ध्यायति ९ को वो युनक्ति स वो युनक्तित्युत्तरेणाहवनीयमसंस्पृष्टा दर्भेषु सादयति १० नेङ्गयन्ति नेलयन्त्या संस्थातोर्दर्भैरभिच्छाद्य ११ संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति सपवित्रेण पाणिना पात्राणि संमृश्य १२

इति षोडशी कण्डिका ।

वानस्पत्यासि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते । वेषाय त्वेति शूर्पम् १ प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते २ प्रवसत्यग्ने हविर्निर्वप्स्यामीति ३ उर्वन्त-रिक्षमन्विहीति शकटायाभिप्रव्रजति ४ अपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा ५ धूरसीति दक्षिणां युगधुरमभिमृशत्युत्तरां वा ६ त्वं देवानामसि सस्नितममित्युत्तरामीषामा-लभ्य जपति ७ विष्णुस्त्वाक्रंस्तेति सव्ये चक्रे दक्षिणं पादमत्याधायाहुत-मसि हविर्धानमित्यारोहति ८ उरु वातायेति परीणाहमपच्छाद्य मित्रस्य त्वा चक्षुषा प्रेक्ष इति पुरोडाशीयान्प्रेक्षते ९ निरस्तं रक्षो निरस्तोऽघशंस इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्योर्जाय वः पयो मयि धेहीत्यभिमन्त्र्य द-शहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्निहोत्रहवण्या हवींषि नि-र्वपति तया वा पवित्रवत्या १० व्रीहीन्यवान्वा ११ यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं निर्वपामीति त्रिर्य-जुषा तूष्णीं चतुर्थम् १२

इति सप्तदशी कण्डिका

एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्याम् । इन्द्राग्निभ्यामित्य-मावास्यायाम् १ चतुरो मुष्टिन्निरुप्य निरुप्तेष्वन्वोप्येदं देवानामिति निरु-प्तानभिमृशति । इदमु नः सहेत्यवशिष्टान् २ स्फात्यै त्वा नारात्या इति निरुप्तानेवाभिमन्त्र्येदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्य-

मिति प्राङ् प्रेक्षते ३ सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते । वैश्वानरं ज्योतिरित्याहवनीयं स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानभिमन्त्र्यं दृंहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरोह्योर्वन्तरिक्षमन्विहीति हरति ४ अदित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथादेवतमुपसादयति ५ आहवनीयं वा यद्याहवनीये श्रपयति ६ यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्यां सर्वाञ्छकटमन्त्राञ्जपेत् ७

इत्यष्टादशी कण्डिका इति पञ्चमः पटलः

सशूकायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये वो जुष्टं प्रोक्षामीति यथादेवतं हविस्त्रिः प्रोक्षन्नाग्निमभिप्रोक्षेत् १ यं द्विष्यात्तस्याभिप्रोक्षेत् २ उत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय देवस्य त्वा सवितुः प्रसव इति कृष्णाजिनमादायावधूतं रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ३ अदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति ४ पुरस्तात्प्रतीचीं भसदमुपसमस्यति ५ अनुत्सृजन्कृष्णाजिनमधिषवणमसीति तस्मिन्नुलूखलमधिवर्तयति ६ अनुत्सृजन्नुलूखलमग्नेस्तनूरसीति तस्मिन्हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थम् ७ अद्रिरसि वानस्पत्य इति मुसलमादाय हविष्कृदेहीति त्रिरवहन्ति । अनवघ्नन्वा हविष्कृतं ह्वयति ८ हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य ९ प्रथमं वा सर्वेषाम् १० अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति ११

इत्येकोनविंशी कण्डिका

उच्चैः समाहन्तवा इति संप्रेष्यति १ कुटरुरसि मधुजिह्व इत्याग्नीध्रोऽश्मानमादायेषमावदोर्जमावदेति दृषदुपले समाहन्ति २ द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नवकृत्वः संपादयति ३ सावित्रेण वा शम्यामादाय तया समाहन्ति ४ वर्षवृद्धमसीति पुरस्ताच्छूर्पमुपोहत्युत्तरतो वा ५ वर्षवृद्धा स्थेत्यभिमन्त्र्य प्रति त्वा वर्षवृद्धं वेत्त्वित्युद्वपति ६ परापूतं रक्षः परापूता अरातय इत्युत्करे परापुनाति ७ प्रविद्धं रक्षः पराध्माता अमित्रा इति तुषा-

न्प्रस्कन्दतोऽनुमन्त्रयते ८ मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागो ऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशम् ९ हस्तेनोपवपतीति बह्वृचब्राह्मणम् १० अद्भिः कपालं संस्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य वायुर्वो वि विनक्त्विति विविच्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान्प्रस्कन्दयित्वादब्धेन वश्चक्षुषावपश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाशिषमाशास इत्यवेक्ष्य त्रिष्फलीकर्तवा इति संप्रेष्यति ११ या यजमानस्य पत्नी साभिद्रुत्यावहन्ति १२ यो वा कश्चिदविद्यमानायाम् १३

इति विंशी कण्डिका

देवेभ्यः शुन्धध्वं देवेभ्यः शुन्ध्यध्वं देवेभ्यः शुम्भध्वमिति सुफलीकृतान्करोति । तूष्णीं वा १ प्रक्षाल्य तुण्डुलांस्त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयमापस्तत्प्रवहतादित इत्युत्करे त्रिर्निनयति २ अत्र कृष्णाजिनस्यादानादि प्रागधिवर्तनात्कृत्वा दिव स्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बां शम्यां निधाय धिषणासि पर्वत्येति शम्यायां दृषदमत्याधाय धिषणासि पार्वतेयीति दृषद्युपलामत्यादधाति ३ पूर्ववदनुत्सर्गः ४ अंशव स्थ मधुमन्त इति तण्डुलानभिमन्त्र्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् ५ प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वापानाय त्वा व्यानाय त्वेति संततं पिनष्टि ६ दीर्घामनु प्रसितिमायुषे धामिति प्राचीमन्ततोऽनुप्रोह्य देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वादब्धेन वश्चक्षुषावेक्ष इत्यवेक्ष्यासंवपन्ती पिंषाणूनि कुरुतादिति संप्रेष्यति ७ दासी पिनष्टि पत्नी वा ८ अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ९

इत्येकविंशी कण्डिका    इति षष्टः पटलः

आहवनीये गार्हपत्ये वा हवींषि श्रपयति १ धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय रक्षसः पाणिं दहाहिरसि बुध्निय इत्यभिमन्त्र्यापाग्नेऽग्निमामादं जहीति गार्हपत्यात्प्रत्यञ्चावङ्गारौ निर्वर्त्य निष्क्रव्यादं सेधेति तयोरन्यतरमुत्तरमपरम-

वान्तरदेशं निरस्या देवयजं वहेति दक्षिणमवस्थाप्य ध्रुवमसीति तस्मिन्नध्यमं पुरोडाशकपालमुपदधाति २ निर्दग्धं रक्षो निर्दग्धा अरातय इति कपाले ऽङ्गारमत्याधाय धर्त्रमसीति पूर्वं द्वितीयं संस्पृष्टम् । धरुणमसीति पूर्वं तृतीयम् । चिदसि विश्वासु दिक्षु सीदेति मध्यमाद्दक्षिणम् । परिचिदसि विश्वासु दिक्षु सीदेति मध्यमादुत्तरम् ३ यथायोगमितराणि ४

इति द्वाविंशी कण्डिका

मरुतां शर्धोऽसीति षष्ठम् । धर्मासीति सप्तमम् । चित स्थेत्यष्टमम् १ एवमुत्तरं कपालयोगमुपदधाति २ अपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्याभिनिधाय निर्दग्धं रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति तस्मादपरं धरुणमसीति तस्मात्पूर्वं यथायोगमितराणि ३ तस्यतस्याङ्गुल्याभिनिधानमङ्गाराधिवर्तनं च वाजसनेयिनः समामनन्ति ४ चित स्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा ५ भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति ६

इति त्रयोविंशी कण्डिका इति सप्तमः पटलः

प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं संवपामीति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम् १ संवपन्वाचं यच्छति तामभिवासयन्विसृजते २ प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिः संयौति ३ अन्या वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत् ४ स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीयाद्भिः परि प्रजाता इति तप्ताभिरनुपरिप्लाव्य जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरोऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादेवतमभिमृशतीदमग्नेरित्याग्नेयम् । इदमग्नीषोमयोरित्यग्नीषोमीयम् ५ इदमहं सेनाया अभीत्वर्यै मुखमपोहामीति वेदेन कपालेभ्योऽङ्गारानपोह्य घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयति ६ एवमुत्तरमुत्तरेषु ७ एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ८

इति चतुर्विंशी कण्डिका

समानजातीयेन कर्मणैकैकमपवर्जयति १ यानि विभवन्ति सकृत्तानि क्रियन्ते २ उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयति ३ अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति ४ यावन्तं वा मन्यते ५ तं न सत्रा पृथं करोतीत्येके ६ त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन् ७ अन्तरितं रक्षोऽन्तरिता अरातय इति सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वा देवस्त्वा सविता श्रपयत्वित्युल्मुकैः परितपति ८ अग्निस्ते तनुवं मातिधागिति दर्भैरभिज्वलयति ज्वालैर्वा ९ अविदहन्तः श्रपयतेति वाचं विसृजते १० आग्नीध्रो हवींषि सुशृतानि करोति ११ सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति १२ अत्र वा वाचं विसृजेत् १३ अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लोखा लिखति प्राचीरुदीचीर्वा १४ तास्वसंस्यन्दयंस्त्रिर्निनयति प्रत्यगपवर्गमेकताय स्वाहेत्येतैः प्रतिमन्त्रम् १५ निनीय वाभितपेदभितपेत् १६

इति पञ्चविंशी कण्डिका

इति प्रथमः प्रश्नः

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादायेन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्र्य हरस्ते मा प्रतिगामिति दर्भेण संमृज्यापरेणाहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति १ यथासन्नानि हवींषि संभवेदेवं तिरश्चीम् २ वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी सार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिं त्रिः संमाष्टर्युपरिष्टाद्वा ३ पूर्वार्धाद्वेदेर्वितृतीयदेशात्स्तम्बयजुर्हरति ४ पृथिव्यै वर्मासीति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिन्स्फ्येन प्रहृत्यापहतोऽररुः पृथिव्या इति स्फ्येन सतृणान्पांसूनपादाय व्रजं गच्छ गोस्थानमिति हरति । वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते यजमानं वा ५ बधान देव सवितरित्युत्तरतः पुरस्ताद्वितृतीयदेश उदग्द्विपदे ऽपरिमिते वा वेदेर्निवपति ६ स उत्करः ७ अररुस्ते दिवं मा स्कानिति न्युप्तमाग्नीध्रो ऽञ्जलिनाभिगृह्णाति ८ एवं द्वितीयं तृतीयं च हरति ९ तूष्णीं चतुर्थं हरन्सर्वं दर्भशेषं हरति १०

इति प्रथमा कण्डिका

अपारुरुमदेवयजनं पृथिव्या इति द्वितीये प्रहरणोऽररुर्द्यां मा पप्तदिति तृतीये । अपहतोऽररुः पृथिव्यै देवयजन्या इति द्वितीयेऽपादानोऽपहतोऽररुः पृथिव्या अदेवयजन इति तृतीये १ अवबाढं रक्ष इति द्वितीये निवपन आग्नीध्रो-ऽभिगृह्णात्यवबाढोऽघशंस इति तृतीयेऽवबाढा यातुधाना इति चतुर्थे २ द्रप्सस्ते द्यां मा स्कानिति खनिं प्रत्यवेक्ष्य स्फ्येन वेदिं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रा इति पश्चादादित्या इत्युत्तरतः ३ अपारुरुमदेवयजनं पृथिव्या अदेवयजनो जहीति स्फ्येनोत्तमां त्वचमुद्धन्ति ४ समुद्धतस्याग्नीध्र उत्करे त्रिर्निवपति ५ इमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामदित्या उपस्थे । इमां देवा अजुषन्त विश्वे राय-स्पोषा यजमानं विशन्त्विति संप्रेष्यति ६ देवस्य सवितुः सव इति खनति द्व्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां यावत्पार्ष्ण्याः शुक्लं तावतीं पृथमात्रीं रथवर्त्ममात्रीं सीतामात्रीं प्रादेशमात्रीं वा पुरीषवतीम् ७ नैता मात्रा अतिखनति ८ दक्षिणतो वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा ९

इति द्वितीया कण्डिका

प्राञ्चौ वेद्यंसावुन्नयति प्रतीची श्रोणी १ पुरस्तादंहीयसी पश्चात्प्रथीयसी म-ध्ये संनततरा भवति २ यन्मूलमतिशेते स्फ्येन तच्छिनत्ति न नखेन ३ यत्पुरीषमतिशेत उत्करे तन्निवपति ४ आहार्यपुरीषां पशुकामस्य कुर्यात् ५ यत्प्राक् खननात्तत्कृत्वा यदाहरेत्तन्मन्त्रेण खनेत् ६ ब्रह्मन्नुत्तरं म्परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णात्यृतमसीति दक्षिणतः ऋतसदनमसीति पश्चात् । ऋतश्रीरसीत्युत्तरतः ७ विपरीतौ परिग्राहावेके समामनन्ति ८ धा असि स्वधा असीति प्रतीचीं वेदिं स्फ्येन योयुप्यते ९ उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते १० पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहीति ११ अपि वा न संप्रैषं ब्रूयात् १२ प्रोक्षणीरभिपूर्योदञ्चं स्फ्यमपोह्य दक्षिणेन स्फ्यमसंस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन्सादयत्यृतसधस्थेति द्वेष्यं मनसा ध्यायन् १३ शतभृष्टिरसि वानस्प-

त्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन् १४ नानवनिज्य हस्तौ पात्राणि पराहन्ति १५ हस्तावपवनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृशन् १६ उत्तरेणाहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति दक्षिणमिध्ममुत्तरं बर्हिः १७

इति तृतीया कण्डिका इति प्रथमः पटलः

पत्नीसंनहनमेके पूर्वं समामनन्ति स्रुक्संमार्जनमेके १ घृताचीरेताग्निर्वो ह्वयति देवयज्याया इति स्रुच आदाय प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यानिशिता स्थ सपत्नक्षयणीरित्यभिमन्त्र्य वेदाग्राणि प्रतिविभज्याप्रतिविभज्य वा तैः स्रुचः संमार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाणः २ उपभृतमेवोदीचीमित्येके ३ गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तरतोऽभ्याकारं सर्वतो बिलमभिसमाहारम् । मूलैर्दण्डम् ४ वाचं प्राणमिति जुहूमग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीम् । मूलैर्द-ण्डम् ५ चक्षुः श्रोत्रमित्युपभृतमुदीचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीम् । मूलैर्दण्डम् ६ प्रजां योनिमिति यथा स्रुवमेवं ध्रुवाम् ७ रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाहं संमार्ज्मीति प्राशित्र-हरणं तूष्णीं वा ८ न संमृष्टान्यसंमृष्टैः संस्पर्शयति ९ अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीति पुनः प्रतितप्य प्रोक्ष्याग्रेणोत्करं दर्भेषु सादयति जघनेन वा १० स्रुक्संमार्जनान्यद्भिः संस्पर्श्य ११

इति चतुर्थी कण्डिका

दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं तेन वयं सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यग्नौ प्रहरति यस्मिन्प्रतितपत्युत्करे वा न्यस्यति १ आशासाना सौमनसमित्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां पत्नीं संनह्यति तिष्ठन्तीं वा २ वाचयतीत्येके ३ मौञ्जेन दाम्नान्यतरतः पाशेन योक्त्रेण वाभ्यन्तरं वाससः ४ न वासोऽभिसंनह्यति । अभिसंनह्यतीत्येके ५ उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थाप्योपोत्थायाग्ने गृहपत उप मा ह्वयस्वेति गार्हपत्यमुपतिष्ठते ६ देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीरिति देवपत्नीरुपतिष्ठते ७

तस्माद्देशादपक्रम्य सुप्रजसस्त्वा वयमिति दक्षिणत उदीच्युपविशति ८ इन्द्राणीवाविधबा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति जपति ९ युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति १० बह्वाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते ११

इति पञ्चमी कण्डिका

पूषा ते बिलं विष्यत्विति सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्नावाज्यं विलाप्यादितिरस्यच्छिद्रपत्त्रेत्याज्यस्थालोमादाय महीनां पयोऽस्योषधीनां रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यं निरुप्येदं विष्णुर्विचक्रम इति दक्षिणाग्नावधिश्रित्येषे त्वेति दक्षिणार्धे गार्हपत्यस्याधिश्रित्योर्जे त्वेत्यपादाय वेदेनोपयम्य पत्न्या उपहरति १ तत्सा निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते महीनां पयोऽसीति २ तेजोऽसीत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ३ पत्न्यभावे तेजआदि लुप्यते गार्हपत्येऽधिश्रयणम् ४ तेजसे त्वेत्यपादाय तेजोऽसि तेजोऽनुप्रेहीति हरति । अग्निस्ते तेजो मा विनैदित्याहवनीयेऽधिश्रित्याग्नेर्जिह्वासीति स्फ्यस्य वर्त्मन्सादयति ५ आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते ६ अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति ७

इति षष्ठी कण्डिका

शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयम् १ पूर्ववदाज्यलिप्ताभ्यां प्रोक्षणीरुत्पूयानिष्कासिना स्रुवेण वेदमुपभृतं कृत्वान्तर्वेद्याज्यानि गृह्णाति २ समंबिलं धारयमाणो जुह्वां मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाम् ३ चतुर्जुह्वामष्टावुपभृति चतुर्ध्रुवायाम् ४ पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः ५ दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके ६ भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायाम् ७ शुक्रं त्वा शुक्रायामिति त्रिभिः पञ्चानां त्वा वातानामिति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रम् ८ पञ्चानां त्वा दिशां पञ्चानां त्वा पञ्चजना-नां पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णा-मि धामासि प्रियं देवानामनाधृष्टं देवयजनं देववीतये त्वा गृह्णामीति चरोस्त्वा

पञ्चबिलस्येति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा प्रतिमन्त्रम् ९ शेषेण ध्रुवायां चतुः पञ्चकृत्वो वा प्रतिमन्त्रम् १० नोत्कर आज्यानि साद-यति ११ नान्तर्वेदि गृहीतस्य प्रतीचीनं हरन्ति १२

इति सप्तमी कण्डिका इति द्वितीयः पटलः

पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्रस्येध्मं कृष्णोऽस्याखरेष्ठ इति त्रिः प्रोक्षति । वेदिरसीति त्रिर्वेदिं बर्हिरसीति त्रिर्बर्हिः । अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम् १ स्रुच्यग्राण्युपपाय्य मूलान्युपपाययति २ पोषाय त्वेति सहस्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युद्य प्रोक्षणीशेषं स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संततं निनीय पूषा ते ग्रन्थिं विष्यत्विति ग्रन्थिं विस्रंसयति ३ प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति ४ विष्णो स्तूपोऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते नोद्यौति न प्रयौति न प्रतियौति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि ५ अयं प्राणश्चाक्पानश्च यजमानमपिगच्छताम् । यज्ञे ह्यभूतां पोतारी पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामीति तस्मि-न्पवित्रे अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति यजमानाय प्रयच्छति । यजमानो ब्रह्मणे ६ ब्रह्मा प्रस्तरं धारयति यजमानो वा ७

इत्यष्टमी कण्डिका

दर्भैर्वेदिमन्तर्धाय दक्षिणतः संनहनं स्तृणात्यक्ष्णया वा १ ऊर्णाम्रदसं त्वा स्तृणामीति बर्हिषा वेदिं स्तृणाति बहुलमनतिदृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा त्रिधातु पञ्चधातु वा २ अग्रैर्मूलान्यभिच्छादयति ३ धातौधातौ मन्त्र-मावर्तयति ४ प्रस्तरपाणिः संस्पृष्टान्परिधीन्परिदधाति गन्धर्वोऽसि विश्वा-वसुरित्येतैः प्रतिमन्त्रमुदगग्रं मध्यमं प्रागग्रावितरौ ५ आहवनीयमभ्यग्रं दक्षिणमवाग्रमुत्तरम् ६ सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीयमभिमन्त्र्योपर्या-हवनीये प्रस्तरं धारयन्नग्निं कल्पयति ७ अनूयाजार्थे प्राची उल्मुके उदूह-तीति वाजसनेयकम् ८ मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावाद-धाति ९ वीतिहोत्रं त्वा कव इति दक्षिणां समिदस्यायुषे त्वेत्युत्तराम् १० तूष्णीं वा ११ समावनन्तर्गर्भौ दर्भौ विधृती कुरुते १२ विशो यन्त्रे स्थ

इत्यन्तर्वेद्युदगग्रे निधाय वसूनां रुद्राणामादित्यानां सदसि सीदेति तयोः प्रस्तरमत्यादधाति १३ अभिहततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः १४ जुहूरसि घृताचीत्येतैः प्रतिमन्त्रमनूचीरसंस्पृष्टाः स्रुचः प्रस्तरे सादयति १५

इति नवमी कण्डिका

अपि वा जुहूमेव प्रस्तरे १ समं मूलैर्जुह्वा दण्डं करोति । उत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः । उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योः २ ऋषभोऽसि शाक्वरो घृताचीनां सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति दक्षिणेन जुहूं स्रुवं सादयत्युत्तरेणोत्तरेण वा ध्रुवाम् ३ एता असदन्निति स्रुचोऽभिमन्त्र्य विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानीत्याज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्र्याप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरम् ४ यस्त आत्मा पशुषु प्रविष्टो देवानां निष्ठामनु यो वितस्थे । आत्मन्वान्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति प्रातर्दोहम् ५ स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त इति पात्र्यामुपस्तीर्यार्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामित्यपर्यावर्तयन्पुरोडाशमुद्वास्य ६

इति दशमी कण्डिका

वेदेन भस्म प्रमृज्य तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति पात्र्यां प्रतिष्ठापयति १ तूष्णीं यवमयम् २ इरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति स्रुवेण कपालानि प्रत्यज्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण कपालानि प्रत्यज्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण पुरोडाशमनक्ति स्वक्तमकूर्मपृषन्तमपरिवर्गमणिकाषम् ३ उपरिष्टादभ्यज्याधस्तादुपानक्ति ४ चतुर्होत्रा पौर्णमास्यां हवींष्यासादयेत्पञ्चहोत्रामावास्यायाम् ५ प्रियेण नाम्ना प्रियं सद आसीदेति यदन्यद्धविर्दार्शपूर्णमासिकेभ्यस्तदेतेनासादयेदिति विज्ञायते ६ अपरेण स्रुचः पुरोडाशावासादयति ७ उत्तरौ दोहौ ८ अपि वा मध्ये वेद्याः सांनाय्यकुम्भ्यौ संदधाति पूर्वं शृतमपरं दधि । अथैने व्युदूहति

दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां दधि ९ अयं वेदः पृथिवी- मन्वविन्दद्गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोत्वित्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय वेद्यन्तान्परिस्तीर्य होतृषदनं कल्पयित्वा सामिधेनीभ्यः प्रतिपद्यते १०

इत्येकादशी कण्डिका इति तृतीयः पटलः

अग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति समिध्यमानायानुब्रूहीति वा १ पञ्चदश सामिधेनीरन्वाह २ त्रींस्तचानित्युक्तम् ३ प्रणवेप्रणवे समिधमा- दधाति ४ सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते । प्रतिह्रसमानासु प्र- कृतिवत् ५ समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य स- र्वमिध्मशेषमभ्यादधाति परिधानीयायां वा ६ वेदेनाग्निं त्रिरुपवाज्य स्रुवे- ण ध्रुवाया आज्यमादाय वेदेनोपयम्यासीन उत्तरं परिधिसंधिमन्ववहृत्य प्र- जापतिं मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं संततं ज्योतिष्मत्याघारमाघारयन्स- र्वाणीध्मकाष्ठानि संस्पर्शयति ७ आघारयोर्वदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा ८ स्रुवेणाज्यस्थाल्या आज्यमादायाप्यायतां ध्रुवा घृतेनेत्यवदायावदाय ध्रुवामाप्याययतीति सार्वत्रिकम् ९ अग्नीत्परि- धींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति १०

इति द्वादशी कण्डिका

इध्मसंनहनैः सहस्फ्यैर्ऋतेस्फ्यैर्वाग्नीध्रोऽनुपरिक्रामं परिधीन्यथापरिधितम- न्वग्रं त्रिस्त्रिः संमृज्याग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निं प्राञ्चम् १ भुवनमसीत्यग्रेण ध्रुवां जुहूं वाञ्जलिं कृत्वा जुह्वेहीति जुहूमादत्त उपभृदेही- त्युपभृतम् २ सुयमे मे अद्य घृताची भूयास्तं स्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति ३ मुखतोऽभिहृत्य मुखत उपावहरति ४ सर्वत्रैवम- त्याधानोपावहरणे भवतः ५ न च संशिञ्जयति नाभिदेशे च स्रुचौ धारयति ६ अग्नाविष्णू मा वामवक्रमिषमित्यग्रेण स्रुचोऽपरेण मध्यमं परिधिमनव- क्रामं प्रस्तरं दक्षिणेन पदा दक्षिणातिक्रामत्युदक् सव्येन ७ एतद्वा विपरी- तम् ८ विष्णो स्थानमसीत्यवतिष्ठते ९ अन्तर्वेदि दक्षिणः पादो भवत्य-

वघ्रः सव्यः १० अथोर्ध्वस्तिष्ठन्दक्षिणं परिधिसंधिमन्ववहृत्य ११

इति त्रयोदशी कण्डिका

समारभ्योर्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुं संततं ज्योतिष्मत्याघारयन्सर्वाणी-ध्मकाष्ठानि संस्पर्शयति १ यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्येत्यु-क्तम् २ ऊर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्य ३ व्युषाणवा ४ न्यञ्चं वृष्टि-कामस्य ५ द्वेष्यस्येत्येके ६ ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहुयात् ७ अपि वा नाघारयेत्पूर्वार्धे मध्ये पश्चार्धे वा जुहुयात् ८ हुत्वा-भिप्राणिति ९ बृहद्भा इति स्रुचमुद्गृह्य पाहि माग्ने दुश्चरितादा मा सुचरिते भजेत्यसंस्पर्शयन्स्रुचौ प्रत्याक्रामति १० एते एवाक्रमणप्रत्याक्रमणे मन्त्र-वती भवतः ११ मखस्य शिरोऽसीति जुह्वा ध्रुवां द्विस्त्रिर्वा समनक्ति १२ उन्नीतं राय इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहेति जुहूमभि-घार्य जुह्वोऽपादाय यज्ञेन यज्ञः संतत इति ध्रुवां प्रत्यभिघार्यायतने स्रुचौ सादयित्वा १३

इति चतुर्दशी कण्डिका

क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवः सुवर्विष्णो स्थाने तिष्ठामी-तीध्मसंनहनानि स्फ्य उपसंगृह्य वेद्याश्च तृणमव्यन्तमादायोत्तरतः प्रवराया-वतिष्ठेते पूर्वोऽध्वर्युरपर आग्नीध्रः १ इध्मसंनहनान्याग्नीध्रोऽन्वारभ्य क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीति मन्त्रं संनमति २ ब्रह्मन्प्रवरा-याश्रावयिष्यामीति ब्रह्माणमामन्त्र्याश्रावयो श्रावय श्रावयोमाश्रावयेति वा-श्रावयति ३ अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन्स्फ्यं संमार्गांश्च धारयन्प्रत्याश्रावयति ४ आग्नीध्रे सोमे ५ सर्वत्रैवमाश्रुतप्रत्या-श्रुते भवतः ६

इति पञ्चदशी कण्डिका इति चतुर्थः पटलः

अनपव्याहरन्तः प्रचरन्ति १ आश्रावयिष्यन्नान्यदाश्रावणाद्ब्रूयादाश्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात् । प्रत्याश्राविते नान्यदध्वर्युर्यजेति वचनाद्य-

जेत्युक्ते होता नान्यद्वषट्कारात् २ यद्यन्यद्ब्रूयात्पुनरेवाश्रावयेत् ३ व्याहृतीर्वा जपेत् ४ ऊर्ध्वज्ञुमासीनं होतारं वृणीतेऽग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्ठद्भरतवदमुवदमुवदिति यथार्षेयो यजमानः ५ त्रीन्यथर्षि मन्त्रकृतो वृणीते ६ अपि वैकं द्वौ त्रीन्पञ्च ७ न चतुरो वृणीते न पञ्चातिप्रवृणीते ८ इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता ९ पुरोहितस्य प्रवरेण राजा प्रवृणीते १० ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्राबितार इति प्रवरशेषमाह ११ अपि वा नार्षेयं वृणीते । मनुवदित्येव ब्रूयात् १२ सीदति होता १३ होतुरुपांशु नाम गृह्णाति मानुष इत्युच्चैः १४ वेद्यां तृणमपिसृजति १५

इति षोडशी कण्डिका

घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽपरेणाघारसंभेदं पञ्च प्रयाजान्प्राचो यजति १ प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये २ सर्वान्वैकध्यम् ३ आश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं संप्रेष्यति । यज यजेतीतरान् ४ यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं न वसीयान्न पापीयानिति समानत्र तिष्ठन् ५ त्रीनिष्ट्वार्धमौपभृतस्य जुह्वामानीयोत्तराविष्ट्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयत्युपभृतमन्ततः ६ न हवींष्यभिघारयेद्द्वेष्यस्य । आयतने स्रुचौ सादयति ७

इति सप्तदशी कण्डिका इति पञ्चमः पटलः

आग्नेयः सौम्यश्चाज्यहविषावाज्यभागौ चतुर्गृहीताभ्याम् १ जमदग्नीनां तु पञ्चावत्तमप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत सर्वत्र २ अवद्यन्नमुष्मा अनुब्रूहीति पुरोऽनुवाक्यां संप्रेष्यति । अवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्रावितेऽमुं यजेति याज्यामिति सार्वत्रिकम् ३ उत्तरार्धपूर्वार्धेऽग्नये जुहोति ४ दक्षिणार्धपूर्वार्धे सोमाय समं पूर्वेण ५ उभे ज्योतिष्मति ६ पूर्वमाज्यभागं प्रति स्रुचावात्ते न निदधात्या स्विष्टकृतः ७ आज्यभागावन्तरेणेतरा आहुतीर्जु-

होति ८ प्रत्याक्रम्य जुह्वामुपस्तीर्य मा भेर्मा संविक्था मा त्वा हिंसिषं मा ते तेजोऽपक्रमीत् । भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिंसीरित्याग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरीचीनमवद्यति । पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः । पश्चार्धात्तृतीयं पञ्चावत्तिनः ९ असंभिन्दन्मांससंहिताभ्यामङ्गुलीभ्यामङ्गुष्ठेन च पुरोडाशस्यावद्यति १०

इत्यष्टादशी कण्डिका

स्रुवेणाज्यसांनाय्ययोः १ आनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निदध्यात् । मध्यादपरमवदाय पश्चार्धे स्रुचः २ पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् ३ अपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वानुजावरो यो वा बुभूषेत् ४ अथ यदि पुरोहितः पुरोधाकामो वा यजेत पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निधाय पूर्वार्धेऽग्नेर्जुहुयात् ५ अवदानान्यभिघार्य यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघार्याग्नयेऽनुब्रूह्यग्निं यजेति संप्रैषौ ६ आज्यं प्रश्चोत्यापिदधदिवाप्रदक्षिणन्हुत्वाज्येनान्ववश्चोतयति ७ आघारसंभेदेनाहुतीः प्रतिपादयति ८ स्रुच्यमाघारमभिजुहोति पूर्वांपूर्वां संहिताम् ९ यं द्विष्यात्तं व्यृषन्मनसाहुतीर्जुहुयात् १० यदा वीतार्चिर्लेलायतीवाग्निरथाहुतीर्जुहोति ११ आज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा १२ प्रधानमेवोपांशु १३ विष्णुं बुभूषन्यजेत १४

इत्येकोनविंशी कण्डिका

अग्नीषोमौ भ्रातृव्यवान् १ आग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति २ समवदाय दोहाभ्याम् ३ दध्नोऽवदाय शृतस्यावद्यत्येतद्वा विपरीतम् । सर्वाणि द्रवाणि स्रुङ्मुखेन जुहोति ४ स्रुवेण पार्वणौ होमौ । ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम् । प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याम् । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम् ।

अपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्यायाम् ५ नारिष्ठान्होमाञ्जुहोति दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्राशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् । यं वां देवा अकल्पयन्नूर्जो भागं शतक्रतू । एतद्वां तेन प्रीणाति तेन तृप्यतमंहहौ ॥ अहं देवानां सुकृतामस्मि लोके ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेयम् ॥ अदारसृद्भवत देव सोमास्मिन्यज्ञे मरुतो मृडता नः । मा नो विददभिभामो अशस्तिर्मा नो विदद्वृजना द्वेष्या या ६

इति विंशी कण्डिका

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानां हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । सं ते मनसा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहेत्येतैः प्रतिमन्त्रम् १ एष उपहोमानां कालोऽनन्तरं वा प्रधानात्प्राग्वा समिष्टयजुषः २ जुह्वामुपस्तीर्य सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति । द्विः पञ्चावत्तिनः ३ दैवतसौविष्टकृतैडचातुर्धाकारणिकानामुत्तरमुत्तरं ज्यायः ४ द्विरभिघार्य न हविः प्रत्यभिघारयति ५ अग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेति संप्रैषो । उत्तरार्धपूर्वार्धे जुहोत्यसंसक्तामितराभिराहुतीभिः ६ प्रत्याक्रम्य जुह्वामप आनीय वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । स नः पितरं पितामहं प्रपितामहं स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहेत्यन्तःपरिधि निनयति निनयति ७

इत्येकविंशी कण्डिका इति षष्ठः पटलः इति द्वितीयः प्रश्नः

इडामेके पूर्वं समामनन्ति प्राशित्रमेके १ आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मा रूपुपाम यज्ञस्य शुद्धं स्विष्टमिदं हविरिति २ एवमुत्तरस्यावद्यति ३ उपस्तीर्य नाभिघारयत्येतद्वा विपरीतम् । अपि वोपस्तृणात्यभि च घारयति ४ अत्रैवास्य परिहरणप्राशनमेके समामनन्ति ५ इडापात्र उपस्तीर्य सर्वेभ्यो ह-

विर्भ्य इडां समवद्यति चतुरवत्तां पञ्चावत्तां वा ६ मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखामित्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति ७ संभेदाद्द्वितीयम् ८ पूर्वार्धाच्च यजमानभागमणुमिव दीर्घम् ९ तमाज्येन संतर्प्य ध्रुवाया उपोहति १० अपि वा दक्षिणार्धादवदाय यजमानभागमथ संभेदात् ११ एवमुत्तरस्यावद्यति १२

इति प्रथमा कण्डिका

अभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमतिक्रामत्यनुत्सृजन् १ होतेडयाध्वर्युं परिगृह्णाति २ अपि वा प्राचीमिडामपोह्य दक्षिणत आसीनः स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति ३ अपरमङ्क्त्वा पूर्वमेतद्वा विपरीतम् ४ उपसृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति ५ अध्वर्युः प्रथममवदानमवद्यति स्वयं होतोत्तरम् एतद्वा विपरीतम् ६ लेपादुपस्तरणाभिघारणे भवतः ७ द्विरभिघारयेत्पञ्चावत्तिनः । उपहूयमानामन्वारभेते अध्वर्युर्यजमानश्च । दैव्या अध्वर्यव उपहूता इत्यभिज्ञायोपहूतः पशुमानसानीत्यध्वर्युर्जपति । उपहूतोऽयं यजमान इत्यभिज्ञायैतमेव मन्त्रं यजमानः ८ उपहूतायामग्रेणाहवनीयं ब्रह्मणे प्राशित्रं परिहरति ९ तस्मिन्प्राशिते होतावान्तरेडां प्राश्नाति वाचस्पतये त्वा हुतं प्राश्नामि सदस्पतये त्वा हुतं प्राश्नामीति १० प्राशितायामिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणा इति यजमानपञ्चमा इडां प्राश्य ११

इति द्वितीया कण्डिका

वाग्यता आसत आ मार्जनात् १ मनो ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वाग्नेयं पुरोडाशं चतुर्धाकृत्वा बर्हिषदं करोति बर्हिषदं वा कृत्वा चतुर्धाकरोति २ तं यजमानो व्यादिशतीदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति ३ अग्नीत्प्रथमान्होतृप्रथमान्वा ४ इदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य स्थविष्ठमग्नीधे षडवत्तं संपादयति ५ सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयति ६ अपि वा द्विरुपस्तृणाति द्विरादधाति

द्विरभिघारयति ७ अग्नेराग्नीध्रमस्यग्नेः शामित्रमसि नमस्ते अस्तु मा मा हिंसीरित्याग्नीध्रो भक्षयति ८ वेदेन ब्रह्मयजमानभागौ परिहरति ९ पृथक् पात्राभ्यामितरयोः १० पृथिव्यै भागोऽसीति होता भक्षयत्यन्तरिक्षस्य भागो ऽसीत्यध्वर्युर्दिवो भागोऽसीति ब्रह्मा ११ दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति १२ क्षीरे भवतीत्येके १३ तमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य १४

इति तृतीया कण्डिका

दक्षिणसद्य उपहर्तवा इति संप्रेष्यति १ ये ब्राह्मणा उत्तरतस्तान्यजमान आह दक्षिणत एतेति २ तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति ३ प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति ४ हविः शेषानुद्वास्यापिसृज्योल्मुके ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्संमृड्ढीति संप्रेष्यति ५ अनुज्ञातो ब्रह्मणाग्नीध्रः समिधमादधात्येषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहेति ६ पूर्ववत्परिधीन्सकृत्सकृत्संमृज्याग्ने वाजजिद्वाजं त्वा ससृवांसं वाजं जिगिवांसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति सकृदग्निं प्राञ्चम् ७ इध्मसंनहनान्यद्भिः संस्पर्श्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिंसीरेत-दस्तु हुतं तव स्वाहेत्यग्नौ प्रहरत्युत्करे वा न्युअस्यति शालायां बलजायां परोगोष्ठे परोगव्यूतौ वा ८

इति चतुर्थी कण्डिका इति प्रथम पटलः

औपभृतं हुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाघारसंभेदं प्रतीचस्त्रीननूयाजान्यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान्यजेति प्रथमं संप्रेष्यति । यज यजेतीतरौ १ पूर्वार्धे प्रथमं समिधि जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमं संस्थापयन्नितरावनुसंभिद्य २ प्रत्याक्रम्यायतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति ३ वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूमुद्यच्छति । अथा सपत्नानिति सव्येनोपभृतं नियच्छति ४ उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति ५ ब्रह्म देवा अ-

वीवृधन्निति प्राचीं जुहूं प्रोहति ६ अथा सपत्नानिति सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरसित्वा प्रोद्यैनामभ्युदाहृत्य जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरम् ७ न प्रस्तरे जुहूं सादयति ८ संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावतामिति विधृतीभ्यां प्रस्तरमपादाय बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति ९

इति पञ्चमी कण्डिका

अक्तं रिहाणा इति जुह्वामग्रम् । प्रजां योनिमित्युपभृति मध्यम् । आप्यायन्तामाप ओषधय इति ध्रुवायां मूलम् । एवं त्रिः १ अपि वा दिव्यङ्क्ष्वेति जुह्वामग्रम् । अन्तरिक्षेऽङ्क्ष्वेत्युपभृति मध्यम् । पृथिव्यामङ्क्ष्वेति ध्रुवायां मूलम् २ एवं पुनः ३ अथापरम् । पृथिव्यै त्वेति ध्रुवायां मूलमन्तरिक्षाय त्वेत्युपभृति मध्यं द्विवे त्वेति जुह्वामग्रम् ४ आयुषे त्वेत्यक्तस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणीभ्यां क्प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्यासीन आश्राव्य प्रत्याश्राविते संप्रेष्यतीषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति ५ अनूच्यमाने सूक्तवाके मरुतां पृषतय स्थेति सह शाखया प्रस्तरमाहवनीये प्रहरति ६ न स्वाहाकरोति ७ न विधूनोति नावधूनोति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि नोदञ्चं प्रहरेत् ८ तिर्यञ्चं हस्तं धारयन्कर्षन्निवाहवनीये प्रहरति ९ न प्रतिशृणातीत्युक्तम् १० प्रथयित्वा प्रहरेद्यं कामयेत स्त्र्यस्य जायेतेति ११ आशीः प्रति प्रस्तरमवसृजति १२

इति षष्ठी कण्डिका

न्यञ्चं हस्तं पर्यावर्तयन् १ अग्नीद्गमयेति संप्रेष्यति २ त्रिरञ्जलिनाग्नीध्रोऽविष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति रोहितेन त्वाग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रम् ३ अथैनमाहाग्नीध्रोऽनुप्रहरेति ४ यत्प्रस्तरात्तृणमपात्तं तदनुप्रहरति स्वगा तनुभ्य इति ५ एतदेतदिति त्रिरङ्गुल्या निर्दिश्याग्निमभिमन्त्रयत आयुष्मा अग्नेऽस्यायुर्मे पाहीति ६ ध्रुवासीत्यन्तर्वेदि पृथिवीमभिमृशति ७ अथैनमाहाग्नीध्रः संवदस्वेति ८ अगानग्नीदित्यध्वर्युराह । अगन्नित्याग्नीध्रः । श्रावयेत्यध्वर्युः । श्रौषडित्याग्नीध्रः ९ मध्यमं परिधिमन्वारभ्य संप्रेष्यति

स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति १० ग्रनूच्यमाने शंयु-वाक ग्राहवनीये परिधीन्प्रहरति ११ यं परिधिं पर्यधत्था इति मध्यमम् । यज्ञस्य पाथ उपसमितमितीतरौ १२ उत्तरार्ध्यस्याग्रमङ्गारेषूपोहति १३ यजमानं प्रथतेति परिधीनभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय संस्रावभागा इति संस्रावेणाभिजुहोति १४ ग्रत्रैवर्त्विजो हविः शेषान्भक्षयन्ति १५

इति सप्तमी कण्डिका इति द्वितीयः पटलः

ग्राज्यलेपान्प्रक्षाल्य सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदं होता स्फ्यमाज्य-स्थालीमुदकमण्डलुं चाग्नीध्रः १ ग्राग्नीध्रप्रथमाः पत्नीः संयाजयिष्यन्तः प्र-त्यञ्चो यन्ति २ ग्रग्रेण गार्हपत्यं दक्षिणेनाध्वर्युः प्रतिपद्यत उत्तरेणेतरौ ३ ग्रग्नेर्वामपन्नगृहस्य सदसि सादयामीति कस्तम्भ्यां स्रुचौ सादयित्वा धुरि धुर्यौ पातमिति युगधुरोः प्रोहति ४ यदि पात्र्या निर्वपेदेताभ्यामेव यजुर्भ्यां स्फ्ये स्रुचौ सादयेत् ५ स्रुग्भ्यां स्रुवाभ्यां वा पत्नीः संयाजयन्ति ६ वेदमुपभृतं कृत्वा जुह्वा स्रुवेण वेत्येके ७ ग्रपरेण गार्हपत्यमूर्ध्वज्ञव ग्रासीना ध्वानेनोपांशु वा पत्नीः संयाजयन्ति ८ दक्षिणऽध्वर्युरुत्तर ग्राग्नीध्रो मध्य होता ९ ग्राज्येन सोमत्वष्टाराविष्ट्वा जाघन्या पत्नीः संयाजयन्त्याज्यस्य वा यथागृहीतेन १० सोमायानुब्रूहि सोमं यजेति संप्रैषावुत्तरार्धे जुहोति ११ एवमितरांस्त्वष्टारम् १२

इत्यष्टमी कण्डिका

देवानां पत्नीरग्निं गृहपतिमिति १ दक्षिणतस्त्वष्टारमुत्तरतो वा मध्येऽग्निं गृहपतिम् २ ग्राहवनीयतः परिश्रिते देवपत्नीरपरिश्रिते वा ३ राकां पुत्र-कामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ४ नित्यवदेके समा-मनन्ति ५ पुरस्ताद्देवपत्नीभ्य एता एके समामनन्ति । उपरिष्टाद्वा ६ पू-र्ववद्धोतुरङ्गुलिपर्वणी ग्रङ्क्तोपस्पृष्टोदकाय होतुर्हस्ते चतुर ग्राज्यबिन्दूनिडाम-वद्यति षडग्नीध ७ उपहूयमानामन्वारभन्तेऽध्वर्युराग्नीध्रः पत्नी च ८ उ-पहूतां प्राश्नीतो होताग्नीध्रश्च ९ ग्रत्र स्रुवेण संपत्नीयं जुहोति पत्न्यामन्वार-ब्धायां सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजा-नानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेतां स्वाहेति १० पुरस्ताद्देवप-

त्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वा । उपरिष्टाद्वा पिष्टलेपफलीकरणहो- माभ्याम् ११ दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति १२

इति नवमी कण्डिका

फलीकरणहोमं पूर्वमेतद्वा विपरीतम् । चतुर्गृहीत आज्ये फलीकरणानो- प्याग्नेऽदभ्धायोऽशीततनो इति जुहोति । एवं पिष्टलेपानुलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति १ या सरस्वती विशोभगीना तस्यै स्वाहा या सरस्वती वेशभगीना तस्यै स्वाहेन्द्रोपानस्यकेहमनसो वेशान्कुरु सुमन- सः सजातान्स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति २ वेदोऽसीति वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति ३ निर्द्विषन्तं निररातिं नुदेतीतरा प्रास्तंप्रास्तं प्र- तिनिरस्यति ४ तन्तुं तन्वन्निति वेदं होता गार्हपत्यात्प्रक्रम्य संततमाहवनी- यात्स्तृणात्या वा वेदेः ५ इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते ६ तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयनि ७ समायुषा सं प्रजयेत्यानीयमाने जपति ८ निनीय मुखं विमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृह- मेधिनी भूयासमिति ९

इति दशमी कण्डिका इति तृतीयः पटलः

यथेतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्वप्रायश्चित्तानि जुहोति १ ब्रह्म प्रतिष्ठा मनस इत्येषा । आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृ- ताहुतिरेतु देवान् । यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तं निधेतन । ततं म आप- स्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयं समुद्र उत विश्व- भेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः । उद्वयं तमसस्पर्युदु त्यं चित्रमिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः । अयासन्हव्यमूहिषेऽया नो धेहि भेषजम् । प्रजापत इत्येषा ।

इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा । भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा । दौरार्द्ध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा । ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा । अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजम् । यदस्मिन्यज्ञेऽन्तरगाम मन्त्रतः कर्मतो वा । अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन २

इत्येकादशी कण्डिका

आज्ञातमनाज्ञातममतं च मतं च यत् । जातवेदः संधेहि त्वं हि वेत्थ यथातथम् । यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु । यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि । स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः । आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम । अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम् । पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम् । यत्पाकत्रा मनसा दीवदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति । यद्विद्वांसो यदविद्वांसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताम् १

इति द्वादशी कण्डिका

अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मन्निषद्य । सन्वन्सनिं सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता पुरुत्रा । तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या । यो भूतानामुद्बुध्यस्वाग्न उदुत्तममिति व्याहृतिभिर्विहृताभिः समस्ताभिश्च हुत्वा १ पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति २ मध्यमे स्वाहाकारे बर्हिरनुप्रहरति

३ यदि यजमानः प्रवसेत्प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् ४ अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिंसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्न इति होतृषदनैर्वेदिमभिस्तीर्य को वोऽयोक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि प्रणीता आसाद्य विमुञ्चति ५ यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुत्कर उपवेषं स्थविमत उपगूहति ६

इति त्रयोदशी कण्डिका

यद्यभिचरेद्योपवेषे शुक् सामुमृच्छतु यं द्विष्म इत्यथास्मै नामगृह्य प्रहरति १ निरमुं नुद ओकसः सपत्नो यः पृतन्यति । निर्बाध्येन हविषेन्द्र एणं पराशरीत् । इहि तिस्रः परावत इहि पञ्च जनाँ अति । इहि तिस्रोऽति रोचना यावत्सूर्यो असद्दिवि । परमां त्वा परावतमिन्द्रो नयतु वृत्रहा यतो न पुनरायसि शश्वतीभ्यः समाभ्य इति हतोऽसाववधिष्मामुमित्येताभिः पञ्चभिर्निरस्येन्निखनेद्वा २ अवसृष्टः परापत शरो ब्रह्म संशितः । गच्छामित्रान्प्रविश मैषां कंचनोच्छिष इति वा ३ यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य संख्यायोद्वासयति ४ संतिष्ठेते दर्शपूर्णमासौ ५ शंय्वन्तं वाहवनीये संस्थापयेदाज्येडान्तं गार्हपत्ये । इडान्तं वाहवनीये शंय्वन्तं गार्हपत्ये ६ यदि शंय्वन्तं पश्चात्स्याद्वेदात्तृणमपादाय जुह्वामग्रमञ्ज्यात्स्रुवे मध्यमुपभृति वाज्यस्थाल्यां मूलम् । तस्य प्रस्तरवत्कल्पः सूक्तवाकाद्या शंयुवाकात् ७ स्वर्गकामो दर्शपूर्णमासौ ८ एककामः सर्वकामो वा ९ युगपत्कामयेताहारपृथक्त्वे वा १० ताभ्यां यावज्जीवं यजेत ११ त्रिंशतं वा वर्षाणि १२ जीर्णो वा विरमेत् १३ द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नु यामित्युक्त्वाहैकामेव यजेतेति १४

इति चतुर्दशी कण्डिका इति चतुर्थः पटलः

संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरडाशमेकादशकपालमनुनिर्वपति १ समानतन्त्रमेके समामनन्ति २ तस्य याथाकामी प्रक्रमे । प्रक्रमात्तु निय-

म्यते ३ सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः ४ शर्धवत्यौ संयाज्ये । अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि । वातोपधूत इषिरो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे । आ ते यतन्ते रथ्यो यथा पृथक् शर्धांस्यग्ने अजराणि धक्ष्यस इति ५ अग्नीषोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपत्यादित्यं घृते चरुं सारस्वतं चरुममावास्यायां पौष्णं चैन्द्रमेकादशकपालममावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा ६ इन्द्राय त्रात्रे चरुं द्वितीयं वैमृधस्य कुर्याद्यो मृत्योर्ज्यान्या वा बिभीयात् । मुष्करो दक्षिणा ७ इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत्प्रजाकामः पशुकामः सजातकामः ८ एतं वानुनिर्वाप्यं कुर्वीत ९ इतरौ वा १० यमभीव संशयीत ११

इति पञ्चदशी कण्डिका

स इन्द्राय वैमृधायानुनिर्वपेत् १ यो नेव घोषेन्नेव शृणुयात्स इन्द्रायांहोमुचे २ यो भ्रातृङ्व्यवान्स्यात्स इन्द्राय वृत्रतुरे ३ अथ यं न कुतश्चनातपेत्स इन्द्रायैव ४ यो भ्रातृव्यवान्स्यात्स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेदाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते चरुम् ५ पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम् ६ पितृयज्ञमेवामावास्यायां कुरुते ७ संक्रामेसंक्रामे वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते ८ त्र्यवरार्ध्यममावास्यां संक्रामति ९ अग्नीषोमीयानि प्रधानानि स्युरमावास्यायां पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा १० साकंप्रस्थायीयेन यजेत पशुकाम इत्यमावास्या विक्रियते ११ द्वौ सायं दोहावेवं प्रातः १२ सायं सायंदोहाभ्यां प्रचरन्ति प्रातः प्रातर्दोहाभ्याम् १३ सर्वैर्वा प्रातः १४ पात्रसंसादनकाले चत्वार्यौदुम्बराणि पात्राणि प्रयुनक्ति १५ तेषां जुहूवत्कल्पः १६ आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यजेति संप्रैषौ १७

इति षोडशी कण्डिका

यावत्यः कुम्भ्यस्तावन्तो ब्राह्मणा दक्षिणतउपवीतिन उपोत्थाय कुम्भीभ्यः

पात्राणि पूरयित्वा तैरध्वर्युं जुह्वतमनु जुह्वति १ स्विष्टकृद्भक्षाश्च न विद्यन्ते २ समानमत ऊर्ध्वम् । संतिष्ठते साकंप्रस्थायीयः ३ दाक्षायणयज्ञेन सुवर्गकामः ४ द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ५ आग्नेयोऽष्टाकपालो ऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्यामाग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्याम् । आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायामाग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् ६ व्यावृत्काम इत्युक्तम् ७ ऋत्वे वा जायामुपेयात् ८ सोऽयं दर्शपूर्णमासयोः प्रक्रमे विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत ९ तेन पञ्चदश वर्षाणीष्ट्वा विरमेद्यजेत वा १० संतिष्ठते दाक्षायणयज्ञः ११ एतेनैडादधः सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः १२

इति सप्तदशी कण्डिका इति पञ्चमः पटलः

ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः १ तं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति २ वृतो जपति ३ अहं भूपतिरहं भुवपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायेत्युक्त्वापरेणाहवनीयं दक्षिणातिक्रम्य निरस्तः पराग्वसुः सह पाप्मनोति ब्रह्मसदनात्तृणं निरस्येदमहमर्वाग्वसोः सदने सीदामि प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या इत्युपविशति ४ आहवनीयमभ्यावृत्यास्ते ५ कर्मणिकर्मणि वाचं यच्छति ६ मन्त्रवत्सु वा कर्मसु । यथाकामी तूष्णीकेषु ७ यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् ८ ब्रह्मन्नपः प्रणेष्यामीत्युच्यमाने ९

इत्यष्टादशी कण्डिका

प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योँ प्रणयेति प्रसौति १ सर्वेष्ठ्या-

मन्त्रणेष्वेवं प्रसवस्तेन कर्मणा यस्मिन्नामन्त्रयते २ प्रोक्ष यज्ञमिति हविष इध्माबर्हिषश्च प्रोक्षे । बृहस्पते परिगृहाण वेदिं स्वगा वो देवाः सदनानि सन्तु । तस्यां बर्हिः प्रथतां साध्वन्तरहिंस्रा नः पृथिवी देव्यस्त्वित्युरस्मिन्परिग्राहे । प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् । वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु मां मनुष्येष्टिति प्रवरे ३ देवता वर्धय त्वमिति सर्वत्रानुषजति ४ मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीयमानं प्रेक्षते ५ ऋतस्य पथा पर्येहीति परिह्रियमाणं सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् ६ सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयामीडायाः पद इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डं सादयित्वादब्धेन त्वा चक्षुषावेक्ष इत्यवेक्ष्य सावित्रेणाङ्गुष्ठेनोपमध्यमया चाङ्गुल्यादायाग्नेस्त्वास्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीत्यसंम्लेत्यापिगिरति ७

इत्येकोनविंशी कण्डिका

या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहेत्यद्भिरभ्यवनीयाचम्य घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति १ वाङ्म आसन्निति यथालिङ्गमङ्गानि २ अरिष्टा विश्वानीत्यवशिष्टानि ३ प्रक्षाल्य पात्रं पूरयित्वा दिशो जिन्वेति पराचीनं निनयति ४ मां जिन्वेत्यभ्यात्मम् ५ यत्रास्मै ब्रह्मभागमाहरति तं प्रतिगृह्य नासंस्थिते भक्षयति ६ ब्रह्मन्ब्रह्मासि ब्रह्मणे त्वाहुताद्य मा मा हिंसीरहुतो मह्यं शिवो भवेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति ७ ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति ८ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति यत्किं च यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ९ ब्रह्मभागं प्राश्यायाडग्निर्जातवेदाः प्र णो यक्ष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्येत्याहवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामति १० एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वं ११

इति विंशी कण्डिका इति षष्ठः पटलः

इति तृतीयः प्रश्नः

याजमानं व्याख्यास्यामः १ यज्ञमानस्य ब्रह्मचर्यं दक्षिणादानं द्रव्यप्रकल्पनं कामानां कामनम् २ प्रत्यगाशिषो मन्त्राञ्जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयते ३ पर्वणि च केशश्मश्रु वापयते ४ अप्यल्पशो लोमानि वापयत इति वाजसनेयकम् ५ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति यक्ष्यमाणोऽप उपस्पृशति ६ तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ७ अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वोयज्ञाय रमतां देवताभ्यः । वसून् रूद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह तानावहतु पौर्णमासं हविरिदमेषां मय्यामावास्यं हविरिदमेषां मयीति यथालिङ्गमाहवनीयेऽन्वाधीयमाने जपति ८ अन्तराग्नी पशवो देवसंसदमागमन् । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराग्नी तिष्ठञ्जपति ९ इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । तान्पूर्वः परिगृह्णामि स्व आयतने मनीषयेति गार्हपत्यम् १०

इति प्रथमा कण्डिका

अयं पितृणामग्निरवाड्व्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करदिति दक्षिणाग्निम् । अजस्रं त्वा सभापाला विजयभागं समिन्धताम् । अग्ने दीदाय मे सभ्य विजित्यै शरदः शतमिति सभ्यम् । अन्नमावसथीयमभिहराणि शरदः शतम् । आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छत्वित्यावसथ्यम् १ इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्यन्वाहितेषु जपति २ पयस्वतीरोषधय इति पुरा बर्हिष आहर्तोर्जायापती अश्नीतः । पुरा वत्सानामपाकर्तोरमावास्यायाम् ३ पौर्णमासायोपवत्स्यन्तौ नातिसुहितौ भवतः ४ अमाषममांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा ५ बर्हिषा पूर्णमासे व्रतमुपैति । वत्सेष्ट्यपाकृ-

तेष्ठ्यमावास्यायाम् ६ प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविःषु व्रतमुपैतीत्युभयत्र साधारणम् ७ अशनमग्न्यन्वाधानं व्रतोपायनमित्येके । व्रतोपायनमशनमग्न्यन्वाधानमित्येके । अग्न्यन्वाधानं व्रतोपायनमशनमित्येके ८ पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा ९ अपरेणाहवनीयं दक्षिणातिक्रामति १० एष एवात ऊर्ध्वं यजमानस्य संचरो भवति ११

इति द्वितीया कण्डिका

दक्षिणेनाहवनीयमवस्थाय व्रतमुपैष्यन्समुद्रं मनसा ध्यायति १ अथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणः । वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामीति राजन्यवैश्यौ २ सर्वान्वा ब्राह्मणः ३ अथादित्यमुपतिष्ठते सम्राडसि व्रतपा असि व्रतपतिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमिति ४ यद्यस्तमिते व्रतमुपेयादाहवनीयमुपतिष्ठन्नेतद्यजुर्जपेत् ५ उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशूनिति सायं परिस्तीर्यमाणेषु जपति ६ आरण्यं सायमाशेऽश्नात्यमाषममांसम् ७ अपि वा काममा मार्गादा मधुन आ प्राशातिकात् ८ अपो वा । न वा किंचित् ९ न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यात् १० आरण्यायोपवत्स्यन्नपोऽश्नाति न वा ११ जञ्भ्यमानो ब्रूयान्मयि दक्षक्रतू इति १२ अमावास्यां रात्रिं जागर्ति १३ अपि वा सुप्यादुपरि त्वेव न शयीत १४ अपि वोपरि शयीत ब्रह्मचारी त्वेव स्यात् १५ उभयत्र जागरणमेके समामनन्ति १६ आहवनीयागारे गार्हपत्यागारे वा शेते १७

इति तृतीया कण्डिका

देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह मावत इदं शकेयं यदिदं करोम्यात्मा करोत्वात्मने । इदं करिष्ये भेषजमिदं मे विश्वभेषजा अश्विना प्रावतं युवमिति जपित्वा श्वोभूते ब्रह्माणं वृणीते १ भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इत्युक्त्वापरेणाहवनीयं दक्षिणातिक्रम्योपविशति २ पूर्वो ब्रह्मापरो यजमानः ३ भूश्च कश्च वाक् चर्क च गौश्च वट् च खं च धूंश्च नूंश्च पूंश्चैकाक्षराः पूंर्दशमा वि-

राजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्मपूता स्थ । को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै । याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः । ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभ इति प्रणीताः प्रणीयमाना अनुमन्त्रयते । यजमान हविर्निर्वप्स्यामीत्युच्यमान ओं निर्वपेत्युच्चैरनुजानाति ४ अग्निं होतारमिह तं हुव इति हविर्निरुप्यमाणमभिमन्त्रयते ५ हविर्निर्वपणं वा पात्रमभिमृशत्यभि वा मन्त्रयते ६ तदुदित्वा वाचं यच्छति ७ अथ यज्ञं युनक्ति ८ कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते ९

इति चतुर्थी कण्डिका इति प्रथमः पटलः

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामानिति वेदिं संमृज्यमानाम् १ यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मीति स्तम्बयजुर्ह्रियमाणम् २ इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीष्वित्युत्करमभिगृह्यमाणम् ३ यज्ञस्य त्वा प्रम-याभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं परिगृह्यमाणाम् ४ यदुद्धनन्तो जिहिंसिम पृथिवीमोषधीरपः । अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् । यदुद्धनन्तो जिहिंसिम क्रूरमस्या वेदिं चकृमा मनसा देव-यन्तः । मा तेन हेड उपगाम भूम्याः शिवो नो विश्वैर्भुवनेभिरस्त्वित्युद्ध-न्यमानाम् । भूमिर्भूत्वा महिमानं पुपोष ततो देवो वर्धयते पयांसि । य-ज्ञिया यज्ञं विचयन्ति शं चौषधीराप इह शक्वरीश्चेति क्रियमाणाम् । इडे-न्यक्रतूरहमपो देवीरुपब्रुवे । दिवा नक्तं च सस्रुषीरपस्वरीरिति प्रोक्षणीरा-साद्यमानाः । ऊर्णामृदु प्रथमानं स्योनं देवेभ्यो जुष्टं सदनाय बर्हिः । सु-वर्गे लोके यजमानं हि धेहि मां नाकस्य पृष्ठे परमे व्योमन्निति बर्हिरासाद्य-मानम् ५ अद्भिराज्यमाज्येनापः सम्यक् पुनीत सवितुः पवित्रैः । ता दे-वीः शक्वरीः शाक्वरेणेमं यज्ञमवत संविदाना इत्याज्यं प्रोक्षणीश्चोत्पूयमानाः ६ उभावाज्यग्रहाञ्जपतः ७

इति पञ्चमी कण्डिका

अशिश्रेम बर्हिरन्तः पृथिव्यां संरोहयन्त ओषधीर्विवृक्णाः । यासां मूलमु-
दवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु । सुमनसो यजमानाय स-
न्त्वोषधीराप इह शक्वरीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्य-
वर्णाः शतवल्शा अदब्धा इत्यन्तर्वेदि बर्हिरासन्नम् १ चतुःशिखण्डा युव-
तिः सुपेशा घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय
सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि स्योना च मे
सुषदा चैध्यूर्जस्वती च मे पयस्वती चैधि । इषमूर्जं मे पिन्वस्व ब्रह्म तेजो
मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वायुरन्नाद्यं मे
पिन्वस्व प्रजां पशून्मे पिन्वस्वेति स्तीर्यमाणाम् २ ध्रुवोऽसीत्येतैः प्रतिमन्त्रं
परिधीन्परिधीयमानान् । अस्मिन्यज्ञ उप भूय इन्नु मेऽविक्षोभाय परिधी-
न्दधामि । धर्ता धरुणो धरीयानग्निर्द्वेषांसि निरितो नु दाता इति च ३ यु-
नज्मि त्वा ब्रह्मणा दैव्येनेत्याहवनीयम् । तेजिष्ठा ते तपना या च रोचना
प्रत्योषन्तीस्तज्वो यास्ते अग्ने । ताभिर्वर्माण्यभितो व्ययस्व मा त्वा दभ-
न्यज्ञहनः पिशाचा इति च ४ विच्छिनद्मि विधृतीभ्यां सपत्नाञ्जातान्भ्रातृ-
व्यान्ये च जनिष्यमाणाः । विशो यन्त्राभ्यां विधमाम्येनानहं स्वानामुत्तमो
ऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं दुर्मरायुम् ।
सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणान्मयि धारयतं
प्रजां मयि धारयतं पशून्मयि धारयतमिति विधृती आसाद्यमाने ५

इति षष्ठी कण्डिका

अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार स-
मिधो विश्वरूपास्तस्मिन्स्रुचो अध्यासादयामीति प्रस्तरमासाद्यमानम् १
आरोह पथो जुहु देवयानान्यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाजिरा
संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः । जुहूरसि घृताची गायत्रीयाग्नी
कविभिर्जुषाणा । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप दे-
वानाग्नेयेन शर्मणा दैव्येनेति जुहूम् । अवाहं बाध उपभृता सपत्नाञ्जाता-
न्भ्रातृव्यान्ये च जनिष्यमाणाः । दोहै यज्ञं सुदुघामिव धेनुमहमुत्तरो भूया-
समधरे मत्सपत्नाः । सुभृदस्युपभृद्घृताची त्रैष्टुभेन छन्दसा विश्ववेदाः ।

अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युप देवानैन्द्रेण शर्मणा दै-
व्येनेत्युपभृतम् । यो मा वाचा मनसा दुर्मरायुर्हृदारातीयादभिदासदग्ने ।
इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः । ध्रुवासि
धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः । अव्यथमाना यज्ञमनुय-
च्छस्व सुनीती यज्ञं नयास्युप देवान्वैश्वदेवेन शर्मणा दैव्येनेति ध्रुवाम् ।
स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके । दि-
वि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः । अयं स्रुवो
अभिजिहर्ति होमाञ्छतक्षरश्छन्दसानुष्टुभेन । सर्वा यज्ञस्य समनक्ति विष्ठा
बार्हस्पत्येन शर्मणा दैव्येनेति स्रुवम् । इयं स्थाली घृतस्य पूर्णाच्छिन्नपयाः
शतधार उत्सः । मारुतेन शर्मणा दैव्येनेत्याज्यस्थालीम् २

इति सप्तमी कण्डिका

तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन
तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण तृप्तिरसि
जागतं छन्दस्तर्पय मा प्रजया पशुभिरिति पुरोडाशानज्यमानान् १ यज्ञो
ऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयतां शतं मे सन्त्वाशिषः स-
हस्रं मे सन्तु सूनृता इरावतीः पशुमतीः प्रजापतिरसि सर्वतः श्रितः सर्वतो
मां भूतं भविष्यच्छ्रयतां शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः
पशुमतीरित्याग्नेयं पुरोडाशमासन्नमभिमृशति सर्वाणि वा हवींषि २ इद-
मिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवो चिकित्सन् । तेन देवा अवतोप मा-
मिहेषमूर्जं यशः सह ओजः सनेयं शृतं मयि श्रयतामिति प्रातर्दोहम् । य-
त्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु
वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रं दधि मां धिनोत्विति दधि ३ अयं यज्ञः
समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः । तेन लोकान्सूर्यवतो जये-
मेन्द्रस्य सखममृतत्वमश्यामिति सर्वाणि हवींषि ४ यो नः कनीय इह
कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेतामहं
प्रजां वीरवतीं विदेयेत्यैन्द्राग्नम् ५ ममाग्ने वर्चो विहवेष्टवस्त्वित्यनुवाकेन
सर्वाणि हवींष्यासन्नान्यभिमृशेदष्टाभिर्वा ६ चतुर्होत्रा पौर्णमास्यां हवींष्या-
सन्नान्यभिमृशेत्प्रजाकामः पञ्चहोत्रामावास्यायां स्वर्गकामो नित्यवदेके स-

मामनन्ति ७

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

दशहोतारं वदेत्पुरस्तात्सामिधेनीनाम् १ अङ्गिरसो मास्य यज्ञस्य प्रातरनुवाकैरवन्त्विति सामिधेनीनां प्रतिपदि जपति २ अनूच्यमानासु दशहोतारं व्याख्यायोच्छुष्मो अग्न इति समिध्यमानम् । समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नम इति समिद्धम् ३ मनोऽसि प्राजापत्यमिति स्रौवमाघार्यमाणम् ४ स्रुच्यमन्वारभ्य वागस्यैन्द्रीत्यनुमन्त्रयते ५ देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टं स्वं दत्तं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुर्य एवास्मि स सन्यज इति होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाणे ६ चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान्हुतंहुतम् ७ एको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मो द्वौ मम द्वे तस्य त्रयो मम तिस्रस्तस्य चत्वारो मम चतस्रस्तस्य पञ्च मम न तस्य किंचन यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येतैश्च प्रतिमन्त्रम् ८ अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमित्याज्यभागौ ९ विहृतानुमन्त्रणौ वा १० अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुष्मान्भूयासम् । सोमेन यज्ञश्चक्षुष्माँ सोमस्याहं देवयज्यया चक्षुष्मान्भूयासमिति विहृतौ ११ पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्य १२ अग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयं हुतमनुमन्त्रयते दब्धिरसीत्युपांशुयाजमग्नीषोमयोरित्यग्नीषोमीयमिन्द्राग्नियोरित्यैन्द्राग्नमिन्द्रस्येत्यैन्द्रं सांनाय्यं महेन्द्रस्येति माहेन्द्रमग्नेः स्विष्टकृत इति सौविष्टकृतम् १३ पुरस्तात्स्विष्टकृतोऽन्यदेवतान्येके समामनन्ति १४ इन्द्रस्य वैमृधस्याहं देवयज्ययासपत्नो वीर्यवान्भूयासमिन्द्रस्य त्रातुरहं देवयज्यया त्रातो भूयासं द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं । भूमानं प्रतिष्ठां गमेयमित्येके । पूष्णोऽहं देवयज्यया प्रजनिषीय प्रजया पशुभिः सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयमर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमेयमदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीयेन्द्रस्येन्द्रियावतोऽहं देवयज्यये-

न्द्रियाव्यन्नादो भूयासमिति यथालिङ्गं वैकृतीः १ अग्निर्मा दुरिष्टात्पात्विति प्राशित्रमवदीयमानम् २ सुरूपवर्षवर्ण एहीतीडाम् ३ भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहीतीडाया उपांश्रूपहवे सप्त देवगवीर्जपति । चिदसि मनासि धीरसि रन्ती रमतिः सूनुः सूनरीत्युच्चैरुपहवे सप्त मनुष्यगवीः । देवीर्देवैरभि मा निवर्तध्वं स्योनाः स्योनेन घृतेन मा समुक्षत नम इदमुदं भिषगृषिर्ब्रह्मा यद्दे समुद्रादुदचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्निति च ४ उपहूयमानायां वायविडा ते मातेति होतारमीक्षमाणो वायुं मनसा ध्यायेत् ५ सा मे सत्याशीरित्याशिःषु । आशीर्म ऊर्जमिति च ६ इडाया अहं देवयज्यया पशुमान्भूयासमित्युपहूताम् । इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाभ्यस्माँ आगादिति भक्षायाह्रियमाणाम् ७ उक्त इडाभक्षो मार्जनी च ८ ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्तां संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां म इति बर्हिषि पुरोडाशमासन्नमभिमृशति ९

इति दशमी कण्डिका

अथैनं प्रतिदिशं व्यूहत्याशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रह्मपा हि भजतां भागी भागं माभागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनाम् । निर्भक्तोऽब्राह्मणो नेहाब्राह्मणस्यास्तीति १ उपहूतो द्यौः पितोप मां द्यौः पिता ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्यायोपहूता पृथिवी मातोप मां माता पृथिवी ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याये-त्याग्नीध्रभागस्य वैशेषिकम् २ ब्रध्न पिन्वस्वेत्यन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति । इयं स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः । स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदनेनातितराणि मृत्युमिति च ३ उक्तः संप्रैषोऽन्वाहार्यस्य च दानम् ४ एषा ते अग्ने समिदित्यानूयाजिकीं समि-

धमाधीयमानाम् । यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन् । प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम् । सर्वांस्तानग्ने संदह यांश्चाहं द्वेष्मि ये च मामित्याहितायामग्निम् ५ वेदिर्बर्हिः शृतं हविरिध्मः हृपरिधयः स्रुचः । आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः । सं मे संनतयो नमन्तामिध्म-संनहने हुत इति संमार्गान्हुतान् ६ सप्तहोतारं वदेत्पुरस्तादनूयाजानामुप-रिष्टाद्वा ७

इत्येकादशी कण्डिका

बर्हिषोऽहं देवयज्यया प्रजावान्भूयासमित्येतैः प्रतिमन्त्रमनूयाजान्हुतंहुतम् १ उभौ वाजवत्यौ जपतः २ वसून्देवान्यज्ञेनापिप्रें रुद्रान्देवान्यज्ञेनापिप्रे-मादित्यान्देवान्यज्ञेनापिप्रेमिति प्रतिमन्त्रं परिधीनज्यमानान् । समङ्क्तां ब-र्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभि-रङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति प्रस्तरमज्यमानम् ३ अग्नेरहमुज्जितिम-नूज्जेषमिति यथालिङ्गं सूक्तवाक् देवताः ४ यदा चास्य होता नाम गृह्णी-यादथ ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति ५ सा मे सत्याशीर्देवान्ग-म्याज्जुष्टाज्जुष्टतरा पण्यात्पण्यतरारेडता मनसा देवान्गम्याद्यज्ञो देवान्गच्छ-त्वदो म आगच्छत्विति सूक्तवाकस्याशिषु यत्कामयते तस्य नाम गृह्णाति ६ रोहितेन त्वाग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रमग्नीधा प्रस्तरं प्रह्रियमाणम् ७ दिवः खीलोऽवततः पृथिव्या अध्युत्थितः । तेना सहस्रकाण्डेन द्वि-षन्तं शोचयामसि । द्विषन्मे बहु शोचत्वोषधे मो अहं शुचमिति प्रस्तरतृणे प्रह्रियमाणे ८ वि ते मुञ्चामीति परिधिषु विमुच्यमानेषु ९ विष्णोः शंयो-रिति शंयुवाके । यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञ-स्यर्द्धिमनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नम इति च । इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वान् । अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहागमेरिति संस्रावं हुतम् १०

इति द्वादशी कण्डिका इति तृतीयः पटलः

सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति यथालिङ्गं पत्नीसंयाजान्हुतंहु-तम् १ राकाया अहं देवयज्यया प्रजावान्भूयासं सिनीवाल्या अहं देवय-ज्यया पशुमान्भूयासं कुह्वा अहं देवयज्यया पुष्टिमान्पशुमान्भूयासमिति का-म्याः २ राकाया अहं देवयज्यया प्रजावती भूयासं सिनीवाल्या अहं देव-यज्यया पशुमती भूयासं कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयास-मिति पत्न्यनुमन्त्रयते ३ इडास्माननु वस्तां घृतेन यस्याः पदे पुनते देवय-न्तः । वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवीत्याज्येडाम् ४ अन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसीति ५ पुरा विदेयेति यद्यद्भ्रातृ-व्यस्याभिध्यायेत्तस्य नाम गृह्णीयात् । तदेवास्य सर्वं वृङ्क्त इति विज्ञायते ६ या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्मेति फलीकरणहोमे हुते मुखं विमृष्टे ७ वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छत्वदो म आगच्छत्विति समिष्टयजुर्हुतमनुमन्त्रयते । यत्कामयते तस्य नाम गृह्णाति ८ सं यज्ञपतिराशिषेति यजमानभागं प्रा-श्नाति ९

इति त्रयोदशी कण्डिका

दधिक्राव्णो अकारिषमिति सायंदोहम् । इदं हविरिति प्रातर्दोहम् १ ना-ब्राह्मणः सांनाय्यं प्राश्नीयात् २ अन्तर्वेदि प्रणीतास्वध्वर्युः संततामुदक-धारां स्रावयति । सदसि सन्मे भूया इत्यानीयमानायां जपति ३ प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्यथालिङ्गं व्युत्सि च्य समुद्रं वः प्र-हिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि म-त्पय इत्यन्तर्वेदि शेषं निनीय यदप्सुते सरस्वति गोष्ठश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्ध सरस्वति । या सरस्वती वैशम्बल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे ४ उभौ कपालविमोचनं जपतः ५ विष्णोः क्रमोऽसीति दक्षिने वेद्यन्ते द-क्षिणेन पदा चतुरो विष्णुक्रमान्प्राचः क्रामत्युत्तरमुत्तरं ज्यायांसमनतिहरन्स-व्यम् ६ नाहवनीयमतिक्रामति ७ अवस्थाय चतुर्थं जपति ८ विष्णु-क्रमान्विष्णवतिक्रमानतीमोक्षानिति व्यतिषक्तानेके समामनन्ति । विनिरू-

ढानेके ९ अग्निना देवेन पृतना जयामीति विष्णवतिक्रमाः । ये देवा यज्ञहन इत्यतीमोक्षाः १० अगन्म सुवः सुवरगन्मेत्यादित्यमुपतिष्ठते ११

इति चतुर्दशी कण्डिका

उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि निम्रोचन्नधरान्कृधि । उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम् । यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापं समूहतामिति च १ ऐन्द्रीमावृतमन्वावर्त इति प्रदक्षिणमावर्तते २ यद्यभिचरेदिदमहमुष्यामुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पाष्णर्या निमृद्नीयात् ३ पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरित्युक्त्वा समहं प्रजया सं मया प्रजेति पुनरुपावर्तते ४ समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याहवनीयमुपसमिन्द्धे । वसुमान्यज्ञो वसीयान्भूयासुमित्युपतिष्ठते ५

इति पञ्चदशी कण्डिका

यो नः सपत्नो योऽरणो मर्तोऽभिदासति देवाः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचनेति च १ अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते । अग्ने गृहपत इति च २ पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य । अमुष्मा इति जातस्य ३ ज्योतिषे तन्तवे त्वासावनु मा तन्वच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति ४ अग्ने वह्ने स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योन इति दक्षिणाग्निम् ५ ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति । पूर्ववन्नामग्रहणम् ६ ज्योतिरसि तन्तव इत्युपविश्य जपति ७ वेदमुपस्थ आधायान्तर्वेद्यासीनोऽतीमोक्षाञ्जपति ८ अत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति ९ कस्त्वा

युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति १० अग्ने व्रतपते व्रतमचारिष-मिति व्रतं विसृजते ११ यज्ञा बभूवेति यज्ञस्य पुनरालम्भं जपति १२ गो-मानिति प्राङुदेत्य गोमतीं जपति १३ अत्र वा यजमानभागं प्राश्नीयात् १४ यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति दर्शपूर्णमासाभ्यां सोमेन प-शुना वेष्ट्वा जपति १५ वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामितीष्ट्वाप उपस्पृशति । तदिदं सर्वयज्ञेषूपस्पर्शनं भवति १६ ब्राह्मणांस्तर्पयितवा इति संप्रेष्यति १७ प्रवसन्काले विहारमभिमुखो याजमानं जपति १८ प्राचो विष्णुक्रमान्क्रामति १९ प्राङुदेत्य गोमतीं जपति जपति २०

इति षोडशी कण्डिका इति चतुर्थः पटलः

इति चतुर्थः प्रश्नः

अग्न्याधेयं व्याख्यास्यामः १ यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते इरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्याश्वत्थस्यारणी आह-रति २ अप्यशमीगर्भस्येति वाजसनेयकम् ३ अश्वत्थाद्धव्यवाहाद्धि जा-तामग्नेस्तनूं यज्ञियां संभरामि । शान्तयोनिं शमीगर्भमग्नये प्रजनयितवे । आयुर्मयि धेह्याहुर्यजमान इत्यरणी अभिमन्त्र्य सप्त पार्थिवान्संभारानाहरति । एवं वानस्पत्यान् । पञ्चपञ्च वा ४ भूयसो वा पार्थिवान् ५ न संभारा-न्संभरेदिति वाजसनेयकम् ६ वैश्वानरस्य रूपं पृथिव्यां परिस्रसा । स्यो-नमाविशन्तु न इति सिकताः । यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुः । ऊषान्कृष्णमवतु कृष्णमूषा इधोभयोर्यज्ञियमागमिष्ठा इत्यूषान् । उतीः कुर्वाणो यत्पृथिवीमचरो गूहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदः सुवीरा इत्याखुकरीषम् । ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीः । वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवाम इति वल्मीकवपाम् । प्रजापतिसृष्टानां प्रजानां क्षुधोऽपहत्यै सुवितं नो अस्तु । उपप्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामीति सूदम् । यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टां सरिरस्य मध्ये । तस्येदं विहतमाभरन्तोऽच्छम्बट्कारमस्यां विधेमेति वराहविहतम् ७

इति प्रथमा कण्डिका

याभिरदृंहञ्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वा इति शर्कराः । अग्ने रेतश्चन्द्रं हिरण्यमद्भ्यः संभूतममृतं प्रजासु । तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयमिति हिरण्यम् १ इति पार्थिवाः २ यदि पञ्चौदुम्बराणि लोहशकलानि पञ्चमो भवति ३ अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय । तत्ते न्यक्त-मिह संभरन्तः शतं जीवेम शरदः सुवीरा इत्यश्वत्थम् । ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्युदुम्बरम् । गायत्रिया ह्रियमाणस्य यत्ते पर्णम-पतत्तृतीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै । देवानां ब्रह्मवादं वदतां यदुपाश‍ृणोः सुश्रवा वै श्रु-तोऽसि । ततो मामाविशतु ब्रह्मवर्चसं तत्संभरंस्तदवरुन्धीय साक्षादित्ये-ताभ्यां पर्णम् । यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिः । तामिमामप्र-दाहाय शमीं शान्त्यै हराम्यहमिति शमीम् । यत्ते सृष्टस्य यतो विकङ्कतं भा आर्छज्जातवेदः । तया भासा संमित उरुं नो लोकमनुप्रभाहीति विक-ङ्कतम् । यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदो मरुतो अद्भिस्तमयित्वा । एतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेहेत्यशनिहतस्य वृक्षस्य । यत्पर्यपश्यत्सरिरस्य मध्य उर्वीमपश्यज्जगतः प्रतिष्ठाम् । तत्पुष्करस्यायत-नाद्धि जातं पर्णं पृथिव्याः प्रथनं हरामीति पुष्करपर्णम् । इति वानस्पत्याः ४

इति द्वितीया कण्डिका

यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम् । स संभृतः सीद शि-वः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति संभृत्य निदधाति १ अथ न-क्षत्राणि २ कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति ३ गृ-हांस्तस्याग्निर्दाहुको भवति ४ रोहिण्यामाधाय सर्वान्रोहान्रोहति ५ मृग-शीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा ६ यः पुरा भद्रः सन्पापीयान्स्यात्पुन-र्वस्वोः ७ पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजा स्युरिति ८

उत्तरयोर्यः कामयेत भग्यन्नादः स्यामिति ९ एतदेवैके विपरीतम् १० अथापरम् । पूर्वयोराधाय पापीयान्भवत्युत्तरयोर्वसीयान् ११ हस्ते यः कामयेत प्र मे दीयेतेति १२ चित्रायां राजन्यो भ्रातृव्यवान्वा १३ विशाखयोः प्रजाकामोऽनुराधेष्वृद्धिकामः श्रवणे पुष्टिकाम उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः १४ सर्वाणि नित्यवदेके समामनन्ति १५ फल्गुनीपूर्णमास आदधीतेत्युक्त्वाह यत्फल्गुनीपूर्णमास आदध्यात्संवत्सरस्यैनमासन्दध्याद्द्व्यहे पुरैकाहे वा १६ अमावास्यायां पौर्णमास्यां वाधेयः १७ वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षा रथकारस्य १८ ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषामेष कालः १९ शिशिरः सार्ववर्णिकः २० सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेन्न नक्षत्रम् २१ उदवसाय शलीन आदधीतानुदवसाय यायावरः २२ एकाहं वा प्रयायात् २३

इति तृतीया कण्डिका

उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेति प्राचीनप्रवणं देवयजनमुद्धत्य शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु न इत्यद्भिरवोक्ष्य तस्मिन्नुदीचीनवंशं शरणं करोति १ तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति २ तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनम् । एकादशसु राजन्यस्य । द्वादशसु वैश्यस्य ३ चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ४ दक्षिणतःपुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् ५ अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ६ अग्रेणाहवनीयं सभायां सभ्यः ७ तं पूर्वेणावसथ आवसथ्यः ८ केशश्मश्रु वपते नखानि निकृन्तते स्नाति । एवं पत्नी केशवर्जम् ९ क्षौमे वसानौ जायापती अग्निमादधीयाताम् १० ते दक्षिणाकालेऽध्वर्यवे दत्तः ११ अपराह्णेऽधिवृक्षसूर्ये वौपासनादग्निमाहृत्यापरेण गार्हपत्यायतनं ब्राह्मौदनिकमादधाति १२ औपासनं वा सर्वम् १३ निर्मथ्यं वा १४ यदि सर्वमौपासनमाहरेदपूपं यवमयं व्रीहिमयं चौदुम्बरपर्णाभ्यां संगृह्यायतन उपास्येद्यवमयं पश्चाद्व्रीहिमयं पुरस्तात्तस्मिन्नादध्यात् १५ सर्वमप्यौपासनमाहरन्नापूपावुपास्येदित्यपरम् १६

इति चतुर्थी कण्डिका इति प्रथमः पटलः

अपरेण ब्राह्मौदनिकं लोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि पाजके वा निशायां ब्रह्मौदनं चतुःशरावं निर्वपति १ देवस्य त्वेत्यनुद्रुत्य ब्रह्मणे प्राणाय जुष्टं निर्वपामीति प्रथममपानायेति द्वितीयं व्यानायेति तृतीयं ब्रह्मणे जुष्टमिति चतुर्थम् २ तूष्णीं वा सर्वाणि ३ चतुर्षूदपात्रेषु पचति ४ न प्रक्षालयति न प्रस्रावयति ५ क्षीरे भवतीत्येके ६ जीवतण्डुलमिव श्रपयतीति विज्ञायते ७ दर्व्या ब्रह्मौदनादुद्धृत्य प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवान्यजेहेह्यानिति जुहोत्यभि वा मन्त्रयते ८ चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य कर्षन्ननुच्छिन्दंश्चतुर्भ्य आर्षेयेभ्य ऋत्विग्भ्य उपोहति ९ अपात्ताः प्रथमे पिण्डा भवन्त्यप्रतिहताः पाणयः । अथ ब्रह्मौदनशेषं संकृष्य तस्मिन्नाज्यशेषमानीय तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यः स्तिभिगवत्यो विवर्तयति १०

इति पञ्चमी कण्डिका

चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसंस्कृता स्थ । प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इति १ अथादधाति घृतवतीभिराग्नेयीभिर्गायत्रीभिर्ब्राह्मणस्य त्रिष्टुग्भी राजन्यस्य जगतीभिर्वैश्यस्य २ समिधाग्निं दुवस्यतेत्यषा । उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम । तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्येति ब्राह्मणस्य । समिध्यमानः प्रथमो नु धर्मः समक्तुभिरज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक् पावकः सुयज्ञो अग्निर्यजथाय देवान् । घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्सुयजा यक्षि देवान् । आयुर्दा अग्न इति राजन्यस्य । त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम् । उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्वति । त्वामग्ने प्रदिव आहुतं घृतेन सुम्नायवः सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षित उरु ज्रयांसि पार्थिवा वितिष्ठसे । घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समि-

धान ऋञ्जते । इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियमिति वैश्यस्य ३

इति षष्ठी कण्डिका

समित्सु तिस्रो वत्सतरीर्ददाति १ प्राश्नन्ति ब्राह्मणा ओदनम् २ प्राशितवद्भ्यः समानं वरं ददाति ३ यस्मिन्नक्षत्रेऽग्निमाधास्वन्स्यात्तस्मिन्संवत्सरे पुरस्तादेताः समिध आदध्याद्द्वादशाहे द्व्यहे त्र्य ह एकाहे वा ४ आधेयास्त्वेवाग्निमादधानेन ५ अथ व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति नास्याग्निं गृहाद्धरन्ति नान्यत आहरन्ति ६ ब्राह्मौदनिकेन संवत्सरमासीत ७ औपासनश्चेदाहित एतस्मिन्नस्याग्निकर्माणि क्रियन्ते ८ न प्रयायात् ९ नानुगच्छेत् १० यदि प्रयायादनु वा गच्छेद्ब्रह्मौदनं पक्त्वैतयैवावृता समिध आदध्यात् ११ यद्येनं संवत्सरेऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेदथादधीत १२ तस्य याथाकामी भरणकल्पानाम् १३ द्वादशाहं चरेदेकाहं वा १४ श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति १५ योऽस्याग्निमाधास्यन्स्यात्स एतां रात्रिं व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति १६ प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुः सव इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति १७

इति सप्तमी कण्डिका

अथ यजमानो व्रतमुपैति वाचं च यच्छत्यनृतसत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति १ वीणातूणवेनैनमेतां रात्रिं जागरयन्ति २ अपि वा न जागर्ति न वाचं यच्छति ३ शल्कैरेतां रात्रिमेतमग्निमिन्धान आस्ते शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋद्ध्वाति मृत्युं तराम्यहमित्येतया ४ तस्मिन्नुपव्युषमरणी निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्ञनिष्यते । अग्निमश्वत्थादधि हव्यवाहं शमीगर्भाज्ञनयन्यो मयोभूः । अयं ते योनिर्ऋत्विय इत्येताभ्याम् ५ अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इत्यरणी अभिमन्त्र्य मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जा-

तवेदसमध्वराणां जनयथः पुरोगामित्यरणी आह्रियमाणे यजमानः प्रतीक्षते ६ दोह्या च ते दुग्धभृच्चोर्वरी ते ते भागधेयं प्रयच्छामीति यजमानाय प्रयच्छति ७ आरोहतं दशतं शक्वरीर्ममर्तेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तरां समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति प्रतिगृह्य-त्विर्यवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः । क्प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इति प्रतिगृह्याभिमन्त्रयते यजमानः ८

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इत्युभौ जपतः । अपेत वीतेति गार्हपत्यायतनमुद्धत्य शं नो देवीरभिष्टय इत्यद्भिरवोक्षति १ एवं दक्षिणाग्नेराहवनीयस्य सभ्यावसथ्ययोश्च २ एवमनुपूर्वण्येवैष्टत ऊर्ध्वं कर्माणि क्रियन्ते ३ सिकतानामर्धं द्वैधंम् विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेः । अर्धं त्रैधं विभज्य पूर्वेषु ४ एतेनैव कल्पेन सर्वान्पार्थिवान्निवपति ५ अग्नेर्भस्मासीति सिकता निवपति । संज्ञानमित्यूषान् ६ तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ७ उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्थात् । आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपामित्याखुकरीषम् । यत्पृथिव्या अनामृतं संबभूव त्वे सचा । तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयमिति गार्हपत्यायतने वल्मीकवपां निवपति ८ यदन्तरिक्षस्येति दक्षिणाग्नेः । यद्दिव इति पूर्वेषु ९ उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरां दधानः । अमी च ये मघवानो वयं चेषमूर्जं मधमत्संभरेमेति सूदम् । इयत्यग्र आसीरिति वराहविहतम् १० अदो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा । अदृंहथाः शर्कराभिस्त्रिविष्टप्यजयो लोकान्प्रदिशश्चतस्र इति शर्कराः । द्वेष्यं च मनसा धायति ११

इति नवमी कण्डिका

ऋतं स्तृणामि पुरीषं पृथिव्यामृतेऽध्यग्निमादधे सत्येऽध्यग्निमादध इत्यायत-

नेषु संभारानन्वूहति १ सं या वः प्रियास्तनुव इत्येषा । सं वः सृजामि हृदयानि संसृष्टं मनो अस्तु वः । संसृष्टः प्राणो अस्तु व इति वानस्पत्यान्संसृज्य सिकतावन्निवपतीतः प्रथम जज्ञे अग्निरित्येतया २ यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्न इति गार्हपत्यायतने सौवर्णं हिरण्यशकलमुत्तरतः सम्भारेषूपास्यति ३ चन्द्रमग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदं सुवर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुरित्युपास्तमभिमन्त्रयते । द्वेष्याय रजतं प्रयच्छति ४ यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यः स्यात्तेन निरस्येत् ५ एवं सर्वेषूपास्य करोति ६ ब्राह्मौदनिकाद्भस्मापोह्य तस्मिञ्छमीगर्भादग्निं मन्थति ७ उद्यत्सु रश्मिषु दशहोत्रारणी समवदधाति ८ सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिः सह ब्रह्मवर्चसेनेत्युपतिष्ठत्यश्वेऽग्निं मन्थति ९ श्वेतोऽश्वोऽविक्लिन्नाक्षो भवति रोहितो वासितजानुरपि वा य एव कश्चित्साण्डः १० मथ्यमाने शक्तेः सांकृतेः साम गायति धूमे जाते गाथिनः कौशिकस्य । अरण्योर्निहितो जातवेदा इति च ११ उपावरोह जातवेद इति निर्वर्त्यमानमभिमन्त्रयते १२

इति दशमी कण्डिका

अत्र चतुर्होतृन्यजमानं वाचयति १ अजनन्निग्निः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्य इति जातमभिमन्त्रयते २ जाते यजमानो वरं ददाति ३ गौर्वै वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान्वरोऽतिवरोऽन्यः पष्ठौही वरोऽतिवरोऽन्यः ४ जातं यजमानोऽभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्यायेति ५ अजीजनन्नमृतं मर्त्यासोऽस्त्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसंरभन्तामिति जातमञ्जलिनाभिगृह्य सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्यायेत्युपसमिध्याथैनं प्राञ्चमुद्धृत्यासीनः सर्वेषां मन्त्राणामन्तेन रथंतरे गीयमाने यज्ञायज्ञीये च यथर्ष्याधानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्यां च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा ६ भृगूणां त्वा देवानां

व्रतपते व्रतेनादधामीति भार्गवस्यादध्यात् । अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधामीति यो ब्राह्मण आङ्गिरसः स्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति यथर्ष्याधानानि ७

इत्येकादशी कण्डिका

भूर्भुवः सुवरिति व्याहृत्यः । भूमिर्भूम्नेति सर्पराज्ञियः । घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच । अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधेऽग्निनाग्ने ब्रह्मणेति घर्मशिरांसि १ यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति २ सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत् । अग्ने सपत्नाँ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यजमानो घर्मशिरांसि चैनमध्वर्युर्वाचयति ३

इति द्वादशी कण्डिका इति तृतीयः पटलः

अर्धोदिते सूर्य आहवनीयमादधाति १ उदिते ब्रह्मवर्चसकामस्य २ गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते ३ तमुद्यच्छत्योजसे बलाय त्वोद्यच्छे वृषणे श्रुष्मायायुषे वर्चसे । सपत्नतूरसि

वृत्रतूः । यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः । पुष्टि-र्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि । दिवः पृथिव्याः पर्य-न्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्रयत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहि । उदु त्वा विश्वे देवा इत्येताभिश्चतसृभिः ४ उपरीवा-ग्निमुद्यच्छति ५ उद्यतमुपयतं धारयति ६ अथाश्वस्य दक्षिणे कर्णे यज-मानमग्नितनूर्वाचयति या वजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह या वजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावहेति । धारयत्येवाग्निम् ७ अथाग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वोर्ध्वज्ञुरासीनो दक्षिणमग्निमादधाति यज्ञायज्ञीये गीयमाने यथ-ष्यीधानेन द्वितीयया व्याहृत्या तिसृभिः सर्पराज्ञीभिर्द्वितीयेन च घर्मशिरसा। यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः सं-भूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । व्यानं त्वामृत आदधा-म्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरि-क्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्नेऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मू-र्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ठ्यो योऽनिष्ठ्योऽभिदास-तीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति ८

इति त्रयोदशी कण्डिका

यो ब्राह्मणो राजन्यो वैश्यः शूद्रो वासुर इव बहुपुष्टः स्यात्तस्य गृहादाहृत्या-दध्यात्पुष्टिकामस्य १ गृहे त्वस्य ततो नाश्नीयात् २ अम्बरीषादन्नकाम-स्य वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ३ वामदेव्यमभिगायत आहवनी-य उद्‌घ्रियमाणे ४ प्राचीमनु प्रदिशमित्येषा । विक्रमस्व महाँ असि वे-दिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि प्रजया च धनेन च । इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरू-पी मध्ये वसोर्दीदिहि जातवेद इति प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति ५ दक्षिणतो ब्रह्मा रथं रथचक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तते ६ षट्‌कृ-त्वो द्वेष्यस्य ७ जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निं हरति नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम् । न कर्णदघ्नमत्युद्‌गृह्णाति ८ तद्युद्‌गृह्य निगृह्णीया-

न्मुखेन संमायादध्यात् ९ नाग्निमादित्यं च व्यवेयात् १० दक्षिणतः परिगृह्य हरति ११ अर्धाध्वे यजमानो वरं ददाति १२ अर्धाध्वे हिरण्यं निधाय नाकोऽसि ब्रध्नः प्रतिष्ठा संक्रमण इत्यतिक्रामति १३ प्राञ्चमश्वमभ्यस्थाद्विश्वा इति दक्षिणेन पदोत्तरतः संभारानाक्रमयति यथाहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन्निति १४ प्रदक्षिणमावर्तयित्वा यदक्रन्द इति पुनरेवाक्रमयति १५ पुरस्तात्प्रत्यञ्चमश्वं धारयति १६ पूर्ववाडश्वो भवति १७ तदभावेऽनड्वान्पूर्ववाडेतानि कर्माणि करोतीति पैङ्गायनिब्राह्मणं भवति १८

इति चतुर्दशी कण्डिका

कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम् । अजस्य पद आदधीतेति वाजसनेयकम् १ अथ यजमानः शिवा जपति ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ प्रम्वी च प्रभूतिश्च ते मा शिवतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इति २ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं पराभावयति ३ अरण्येऽनुवाक्या भवन्ति ४ यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शंभूः प्रजाभ्यस्तनुवे स्योन इत्यभिमन्त्र्य पुरस्तात्प्रत्यङ् तिष्ठन्नाहवनीयमादधाति ५ बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्ष्याधानेन सर्वाभिर्व्याहृतीभिः सर्वाभिः सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने । अपानं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै । दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः हपर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामीति संभारेषु निदधाति ६

इति पञ्चदशी कण्डिका

आनशे व्यानशे सर्वमायुर्व्यानशे । अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्ञातवेद इत्याधीयमानमभिमन्त्रयते यजमानः १ व्याहृतीः सर्पराज्ञीर्घर्मशिरांसीति सर्वेष्ठाधानेषु यजमानोऽनुवर्तयते येनयेनादधाति २ नाहितमनभिहुतमग्निमुपस्पृशति । आज्येनौषधीभिश्च शमयितव्यः ३ या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याग्नौ या रथन्तरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा । या ते अग्नेऽप्सु पावका प्रिया तनूर्यान्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा । या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि यादित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहेत्येतैः प्रतिमन्त्रमाज्यमोषधीश्च जुहोति ४ समिध आदधातीत्येके ५ ब्रह्माग्न्याधेये सामानि गायति ६ प्रतिषिद्धान्येकेषाम् ७ व्याहृतीभिरेवोद्गीथं भवतीति वाजसनेयकम् ८

इति षोडशी कण्डिका इति चतुर्थः पटलः

ततः सभ्यावसथ्यावादधाति लौकिकमग्निमाहृत्य मथित्वाहवनीयाद्वा यथर्ष्याधानेन १ अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः । अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयमिति तिस्र आश्वत्थ्यः समिध एकैकस्मिन्नादधाति २ आहवनीये वा तिस्रः ३ समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा मनोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेशेति शमीमय्यो घृतान्वक्तास्तिसृभिस्तिस्र एकैकस्मिन्नादधाति । आहवनीये वा तिस्रः ४ एवं नानावृक्षीयाः । प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति । विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीम् । तां सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् ५ ततस्तूष्णीमग्निहोत्रं जुहोति ६ अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायञ्जुहोति । साग्निहोत्रस्य स्थाने भवति ७ यास्ते अग्ने

घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं नितमयति । अरण्येऽनुवाक्या भवन्ति ८

इति सप्तदशी कण्डिका

द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति । हुतायां यजमानो वरं दत्त्वा शिवा जपति । ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं दुहानाः । ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहेति जुहोति १ अथ विराट्क्रमैर्यजमान उपतिष्ठतेऽथर्व पितुं मे गोपायान्नं प्राणेन संमितम् । त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्यन्वाहार्यपचनम् । नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् । आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहमिति गार्हपत्यम् । शंस्य पशून्मे गोपाय विश्वरूपं धनं वसु । गृहाणां पुष्टिमानन्दं तांस्ते परिददाम्यहमित्याहवनीयम् । सप्रथ सभां मे गोपायेन्द्रियं भूतिवर्धनम् । विश्वजनस्य छायां तां ते परिददाम्यहमिति सभ्यम् । अहे बुध्निय मन्त्रं मे गोपाय श्रियं च यशसा सह । अहये बुध्नियाय मन्त्रं श्रियं यशः परिददाम्यहमित्यावसथ्यम् । पञ्चधाग्नीन्व्यक्रामद्विराट्सृष्टा प्रजापतेः । ऊर्ध्वारोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान् २

इत्यष्टादशी कण्डिका इति पञ्चमः पटलः

आग्नेयस्याष्टाकपालस्य तन्त्रं प्रक्रमयति १ निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेषु हिरण्यं निधाय समूह्य व्यूह्य प्रथयित्वा निषसाद धृतव्रत इति मध्येऽधिदेवने राजन्यस्य जुहोति २ आवसथे परिषदो मध्ये हिरण्यं निधाय मन्त्रवत्या हिरण्ये जुहोति प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिर इति ३ उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो न्हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु न इत्युक्त्वा शतमक्षान्यजमानाय प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताहिंसन्तः परूंषि विशसतेति ४ संप्रैषवत्कुर्वन्ति ५

इत्येकोनविंशी कण्डिका

कृतं यजमानो विजिनाति १ तया यज्ञयन्ति तदन्नं संस्कृत्यृ सभासद्भ्य उपहरन्ति २ आवसथे भुञ्जते ३ क्लृप्तिसामनसीभ्यामग्नीन्यजमान उपतिष्ठते कल्पेतां द्यावापृथिवी येऽग्नयः समनस इति ४ प्रोक्षादि कर्म प्रतिपद्यते ५ आग्नेयस्य दक्षिणाकाले दक्षिणा ददाति ६ अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे ७ हविनमश्वं ब्रह्मणेऽध्वर्यवे वा ८ आहवनीयदेशेऽनड्वाहमध्वर्यवे ९ अपरेण गार्हपत्यं धेनुं होत्रे १० वासो मिथुनौ गावौ नवं च रथं ददाति । तानि साधारणानि सर्वेषाम् ११ आ द्वादशभ्यो ददातीत्युक्त्वाह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते १२ ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति १३ ता विकल्पन्ते १४ येषां पशूनां पुष्टिं भूयसीं कामयेत तेषां वयसाम् १५ दित्यौहीं दद्याद्दित्यवाहं च मुष्करम् १६ वर्धमानां दक्षिणां ददाति १७ यद्यनाढ्योऽग्नीनादधीत काममेवैकां गां दद्यात्सा गवां प्रत्याम्नायो भवतीति विज्ञायते १८ सिद्धमिष्टिः संतिष्ठते १९

इति विंशो कण्डिका

पवमानहवींषि सद्यो निर्वपेत् १ द्वादशाहे द्व्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा २ न सोमेनायक्ष्यमाणः पुरा संवत्सरान्निर्वपेत् ३ निर्वपेदित्येके ४ यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीः सोमदेवताभ्यो वा हुत्वा निर्वपेत् ५ समानतन्त्राणि नानातन्त्राणि वाग्नेयेन वा समानतन्त्राणि ६ यं कामयेत पापीयान्स्यादिति तस्यैकमेकमेतानि हवींषि निर्वपेत् । न वसीयान्न पापीयानिति तस्य साकं सर्वाणि । यं कामयेतोत्तरं वसीयाञ्छ्रेयान्स्यादिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां समानबर्हिषी निर्वपेत् ७ शतमानं हिरण्यं दक्षिणा ८ पूर्वयोर्हविषोर्द्वे त्रिंशन्माने उत्तरस्मिंश्चत्वारिंशन्मानम् ९ येन हिरण्यं मिमते तेन मीत्वा ददाति १० सिद्धमिष्टिः संतिष्ठते ११

इत्येकविंशी कण्डिका इति षष्ठः पटलः

ऐन्द्राग्नमेकादशकपालमनुर्निवपत्यादित्यं च घृते चरुम् १ सप्तदश सामिधेन्य २ चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहरति ३ तं चत्वार आर्षेयाः प्राश्नन्ति ४ प्राशितवद्भ्यः समानं वरं ददाति । धेन्वनडुहोर्दानमेके समामनन्ति । सिद्धमिष्टिः संतिष्ठते ५ आग्नावैष्नवमेकादशकपालमनुनिर्वपत्यग्नीषोमीयमेकादशकपालं विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् ६ सिद्धमिष्टिः संतिष्ठते ७ आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनः समामनन्ति ८ सिद्धमिष्टिः संतिष्ठते ९ अग्निहोत्रमारप्स्यमानो दशहोतारं मनसानुद्रुत्या-हवनीये सग्रहं हुत्वाथ सायमग्निहोत्रं जुहोति १० व्याहृतीभिरुपसादयेत् ११ संवत्सरे पर्यागत एताभिरेवोपसादयेत् १२ द्वादशाहमजस्त्रेष्ठग्निषु यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति १३

इति द्वाविंशी कण्डिका

यां प्रथमामग्निहोत्राय दोग्धि तां दक्षिणां ददातिअथैकेषाम् । अग्नीनाधाय हस्तावविनिज्य संवत्सरमग्निहोत्रं हुत्वाथ दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते तत ऊर्ध्वमन्यानि कर्माणि कुरुते २ त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयादप्रवसन्नैव सोमेन पशुना वेष्ट्वाग्नीनुत्सृजति यथा सुयवसान्कृत्वा प्राज्यात्तादृक्तदिति शाट्यायनिब्राह्मणं भवति ३ पूर्णा पश्चाद्यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वान्वारम्भणीयामिष्टिं निर्वपति ४ आग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालम् ५ अग्नये भगिनेऽष्टाकपालं यः कामयेत भग्यन्नादः स्यामिति ६ नित्यवदेके समामनन्ति ७ नानातन्त्रमेके ८ त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः । श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरड्यो रीतिरपाम् । त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः । अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेरिति याज्यानुवाक्ये ९

इति त्रयोविंशी कण्डिका

चित्तं च चित्तिश्चेति पुरस्तात्स्विष्टकृतो जयाञ्जुहोति १ चित्ताय स्वाहा चि-

त्त्यै स्वाहेत्येके समामनन्ति २ प्रजापतिर्जयानिति त्रयोदशीम् ३ अग्ने ब-
लद सह ओजः क्रममाणाय मे दाः । अभिशस्तिकृतेऽनभिशस्तेन्यायास्यै
जनतायै श्रैष्ठ्यायेति चतुर्दशीं यः कामयेत चित्रं जनतायां स्यामिति ।
चित्रं भवति शबलं त्वस्य मुखे जायते ४ मिथुनौ गावौ दक्षिणा ५ सि-
द्धमिष्टिः संतिष्ठते ६ दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसानुद्रुत्याह-
वनीये सग्रहं हुत्वाथ दर्शपूर्णमासावारभते ७ व्याहृतीभिर्हवींष्यासादये-
त्संवत्सरे पर्यागत एताभिरेवासादयेत् ८ अमावास्यायामादधानस्यैतत् ।
पौर्णमास्यां तु पूर्वस्मिन्पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य ९

इति चतुर्विंशी कण्डिका

श्वोभूते पौर्णमासेन यजते १ अनन्तरमाधानादाहिताग्निव्रतानि २ नानृतं
वदेत् ३ नास्य ब्राह्मणोऽनाश्वान्गृहे वसेत् ४ सूर्योढमतिथिं वसत्यै ना-
परुन्धीत ५ नर्बीसपक्वस्याश्नीयात् ६ क्लिन्नं दारु नादध्यात् ७ अन्त-
र्नाव्यपां नाश्नीयात् ८स्वकृत इरिणे नावस्येत् ९ पुण्यः स्यात् १० हि-
ङ्कृत्य वाग्यतः स्त्रियमुपेयात् ११ व्याहरेद्वा १२ न सायमाहुतावहुताया-
मश्नीयात् १३ एवं प्रातः १४ आहिताग्नेर्गृहे न सायमहुते भोक्तव्यं तथा
प्रातरित्यन्येषां व्रतम् १५ नक्तं नान्यदन्नाद्द्यात् १६ दद्यादित्येके १७
अन्नं तु ददन्नदयीत १८ नैतस्मिन्संवत्सरे पशुनानिष्ट्वा मांसं भक्षयेत् १९
मनसाग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु । अप्रमाद्यन्नप्रम-
त्तश्चरामि शिवेन मनसा सह भक्षयतेति यद्यादिष्टो भक्षयेदेतं तन्त्रमुक्त्वा भ-
क्षयेत् २०

इति पञ्चविंशी कण्डिका इति सप्तमः पटलः

पुनराधेयं व्याख्यास्यामः १ तस्याग्न्याधेयवत्कल्पः २ अग्नीनाधायैत-
स्मिन्संवत्सरे यो नर्ध्नुयात्स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो
ज्यान्यां पुत्रमर्त्यायां स्वेष्ठारुध्यमानेषु यदा वाङ्गेन विधुरतां नीयात् ३ आ-
ग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमते
ऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन् ४ या ते अग्न उत्सीदतः पवमाना
प्रिया तनूः । तया सह पृथिवीमाविश रथंतरेण साम्ना गायत्रेण च छन्दसा ।

या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः । तया सहान्तरिक्षमा-
विश वामदेव्येन साम्ना त्रैष्टुभेन च छन्दसा । ततो न ऊर्जमा कृधि गृहमेधं
च वर्धय । या ते अग्ने सूर्ये शुचिः प्रिया तनूः शुक्रेऽध्यधि संभृता । तया
सह दिवमाविश बृहता साम्ना जागतेन च छन्दसा ततो नो वृष्ट्यावत ।
यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः । ताभिर्नः कामान्धुक्ष्वेह प्रजां
पुष्टिमथो धनम् । यास्ते अग्ने संभृतीरिन्द्रः सूकर आभरत् । तासु शोचिषु
सीदेह भस्म वैश्वानरस्य यत् ५

इति षड्विंशी कण्डिका

ये ते अग्ने वानस्पत्याः संभाराः संभृताः सह । तेभिर्गच्छ वनस्पतीन्स्वां
योनिं यथायथम् । अगन्नग्निर्यथालोकमसदत्सदने स्वे । अवीरहत्यं दे-
वेषूपागां मनसा सहेति पुरस्तात्स्विष्टकृतः सप्ताहुतीर्जुहोति १ सिद्धमिष्टिः
संतिष्ठते २ पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति ३ संवत्सरं परा-
ध्यर्मुत्सृष्टाग्निर्भवति ४ रोहिणी पुनर्वसू अनुराधा इति नक्षत्राणि ५ वर्षा-
सु शरदि वादधीत ६ कृताकृताः संभारा यजूंषि च भवन्ति ७ अपि वा
पञ्च पार्थिवान्संभारानाहरति एवं वानस्पत्यान् ८ आयतनेषु पुराणान्दर्भा-
न्संस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति ९ मध्यंदिन इतरान् १०
उपोलवैर्दर्भैः परुत्कैः संवत्सरप्रवातैराहवनीयं ज्वलन्तमुद्धरति ११ यत्त्वा
क्रुद्धः परोवपेति दक्षिणाग्निम् । यत्ते मन्युपरोप्तस्येतीतरान् १२ मनो ज्यो-
तिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते १३ सप्त ते अग्ने समिधः सप्त जिह्वा
इत्यग्निहोत्रं जुहोति १४

इति सप्तविंशी कण्डिका

आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा १ यदि पञ्चकपालो गायत्र्यौ सं-
याज्ये । यद्यष्टाकपालः पङ्क्त्यौ २ सर्वमाग्नेयं भवति ३ पञ्चदश सप्तदश
वा सामिधेन्यः ४ सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्ट-
कृतम् ५ अग्नाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेसु चतस्रो
विभक्तीर्दधाति ६ नोत्तमे ७ विभक्तिमुक्त्वा प्रयाजेन वषट्करोति ८
यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्येयजामहाद्विभक्तिं दध्यात्पुरा वा वष-

ट्कारात् ९ अग्निं स्तोमेन बोधयेत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति । अग्न आयूंषि पवस इति सौम्यस्य १० अग्निर्मूर्धेति वा सौम्यस्य कुर्यात् ११ प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा १२ अग्निन्यक्ताः पत्नीसंयाजानामृचो भवन्ति १३ अपि वा यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः १४ अग्ने तमद्याश्वमित्यक्षरपङ्क्त्यो याज्यानुवाक्या भवन्ति । द्वे आग्नेयस्य द्वे स्विष्टकृतः १५ पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुतीर्जुहोति १६ पुनरूजति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम् १७ एतद्वा विपरीतम् १८ उभयीर्दक्षिणा ददाति १९

इत्यष्टाविंशी कण्डिका

आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो रथ इत्येताः शतमानं च हिरण्यम् १ तस्माद्रजतं हिरण्यमित्युक्तम् २ पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनःकामस्याप्त्या इत्येकेषाम् ३ यदीतराणि न विद्येरन्नप्यनड्वाहमेव दद्यात् । अनडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणं भवति ४ देवे अग्नौ देवो अग्निरिति द्वयोरनूयाजयोर्विभक्ती दधाति ५ नोत्तमे ६ उच्चैरुत्तमं संप्रेष्यति ७ सिद्धमिष्टिः संतिष्ठते ८ आग्निवारुणमेकादशकपालमनुनिर्वपति सर्वेषामनुनिर्वाप्याणां स्थाने द्विदेवत्यानां वा ९ सिद्धमिष्टिः संतिष्ठते । संतिष्ठते पुनराधेयम् १० यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सलेकः सुलेक इति ११ यदरण्योः समारूढो नश्येत् १२ यस्य वोभावनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः १३ पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखन आलेखनः १४

इत्येकोनत्रिंशी कण्डिका इति अष्टमः पटलः इति पञ्चमः प्रश्नः

अग्निहोत्रं व्याख्यास्यामः १ अधिवृक्षसूर्य आविःसूर्ये वा धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय गार्हपत्यमभिमन्त्रयते सुगार्हपत्य इति २ अथैनं बोधयत्युद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते संसृजेथामयं च । अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदतेति ३ उद्धरेत्येव सायमाह यजमानः । उद्धरेति प्रातः ४ सहस्रं तेन कामदुघोऽवरुन्द्धे ५ वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभि-

दैव्यैर्ऋत्विग्भिरुद्धरामीति गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति ६ भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार । अन्हा यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादित्युद्ध्रियमाणमभिमन्त्रयते यजमानः सायम् । रात्र्या यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातः ७ अग्निपतयेऽग्नये मे विद्ध्यग्निपतयेऽग्नये मे मृड । अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयानन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ स्वाहा ८

इति प्रथमा कण्डिका

अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन्सादयामि यज्ञिये लोके । यो नो अग्ने निष्ठो योऽनिष्ट्योऽभिदासतादमहं तं त्वयाभिनिदधामीति पुरस्तात्परिक्रम्योदङ्मुखः प्रत्यङ्मुखो वा सायमायतनेऽग्निं प्रतिष्ठापयति । प्राङ्मुखः प्रातः १ स्वयं यजमान इध्मानाहरति विश्वदानीमाभरन्तो नातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषामेत्येतया २ यदग्ने यानि कानि चेत्येताभिः पञ्चभिः प्रतिमन्त्रमग्निषु महत इध्मानादधाति ३ आहवनीये वर्षिष्ठम् ४ यथाहितास्तेनानुपूर्व्येणाहवनीयाद्वा प्रक्रम्य ५ तथाग्निराधेयो यथाहुतिर्न व्यवेयात् ६ नान्तराग्नी संचरति ७ यदि पूर्वोऽनुगतः संचर्यम् ८ पश्चाद्धि स तर्हि गतः ९ कामं हुते संचर्यमित्येके १० नक्तमाहवनीयं धारयति ११ नित्यो गतश्रियो ध्रियते १२ नित्यं गार्हपत्यम् १३ तथान्वाहार्यपचनं यदि मथित्वाहितो भवति १४ यद्याहार्योऽहरहरेनं दक्षिणत आहरन्ति १५ उपवसथ एवैनमाहरेयुर्नवावसान एवैनमाहरेयुरिति वाजसनेयकम् १६

इति द्वितीया कण्डिका

परिसमूहनेनाग्नीनलंकुर्वन्ति १ पुरस्तादलंकाराः सायमुपरिष्टादलंकाराः प्रातः २ एतद्वा विपरीतम् । उभयतोऽलंकाराः सायं तथा प्रातरित्येके ३ अग्ने गृहपते शुन्धस्वेति गार्हपत्यमग्ने वह्ने शुन्धस्वेति दक्षिणाग्निमग्ने सम्राट् शुन्धस्वेत्याहवनीयमग्ने सभ्य शुन्धस्वेति सभ्यमग्ने परिषद्य शुन्धस्वेत्यावसथ्यम् ४ उदगग्रैः प्रागग्रैश्च दर्भैस्तृणैर्वाग्नीन्परिस्तृणात्यग्निमग्नी वा ५ खादिरः स्रुवो वैकङ्कत्यग्निहोत्रहवणी बाहुमात्र्यरत्निमात्री वा ६ प्रसृताकृ-

तिरार्यकृताग्निहोत्रस्थाल्यूर्ध्वकपालाचक्रवर्ता भवति ७ दक्षिणेन विहार-मग्निहोत्री तिष्ठति तां यजमानोऽभिमन्त्रयत इडासि व्रतभृदहं नावुभयोर्व्रतं चरिष्यामि सुरोहिष्यहं नावुभयोर्व्रतं चरिष्यामीड एहि मयि श्रयस्वेर एह्य-दित एहि गौरेहि श्रद्ध एहि सत्येन त्वाह्वयामीति ८ अथ वेदिदेशमभिमृ-शतीयमसि तस्यास्तेऽग्निर्वत्सः सा मे स्वर्गं च लोकममृतं च धुक्ष्वेति ९ पूषासीति दक्षिणतो वत्समुपसृज्य प्राचीमावृत्य दोग्ध्युदीचीं प्राचीमुदीचीं वा १० न शूद्रो दुह्यात् ११ असतो वा एष संभूतो यच्छूद्रः १२ दुह्याद्वा १३ यदेव गार्हपत्येऽधिश्रयति पवयत्येवैनत् १४ अग्निहोत्रस्थाल्या दोहनेन च दोग्धि १५

इति तृतीया कण्डिका

पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् । अपरौ दुह्यात्क-निष्ठस्य कानिष्ठिनेयस्य यो वानुजावरो यो वा बुभूषेत् १ न स्तनान्संमृशति २ यथोपलम्भं नित्ये कल्पे दोग्धि ३ पूर्ववदुपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते ४ अस्तमिते दोग्धि ५ अन्नरस्तमिते होतव्यम् ६ समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्संधी तस्मात्संधौ होतव्यमि-ति शैलालिब्राह्मणं भवति ७ नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् ८ उपस्युपोदयं समयाविषित उदिते वा प्रातः ९ यदुदिते जुहोत्यग्निष्टोमं ते-नावरुन्द्धे यन्मध्यंदिने जुहोत्युक्थ्यं तेनावरुन्द्धे यदपराह्णे जुहोति षोडशिनं तेनावरुन्द्धे यत्पूर्वरात्रे जुहोति प्रथमं तेन रात्रिपर्यायमाप्नोति यन्मध्यरात्रे जु-होति मध्यमं तेन रात्रिपर्यायमाप्नोति यदपररात्रे जुहोति जघन्यं तेन रात्रिप-र्यायमाप्नोति १० स न मन्येत सर्वेष्वेतेषु कालेषु होतव्यमापदि हुतनित्येव प्रतीयादिति विज्ञायते ११ यो होमकालः सोऽङ्गानाम् १२

इति चतुर्थी कण्डिका इति प्रथमः पटलः

पत्नीवदस्याग्निहोत्रं भवति १ स्व आयतने पत्न्युपविशति २ अपरेणाहव-नीयं दक्षिणातिक्रम्योपविश्य यजमानो विद्युदसि विद्य मे पाप्मानमृतात्स-त्यमुपैमि मयि श्रद्धेत्यप आचामति ३ ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । आहवनीयमग्रे

ऽथ गार्हपत्यमथ दक्षिणाग्निमपि वा गार्हपत्यमाहवनीयं दक्षिणाग्निं यथा वाहिताः ४ यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीति गार्हपत्यात्प्रक्रम्य संततामुदकधारां स्रावयत्याहवनीयात् ५ धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय भूतकृत स्थापोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य व्यन्तान्गार्हपत्येन कृत्वा सगरा स्थेत्यभिमन्त्र्य जपत्यग्नय आदित्यं गृह्णाम्यह्ने रात्रिमिति सायम् । आदित्यायाग्निं गृह्णामि रात्र्या अहरिति प्रातः ६ इडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपा विरूपास्तेषां सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति तेष्वग्निहोत्रमधिश्रयति ७

इति पञ्चमी कण्डिका

रेतो वा अग्निहोत्रम् । न सुशृतं कुर्याद्रेतः कूलयेन्नोऽशृतमन्तरेवैव स्यात् १ समुदन्तं होतव्यम् २ उदन्तीकृत्य प्रतिषिच्यम् ३ अप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्य पाप्मानं तुस्तूर्षमाणस्याथो सर्वेभ्यः कामेभ्यो ऽथो यः कामयेत वीरो म आजायेतेति ४ अप्सरधिश्रितं वा ५ अदब्धेन त्वा चक्षुषावेक्ष इति तृणेन ज्वलतावेक्षते ६ दोहनसंक्षालनं स्रुव आनीय हरस्ते मा विनैषमिति तेन प्रतिषिञ्चत्यपां वा स्तोकेन ७ उद्भव स्थोदहं प्रजया प्र पशुभिर्भूयासं हरस्ते मा विगादुद्यन्सुवर्गो लोकस्त्रिषुलोकेषु रोचयेतिपुनरेवावेक्ष्यान्तरितं रक्षोऽन्तरिता अरातयोऽपहता व्यृद्धिरपहतं पापं कर्मापहतं पापस्य पापकृतः पापं कर्म यो नः पापं कर्म चिकीर्षति प्रत्यगेनमृच्छेति त्रिः पर्यग्नि कृत्वा घर्मोऽसि रायस्पोषवनिरिहोर्जं दृंहेति वर्त्म कुर्वन्प्रागुद्वासयत्युदक् प्रागुदग्वा ८ न वर्त्म करोतीत्येके ९ इह प्रजां पशून्दंहेति त्रिर्भूमौ प्रतिष्ठाप्य सभूतकृत स्थ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीरिति गार्हपत्येऽङ्गारान्प्रत्यूह्य १०

इति षष्ठी कण्डिका

देवस्य त्वा सवितुः प्रसव इति स्रुक्स्रुवमादाय प्रत्युष्टं रक्षाः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यारिष्टो यजमानः पत्नी चेति संमृश्य हिर-

ग्ययष्टिरस्यमृतपलाशा स्रोतो यज्ञानामित्यग्निहोत्रहवणीमभिमन्त्र्योमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमानमिति सायमाह । ओमुन्नयामीति प्रातः १ हविर्देवानामसि मृत्योर्मेऽभयं स्वस्ति मेऽस्त्वभयं मे अस्त्वित्युपांशूक्त्वो- मुन्नयेत्युच्चैरनुजानाति । अपचारे यजमानस्य स्वयमात्मानमनुजानीयात् २ उन्नीयमान उभौ वाचं यच्छत आ होमात् ३ न चाभिमीलते तिष्ठति च यजमानः ४ उन्नीत उपविशति ५ चतुरुन्नयति ६ यं कामयेत पुत्राणा- मयमृध्नुयादिति तं प्रति पूर्णमुन्नयेत् ७ यदि कामयेत ज्येष्ठतोऽस्य प्रजार्धु- का स्यादिति पूर्णं प्रथममुन्नयेत्तत ऊनतरमूनतरम् । कणिष्ठत इत्येतद्विपरी- तम् । सर्वे समावद्वीर्या इति समम् ८ यथोपलम्भं नित्ये कल्प उन्नयति ९

इति सप्तमी कण्डिका

अग्नये च त्वा पृथिव्यै चोन्नयामीति प्रथमं वायवे च त्वान्तरिक्षाय चेति द्वितीयं सूर्याय त्वा दिवे चेति तृतीयं चन्द्रमसे च त्वा नक्षत्रेभ्यश्चेति चतुर्थम् १ अद्भ्यश्च त्वौषधीभ्यश्चेति पञ्चमं जमदग्नीनाम् २ भूरिडा भुव इडा सुवरि- डा करदिडा पृथगिडेति वा प्रतिमन्त्रम् ३ पशून्मे यच्छेत्यपरेण गार्हपत्य- मुन्नयनदेशेऽभितरां वा सादयित्वा गार्हपत्ये हस्तं प्रताप्य संमृशति सजूर्दे- वैः सायंयावभिः सायंयावानो देवाः स्वस्ति संपारयन्तु पशुभिः संपृचीय प्रजां दृंहेति सायम् । सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो देवाः स्वस्ति संपारयन्तु पशुभिः संपृचीय प्रजां दृंहेति प्रातः ४ दशहोत्रा चाभिमृश्य पा- लाशीं समिधं प्रादेशमात्रीमुपरि धारयन्गार्हपत्यस्य समयार्चिर्हरति ५ उ- र्वन्तरिक्षं वीहीत्युद्द्रवति ६ उद्द्रवन्दशहोतारं व्याचष्टे ७ समं ग्राणैर्हरति ८ स्वाहाग्नये वैश्वानरायेति मध्यदेशे नियच्छति ९ वाताय त्वेत्युद्गृह्णाति १० उपप्रेत संयतध्वं मान्तर्गात भागिनं भागधेयात्सप्तर्षीणां सुकृतां यत्र लो- कस्तत्रेमं यज्ञं यजमानं च धेह्युप प्रत्नमुप भूर्भुवः सुवरायुर्मे यच्छेत्यपरेणाह- वनीयं दर्भेषु सादयति ११

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

यस्याग्नावुद्ध्रियमाणे हूयते वसुषु हुतं भवति । निहितो धूपायच्छेते रुद्रेषु । प्रथममिध्ममर्चिरालभत आदित्येषु । सर्व एव सर्वश इध्म आदीप्तो भवति

विश्वेषु देवेषु । नितरामर्चिरुपावैति लोहनीकेव भवतीन्द्रे हुतं भवति । अङ्गारा भवन्ति तेभ्योऽङ्गारेभ्योऽर्चिरुदेति प्रजापतावेव । शरोऽङ्गारा अध्यूहन्ते ततो नीलोपकाशोऽर्चिरुदेति ब्रह्मणि हुतं भवति १ यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव भाति तद्देवानामास्यं तस्मात्तथा होतव्यं यथास्ये ऽपिदधात्येवं तदिति विज्ञायते २ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमु- पैमीति होष्यन्नप उपस्पृश्य पालाशीं समिधमादधात्येकां द्वे तिस्रो वा ३ एषा ते अग्ने समिदिति । हिरण्ययं त्वा वंशं स्वर्गस्य लोकस्य् संक्रमणं दधामीति द्वितीयाम् । रजतां त्वा हरितगर्भामग्निज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकाय रात्रिमिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति सायं तृतीयाम् । हरिणीं त्वा रजतगर्भां सूर्यज्योतिषमक्षितिं काम- दुघां स्वर्ग्यां स्वर्गाय लोकायाहरिष्टकामुपदध इति प्रातः ४

इति नवमी कण्डिका

समिधमाधाय प्राणयापान्य निमील्य वीक्ष्य हुत्वा ध्यायेद्यत्कामः स्यात् १ हुत्वा महदभिवीक्षते २ आदीप्तायां जुहोति श्यावायां वा यदा वा सम- तीतार्चिर्लेलायतीव । धूपायत्यां ग्रामकामस्य ज्वलत्यां ब्रह्मवर्चसकाम- स्याङ्गारेषु तेजस्कामस्य ३ द्व्यङ्गुले मूलात्समिधमभि जुहोति ४ अभि- क्रामं सायं जुहोत्यवक्रामं प्रातः ५ उभयत्र वाभिक्रामम् ६ भूर्भुवः सुव- रिति होष्यञ्जपति ७ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः ८ संसृष्टहोमं वाग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायम् । सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः ९ इषे त्वेति स्रुङ्मुखादवाचीनं सायं लेपमवसाष्टर्यूर्जे त्वेति । ऊर्ध्वं प्रातः १० ओषधीभ्यस्त्वौषधीर्जिन्वेति बर्हिषि लेपं निमृज्य वर्चो मे यच्छेति स्रुचं सादयित्वाग्ने गृहपते मा मा संताप्सीरात्मन्नमृतमधिषि प्रजा ज्योतिरदब्धेन त्वा चक्षुषा प्रतीक्ष इति गार्हपत्यं प्रतीक्ष्य भूर्भुवः सुवरित्युत्तरामाहुतिं पूर्वार्धे समिधि जुहोति तूष्णीं वा ११ न समिदभिहोतवा इत्येके १२

इदि दशमी कण्डिका

वर्षीयसीमुत्तरामाहुतिं हुत्वा भूयो भक्षायावशिनष्टि १ यं कामयेत पापी-

यान्स्यादिति भूयस्तस्य पूर्वं हुत्वोत्तरं कनीयो हुहुयात् २ हुत्वा स्रुचमुद्गृह्य रुद्र मृडानार्भव मृड धूर्त नमस्ते अस्तु पशुपते त्रायस्वैनमिति त्रिः स्रुचाग्नि-मुदञ्चमतिवल्गयति ३ पूर्ववल्लेपमवमृज्य प्राचीनावीती स्वधा पितृभ्यः पितॄञ्जिन्वेति दक्षिणेन वेदिं भूम्यां लेपं निमृज्य प्रजां मे यच्छेति स्रुचं साद-यित्वा वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामिति हुत्वाप उपस्पृश्या-न्तर्वेदि स्रुक् । अथाङ्गुल्यापादाय पूषासीति लेपं प्राश्नांत्यशब्दं कुर्वन्न-तिहाय दतः ४ अप आचम्यैवं पुनः प्राश्याचम्य बर्हिषोपयम्योदङ्ङावृ-त्योत्सृप्य गर्भेभ्यस्त्वा गर्भान्प्रीणीह्याग्नेयं हविः प्रजननं मे अस्तु दशवीरं स-र्वगणं स्वस्तये । आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टि-सनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धेहि । राय-स्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेत्युदग्दण्डया प्राग्दण्डया वा स्रुचाचा-मति ५

इत्येकादशी कण्डिका

सौर्यं हविरिति प्रातर्मन्त्रं संनमति १ द्विः स्रुचं निर्लिह्याद्भिः पूरयित्वो-च्छिष्टभाजो जिन्वेति पराचीनं निनीयाचम्याग्रेणाहवनीयं दर्भैरग्निहोत्रहवणीं प्रक्षालयति २ न मांसधौतस्य देवा भुञ्जत इति विज्ञायते ३ अद्भिः स्रुचं पूरयित्वा सर्पेभ्यस्त्वा सर्पाञ्जिन्वेति प्रतिदिशं व्युत्सिच्य सर्पान्पिपीलिका जिन्व सर्पेतरजनाञ्जिन्व सर्पदेवजनाञ्जिन्वेति तिस्रः स्रुच उत्सिच्य चतुर्थीं पूरयित्वा पृथिव्याममृतं जुहोमि स्वाहेत्यपरेणाहवनीयं निनीय शेषं पत्न्या अञ्जलौ गृहेभ्यस्त्वा गृहाञ्जिन्वेति ४ यदि पत्नी नानुष्याद्देवानां पत्नीभ्यो ऽमृतं जुहोमि स्वाहेति पत्न्यायतने निनयेत् ५ अपरं स्रुच्यानीय विप्रुषां शान्तिरसीत्युन्नयनदेशे निनीयाहवनीये स्रुचं प्रताप्य हस्तोऽवधेयो हस्तो वा प्रताप्य स्रुच्यवधेयः ६ तयोदगुद्दिशति सप्तर्षिभ्यस्त्वा सप्तर्षीञ्जिन्वेति ७

इति द्वादशी कण्डिका इति तृतीयः पटलः

अग्ने गृहपते परिषद्य जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोत्येकां द्वे तिस्र-श्चतस्रो वा १ अग्नये गृहपतये रयिपतये पुष्टिपतये कामायान्नाद्याय स्वाहे-त्येतामेके समामनन्ति २ समभ्युच्चयवदेके ३ अग्नेऽदाभ्य परिषद्य जुष-

स्व स्वाहेति स्रुवेणान्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा ४ अन्नपते ऽन्नस्य नो देहीति द्वितीयाम् ५ अप्राश्य वापरयोर्जुहुयात् ६ आहवनीये होमो नापरयोः ७ यदाहवनीये हुत्वापरयोर्जुहुयाद्यथा स्वर्गाल्लोकात्प्रत्यवरोहेत्तादृक्तदिति विज्ञायते ८ सर्वे वा एते होमार्था आधीयन्ते । चतस्रो गार्हपत्ये जुहोति चतस्रोऽन्वाहार्यपचने द्वे आहवनीये । दश संपद्यन्ते । दशाक्षरा विराड्विराजा यज्ञः संमित इति बह्वृचब्राह्मणं भवति ९ दीदिहि दीदिदासि दीदायेत्येषोऽग्न्युपसमिन्धन आम्नातः १० दीदिहि दीदिदासि दीदाय दीद्यासं दीद्यस्वेति वा प्रतिमन्त्रम् ११ यथाहितास्तेनानुपूर्व्येणाहवनीयाद्वा प्रक्रम्य १२ अन्तर्वेद्यपो निनीय १३

इति त्रयोदशी कण्डिका

पूर्ववदग्नीन्परिषिञ्चति । न धाराम् १ अपिप्रेरग्ने स्वां तन्वमयाड् द्यावापृथिवी ऊर्जमस्मासु धेहीत्यग्निहोत्रस्थाल्यां तृणमङ्क्त्वानुप्रहरति २ सा ह्यग्निहोत्रस्य संस्थितिः ३ न बर्हिरनुप्रहरेत् । असंस्थितो वा एष यज्ञो यदग्निर्होत्रमित्युक्तम् ४ अग्निहोत्रस्थालीं प्रक्षाल्याक्षितमक्षित्यै जुहोमि स्वाहेत्युन्नयनदेशे निनयति । अन्तर्वेदि वा ५ वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामप्सु श्रद्धेत्यप आचम्य यजमानोऽन्तर्वेदि मार्जयतेऽन्नादाः स्थान्नादो भूयासं यशः स्थ यशस्वी भूयासं श्रद्धा स्थ श्रद्धिषीयेति ६ आपो ह श्लेष्म प्रथमं संबभूव येन धृतो वरुणो येन मित्रः । येनेन्द्रं देवा अभ्यषिञ्चन्त राज्याय तेनाहं मामभिषिञ्चामि वर्चस इति शिरस्यप आनयते ७ द्वयोः पयसा पशुकामस्य जुहुयात् ८ अग्निहोत्रस्थाल्या पूर्वां दोग्धि । दोहनेनोत्तराम् ९ अधिश्रित्य पूर्वमुत्तरमानयति १० यस्य रुद्रः पशूञ्छमायेतैतयैवावृता द्वयोः पयसा सायंप्रातर्जुहुयात् ११ तच्चेदतिहन्यात्सजूर्जातवेदो दिव आ पृथिव्या अस्य हविषो घृतस्य वीहि स्वाहेति सायंप्रातराज्येन जुहुयात् १२ अनारमत्यग्ने दुःशीर्ततनो जुषस्व स्वाहेति द्वादशाहमाज्येन हुत्वा तत ऊर्ध्वं न सूर्क्षेत् १३

इति चतुर्दशी कण्डिका

पयसा पशुकामस्य जुहुयाद्दध्नेन्द्रियकामस्य यवाग्वा ग्रामकामस्यौदनेनान्ना-

द्यकामस्य तण्डुलैरोजस्कामस्य । बलकामस्येत्येके । मांसेन यशस्का-
मस्य सोमेन ब्रह्मवर्चसकामस्याज्येन तेजस्कामस्य १ प्रतिषेकं यवागूं श्र-
पयति २ शृतां यजुषा प्रतिषिञ्चति ३ एवं मांसम् ४ नाज्यं प्रतिषिञ्चति
हरस्ते मा विनैषमिति । द्वे दर्भाग्रे प्रत्यस्यत्येकं वा ५ न दध्यधिश्रयति ।
शृतं हि तन्न प्रतिषिञ्चति प्रतिषिक्तं हि तदातञ्चनेनेति विज्ञायते ६ एवं त-
ण्डुलानोदनं सोमं च ७ आज्येन तण्डुलैरोदनेन सोमेन वा जुहुयाद्यस्या-
प्रति षेक्यं स्यात् ८ आज्येन तेजस्कामः संवत्सरं जुहुयाद्द्वादशाहं वा ९
न राजन्यस्य जुहुयात् १० होमकाले गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनो
है-वास्य हुतं भवति ११ नित्यमग्न्युपस्थानं वाचयितव्यः १२ यो वा
सोम-याजी सत्यवादी तस्य जुहुयात् १३ अहरहर्यजमानः स्वयमग्निहोत्रं
जुह-यात् १४ पर्वणि वा १५ ब्रह्मचारी वा जुहुयाद्ब्रह्मणा हि स
परिक्रीतो भवति । क्षीरहोता वा जुहुयाद्धनेन हि स परिक्रीतो भवतीति
बह्वृचब्राह्म-णम् १६

इति पञ्चदशी कण्डिका इति चतुर्थः पटलः

अग्न्युपस्थानं व्याख्यास्यामः १ उपतिष्ठत इति चोद्यमान आहवनीयमेवो-
पतिष्ठेत । वचनादन्यम् २ उत्तरामहुतिमुपोत्थाय कवातिर्यङ्ङिवोपति-
ष्ठेत ३ उपप्रयन्तो अध्वरमिति षड्भिः ४ अग्नीषोमाविमं सु म इति सप्त-
म्या पूर्वपक्षे । ऐन्द्राग्न्या सप्तम्यापरपक्षे ५ दधिक्राव्णो अकारिषमित्यु-
भयत्राष्टम्या ६ ममाग्ने वचो विहवेष्वस्त्विति चतस्रः पुरस्तादग्नीषोमीया-
याः पूर्वपक्षे । तथैन्द्राग्न्या अपरपक्षे ७ अग्न आयूंषि पवस इति षड्भिः
संवत्सरेसंवत्सरे सदा वा ८ पवमानहवींषि वा संवत्सरेसंवत्सरे निर्वपे-
देतासां स्थाने ९ आयुर्दा अग्न इति सिद्ध्मा चित्रावसोः १० त्रिश्चित्रावसु-
ना सायमुपतिष्ठते । त्रिरर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीय
११ इन्धानास्त्वा शतं हिमा इत्युपस्थायेन्धानास्त्वा शतं हिमाः । अग्नेः
समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्पा म एधि यमस्य स-
मिदसि मृत्योर्मा पाहीति चतस्रः समिध एकैकस्मिन्नाधाय सं त्वमग्ने सूर्य-
स्य वर्चसागथा इत्यनुवाकशेषेणोपस्थाय वयं सोम व्रते तव मनस्तनूषु
बिभ्रतः प्रजावन्तो अशीमहीति मुखं विमृष्टे १२

इति षोडशी कण्डिका

संपश्यामि प्रजा अहमिति गृहान्प्रेक्षते १ अम्भः स्थाम्भो वो भक्षीयेति गोष्ठमुपतिष्ठते २ रेवती रमध्वमित्यन्तराग्नी तिष्ठञ्जपति ३ संहितासि विश्वरूपीरिति वत्समभिमृशति ४ संहितासि विश्वरूपेति वत्साम् ५ भुवनमसि सहस्रपोषं पुषेति वा वत्सम् ६ उप त्वाग्ने दिवेदिव इति तिसृभिर्गायत्रीभिर्गार्हपत्यमुपतिष्ठतेऽग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः ७ स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मादित्येषा चतुर्थी भ-वति ८ ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान्प्रेक्षते पशून्वा ९ महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधष वरुणस्य । नहि तेषाममा चन नाध्वसु वारणेष्वा । ईशे रिपुरघशंसः । ते हि पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम् । वि दाशुषे वार्याणीति प्राजापत्येन तृचेनोपतिष्ठते १० यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत । स्वस्त्येव पुनरागच्छतीत्ययज्ञसंयुक्तः कल्पः ११ मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते । यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः । परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः १२

इति सप्तदशी कण्डिका

तत्सवितुर्वरेण्यं सोमानं स्वरणं मित्रस्य चर्षणीधृतः प्र स मित्र कदा चन स्तरीरसि कदा चन प्रयुच्छसि परि त्वाग्ने पुरं वयमित्युपस्थाय १ निमृदोऽसि न्यहं तं मृद्यासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणस्य पदः पार्ष्ण्यां निमृद्नीयाद्यदि पापीयसा स्पर्धेत । प्रभूरसि प्राहं तमभिभूयासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दक्षिणतः पदो निगृह्णीयाद्यदि सदृशेन । अभिभूरस्यभ्यहं तं भूयासं योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति प्रपदेन यदि श्रेयसा २ पूषा मा पशुपाः पातु पूषा मा पथिपाः पातु पूषा माधिपाः पातु पूषा माधिपतिः पात्विति लोकानुपस्थाय प्राची दिगग्निर्देवताग्निं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु यो

मैतस्यै दिशोऽभिदासति । उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋृच्छतु यो मैतस्यै दिशोऽभिदासति । ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋृच्छतु यो मैतस्यै दिशोऽभिदासति । इयं दिगदितिर्देवतादितिं स ऋृच्छतु यो मैतस्यै दिशोऽभिदासतीति यथालिङ्गं दिश उपस्थाय ३

इत्यष्टादशी कण्डिका

अग्नीनुपसमाधाय धर्मो मा धर्मणः पातु विधर्मो मा विधर्मणः पात्वायुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ्चावाङ्चोरुग उरुगस्य ते वाचा वयं सं भक्तेन गमेमहीत्युपस्थायाग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते १ अग्ने गृहपत इति च । पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य । अमुष्मा इति जातस्य २ यत्किंचाग्निहोत्री कामयेत तदग्नीन्याचेत । उपैनं तन्नमतीति विज्ञायते ३ उपस्थेयोऽग्नी३र्नोपस्थेया३इत्युक्तम् ४ नक्तमुपतिष्ठते न प्रातः ५ न प्रातरग्निमुप चनावरोहेन्न प्रातराहिताग्निश्चन मन्येतेति वाजसनेयकम् ६ भूर्भुवः सुवः सुप्रजाः ह्प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैरित्येवोपतिष्ठेतेति वाजसनेयकम् । भर्तुं वः शकेयं श्रद्धा मे मा व्यागादिति वा ७ वात्सप्रेणैव सायं प्रातरुपतिष्ठेतेत्येके ८ गोषूक्तेनाश्वसूक्तेन वा ९

इत्येकोनविंशी कण्डिका इति पञ्चमः पटलः

प्रातरवनेकेन प्रातरुपस्थेयः १ अधिश्रित उन्नीयमाने वा ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रो जपित्वापां पते योऽपां भागः स त एष प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातय इति त्रिर्भूमौ प्रतिषिच्य कालाय वां जैत्रियाय वामौद्भेत्त्रियाय वामन्नाद्याय वामवनेनिजे सुकृताय वाम् । इदमहं दुरद्मन्यां निष्प्लावयामि भ्रातृव्याणां सपत्नानामहं भूयासमुत्तमः । अपां मैत्रादिवोदकमिति हस्तौ प्रक्षाल्य श्रियं धातर्मयि धेहि श्रियो माधिपतिं कुरु । विशामीशानो मघवेन्द्रो मा यशसा नयदिति जपित्वाथर्व्युष्टा देवजूता वीडु छपथजम्भनीः । आपो मलमिव प्राणिजन्नस्मत्सु शपथाँ अधीत्याचम्येन्द्रियावतीमद्याहं वाचमुद्यासं दीर्घप्राणोऽच्छिन्नो

ऽदब्धो गोपाः । अजस्त्रं दैव्यं ज्योतिः सौपर्णं चक्षुः सुश्रुतौ कर्णौ देवश्रुतौ कर्णौ केशा बर्हिः शिखा प्रस्तरो यथास्थानं कल्पयध्वं शं हृदयायादो मा मा हासिष्टेति यथालिङ्गमङ्गानि संमृश्य २

इति विंशी कण्डिका

वर्चोऽसि वर्चो मयि धेह्यायुकृदायुःपत्नी स्वधा वो गोप्त्र्यो मे स्थ गोपायत मा रक्षत मात्मसदो मे स्थ । मा नः कश्चित्प्रघान्मा प्रमेष्मह्युप प्रत्नमुप भूर्भुवः सुवरायुर्मे यच्छतेति सर्वानुपस्थायोत्तरेणानुवाकेनाहवनीयं घर्मा जठरान्नादं मामद्यास्मिञ्जने जुरुतमन्नादोऽहमद्यास्मिञ्जने भूयासमनन्नादः स योऽस्मान्द्वेष्टि । कवी मातरिश्वाना पशुमन्तं मामद्यास्मिञ्जने कुरुतं पशुमानहमद्यास्मिञ्जने भूयासमपशुः स योऽस्मान्द्वेष्टि । यमाङ्गिरसा यशस्विनं मामद्यास्मिञ्जने कुरुतं यशस्व्यहमद्यास्मिञ्जने भूयासमयशाः स योऽस्मान्द्वेष्टि । अग्ने यो नो अन्ति शपति यश्च दूरे समानो अग्ने अरणो दुरस्युः । वैश्वानरेण सयुजा सजोषास्तं प्रत्यञ्चं संदह जातवेदः । अग्ने यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते तपस्तेन तं प्रतितप योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते हरस्तेन तं प्रतिहर योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते तेजस्तेन तं प्रतितितितिग्धि योऽस्मान्द्वेष्टि यं च वयं द्विष्मः १

इत्येकविंशी कण्डिका

अग्ने रुचां पते नमस्ते रुचे रुचं मयि धेहि । अर्वाग्वसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीय । तन्तुरसि ततो मा च्छित्था असौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्विति पुत्राणां नामानि गृह्णाति त्रिस्त्रिरेकैकस्य । स्वस्ति वोऽस्तु ये मामनुस्थ षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क्च सूनृता च । यथा ह त्यद्वसवो गौर्यं चित्पदि षितामभुञ्चता यजत्राः । एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः । वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् । अग्न आयूंषि पवसे दधिक्राव्णो अकारिषमिति द्वे ममाग्ने

वर्चो विहवेष्वस्त्विति चतस्रोऽग्नीषोमाविमं सु म इत्येषा । तत्सवितुर्वृ-
णीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि । अ-
स्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् । न मिनन्ति स्वराज्यम् १

इति द्वाविंशी कण्डिका

अद्या नो देव सवितः प्रजावत्सावीः सौभगं । परा दुःष्वप्रियं सुव । वि-
श्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्म आ सुव । अनागसो
अदितये वयं देवस्य सवितुः सवे । विश्वा वामानि धीमहि । स हि र-
त्नानि दाशुषे सुवाति सविता भगः । तं चित्रं भागमीमहे । वाममद्य स-
वितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः सौभगम् । वामस्य हि क्ष-
यस्य देव भूरेरया धिया वामभाजः स्याम । दीक्षा तपो मनसो मातरिश्वा
बृहस्पतिर्वाचो अस्याः स योनिः । वेदांसि विद्या मयि सन्तु चारवोऽग्नी-
षोमा यशो अस्मासु धत्तम् । अग्निर्येन विराजति सोमो येन विराजति सू-
र्यो येन विराजति विराड् येन विराजति तेनाहं विश्वतस्परि विराज्यासमि-
हैकवृदित्युपस्थायाग्नेस्तृणान्यपचिनोति । तेजस्वी ह ब्रह्मवर्चसी भवतीति
विज्ञायते १

इति त्रयोविंशी कण्डिका इति षष्ठः पटलः

प्रवत्स्यन्संप्रेष्यत्यग्नीन्समाधेहीति १ ज्वलत उपतिष्ठते २ पशून्नः शंस्य
पाहि तान्नो गोपायास्माकं पुनरागमादित्याहवनीयम् । प्रजां नो नर्य पाहि
तां नो गोपायास्माकं पुनरागमादिति गार्हपत्यम् । अन्नं नो बुध्न्य पाहि तन्नो
गोपायास्माकं पुनरागमादित्यन्वाहार्यपचनम् ३ अन्तराग्नी तिष्ठञ्जपतीमान्नो
मित्रावरुणा गृहान्गोपायतं युवम् । अविनष्टानविहृतान्पूषैनानभिरक्षत्वा-
स्माकं पुनरागमादिति ४ पूर्ववद्विराट्क्रमैरुपस्थायाशित्वा प्रवसथमेष्य-
न्नाहाग्नीन्समाधेहीति ५ ज्वलत उपतिष्ठते प्रजां मे नर्य पाहि तां मे गोपा-
यास्माकं पुनरागमादिति गार्हपत्यम् । अन्नं मे बुध्न्य पाहि तन्मे गोपाया-
स्माकं पुनरागमादित्यन्वाहार्यपचनम् । पशून्मे शंस्य पाहि तान्मे गोपा-
यास्माकं पुनरागमादित्याहवनीयम् ६ मम नाम प्रथमं जातवेद इति च
७ वाग्यतोऽभिप्रव्रजति मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।

मान्तःस्थुर्नो अरातयः । उदस्माँ उत्तरान्नयाग्ने घृतेनाहुत । रायस्पोषेण संसृज प्रजया च बहून्कृधीति ८ आरादग्निभ्यो वाचं विसृजते ९

इति चतुर्विंशी कण्डिका

प्रवसन्काले विहारमभिमुखोऽग्न्युपस्थानं जपति १ इहैव सन्तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इति यद्यनुपस्थाय प्रवसेदेतयैवोपतिष्ठेत २ समिधः कृत्वा प्रत्येति ३ यथा ह वा इतं पितरं प्रोषिवांसं पुत्राः प्रत्याधावन्त्येवं ह वा एतमग्नयः प्रत्याधावन्ति । स शकलान्दारूणि वाहरन्नेति यथैव तत्पुत्रेभ्य आहरन्नेति । तादृक्तदिति विज्ञायते ४ आरादग्निभ्यो वाचं यच्छति ५ यद्येनं राजा पिताचार्यो वान्तरेणाग्नीन्स्याच्छदिर्दर्शे नैनमाद्रियेत ६ विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम । नमस्ते अस्तु मीढुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वः सं मा रय्या सृजेत्यभ्यैति ७ अग्नीन्समाधेहीति ८ ज्वलत उपतिष्ठते ९ पशून्नः शंस्याजूगुपस्तान्नः पुनर्देहीत्याहवनीयमभिप्राण्याग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः । त्वं साहस्रस्य राय ईशिषे सहस्रधारस्य पयसः । तस्य नो रास्व तस्य ते भक्षीय तस्य ते वयं भूयिष्ठभाजो भूयास्मेत्याहवनीयम् १०

इति पञ्चविंशी कण्डिका

प्रजां नो नर्याजूगुपस्तां नः पुनर्देहीति गार्हपत्यमभिप्राण्याग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः । शतं हिमा द्वा यू राधांसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति गार्हपत्यम् १ अन्नं नो बुध्न्याजूगुपस्तन्नः पुनर्देहीत्यन्वाहार्यपचनमभिप्राण्यान्तराग्नी तिष्ठञ्जपति यथा प्रवत्स्यदुपस्थाने २ अजूगुपतमभ्यरात्क्षीदिति मन्त्रं संनमति ३ मम नाम तव च जातवेद इति चतसृभिराहवनीयम् ४ प्रजां मे नर्याजूगुपस्तां मे पुनर्देहीति गार्हपत्यमभ्यपान्यान्नं मे बुध्न्याजूगुपस्तन्मे पुनर्देहीत्यन्वाहार्यपचनमभ्यपान्य पशून्मे शंस्याजूगुपस्तान्मे पुनर्देहीत्याहवनीयमभ्यपान्य पूर्ववद्विराट्क्रमैरुपतिष्ठते । अजूगुप इति मन्त्रं संनमति ५ अग्न्युपस्थानवदत्र

समिधो दिशां चोपस्थानम् ६ नवमीं चेदतिप्रवसेन्मित्रो जनान्यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात् ७ समिध आहुतिमुपस्थानमित्येवमनुपूर्वाण्येके समामनन्ति ८

इति षड्विंशी कण्डिका

तदाहुर्नाग्निरुपस्थेयः कः श्रेयांसं विषुप्तं बोधयिष्यतीति । अभयंकराभयं मे कुरु स्वस्ति मेऽस्त्वभयं मे अस्त्वित्येव ब्रूयात् । प्रवत्स्यदुपस्थानमागतोपस्थानं चाधिकृत्य वाजसनेयिनः समामनन्ति १ नमो वोऽस्तु प्रवत्स्यामि नमो वोऽस्तु प्रावात्स्यमिति बृह्वृचाः २ गृहा मा बिभीत मा वेपिढ्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुवनिः सुमेधा गृहानैमि मनसा मोद मानः । येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता भूरिधनाः सखायः स्वादुसंमुदः । अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा । उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु न इति गृहानभ्येति ३ क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयोरिति प्रविशति ४ ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानागां मनसा मोदमानः । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामीति प्रविश्य जपति । संविशन्वा ५

इति सप्तविंशी कण्डिका इति सप्तमः पटलः

सगृहः प्रयास्यन्वास्तोष्पतीयं जुहोति १ अहुते यानेषु भण्डान्यारोपयन्ति २ न हीनमन्वाहरेयुः ३ यद्यनोवाह्यं स्यात्पूर्वं तं प्रवहेयुरप वोद्धरेयुः ४ यत्र संहिता रात्रीर्वसेत्पञ्च सप्त नव दश वा तत्प्रयास्युञ्जुहुयात् ५ नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यञ्जुहुयात् ६ दक्षिणो युक्तो भवति सव्यो ऽयुक्तः । अपि वाग्निष्ठस्य दक्षिणो युक्तः सव्यस्य योक्त्रं परिहृतम् । सर्वेषु वा युक्तेषु ७ वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये हुत्वावक्षाणानि संप्रक्षाप्य पृथगरणीष्वग्नीन्समारोपयते ये धार्यन्ते ८ उपर्यग्नावरणी धारयञ्जपत्ययं ते योनिर्ऋत्विय इति ९ अपि वा यजमान एवात्मन्समारोपयते १० या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजाय-

मानः स क्षय एहीति हस्तं प्रताप्य मुखायाहरते ११ वास उपावरोह जात- वेदः ह्पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोण इति लौकिकेऽग्नावुपावरोहयति १२ अर- ण्योर्वोपावरोह्य मन्थेत् १३ यदरण्योः समारूढः स्यान्निर्वर्तमान एतं मन्त्रं जपेत् १४

इत्यष्टाविंशी कण्डिका

इदं श्रेयोऽवसानं यदागां स्योने मे द्यावापृथिवी अभूताम् । अनमीवाः प्र- दिशः सन्तु मह्यम् । गोमद्धनवदश्ववत्पुरुषवद्धिरण्यवत्सुवीरवत्स्वाहेत्य- वसिते जुहोति १ नानिष्ट्वाग्रयणेनाहिताग्निर्नवस्याश्नीयात् २ व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत ३ अमावास्यायां पौर्णमास्यां वा ४ आमावास्यं तन्त्रम् ५ सप्तदश सामिधेन्यः ६ निर्वपणकाल आ- ग्नेयमष्टाकपालं निर्वपति पुराणानां व्रीहीणाम् ७ यथा दान्तेनादान्तं संयु- नक्ति तादृक्तदिति विज्ञायते ८ येन यज्ञेनेर्त्सेत्कुर्यादेव तत्राग्नेयमष्टाकपा- लमिति विज्ञायते ९ नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्व- देवं पयसि चरुं सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम् १० पुर- स्तात्सौम्याद्द्यावापृथिव्यमेके समामनन्ति ११ निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति १२ पुरस्ताद्वा स्विष्टकृतः १३ प्रोक्षादि कर्म प्रतिपद्यते १४ एकमुलूखलं मुसलं प्रति- बीजं वा १५ सर्वेषु हविष्कृदवहननमन्त्रः १६ तुषोपवपनम् १७ उत्त- ममोप्य वाचं विसृजते १८ एषोऽन्येषां नानाबीजानां समवेतानां कल्पः १९ अलंकरणकाल आज्येनैककपालमभिपूरयति २० आविःपृष्ठं वा कृत्वासादयति २१ प्रचरणकाल उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्या- धायाशयमन्वानीयाभिघार्योपांशु प्रचरति २२

इत्येकोनत्रिंशी कण्डिका

सर्वहुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं न हस्तेन जुहुयात् १ यदि हुतः पर्यावर्तेत स्रुचोऽग्रेण कल्पयेत् २ न पाणिना ३ वरे दत्ते कल्पयितव्यः ४ आ- धायाभिघार्य पुनर्होतव्य इत्येके ५ अपि वा नैककपालं कुर्वीताज्येन द्या-

वापृथिवी यजेत ६ ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । वासः श्यामाके ७ भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति ८ सर्वेषाम् वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् ९ अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानाम् १० सिद्धमिष्टिः संतिष्ठते ११ अपि वामावास्यायां पौर्णमास्यां वाग्रयणेष्टिमन्वायातयेत् १२ अपि वामावास्यां पौर्णमासीं वा नवैर्यजेत् १३ अपि वाग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायंप्रातर्जुहुयात् १४ अपि वा नवानां यवाग्वा सायंप्रातर्जुहुयात् १५ अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वाहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यः १६ अपि वा नवानां चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् १७ एवं यवैर्यजेत् १८ तत्राग्नेयश्यामाकौ न भवतः १९ य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति यजमानभागं प्राश्नाति । सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायः स्यात् २० सिद्धमिष्टिः संतिष्ठते २१

इति त्रिंशी कण्डिका

यदि नानातन्त्रां श्यामाकेष्टिं कुर्वीत श्यामाकानुद्धर्तवा इति संप्रेष्यति १ तस्याः सप्तदश सामिधेन्यः २ सद्वन्तावाज्यभागौ । विराजौ संयाज्ये ३ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते । सोम यास्ते मयोभुव इति सद्वन्तौ । प्रेद्धो अग्न इमो अग्न इति विराजौ ४ वासो दक्षिणा दधिमन्थो मधुमन्थो मधुपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः ५ सिद्धमिष्टिः संतिष्ठते ६ हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राश्ने याथाकामी ७ वेणुयवानामिष्टिमेके समामनन्ति ८ वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यति ९ तस्या एतदेव तन्त्रमेषा देवता १० आग्नेयी मैत्रावरुणी प्राजापत्या वा ११ स प्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोर्दश हविषां द्वे स्विष्टकृतः १२ व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यो दर्शपूर्णमासावेवं यवैरा व्रीहिभ्योऽपि वा व्रीहिभिरेवोभत्रैते

ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणम् १३ वर्षासु श्यामाकैर्यजेत श-
रदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति विज्ञायत इति विज्ञायते १४

इत्येकत्रिंशी कण्डिका इत्यष्टमः पटलः

इति षष्ठः प्रश्नः

सर्वांल्लोकान्पशुबन्धयाज्यभिजयति १ तेन यक्ष्यमाणोऽमावास्यायां पौ-
र्णमास्यां वा षड्ढोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति सूर्यं ते चक्षुरिति
२ आग्नावैष्णवमेकादशकपालं निर्वपति ३ अग्न्यन्वाधानस्य प्रत्याम्नायो
भवति ४ सिद्धमिष्टिः संतिष्ठते ५ धारयत्याहवनीयम् ६ उरु विष्णो
विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोति ७ स्रुचा वा चतुर्गृहीतेन
८ न दीक्षितस्य जुहुयात् ९ वैष्णवीमृचमनूच्याच्छेत्यः १० जुहुयाद्वा ११
यूपसकाशे वाग्निं मथित्वा तस्मिञ्जुहुयात् १२ स्रुवमाज्यशेषं चाध्व-
र्युरादत्ते । तक्षा शस्त्रम् १३ यत्र यूपस्तद्यन्ति १४ यूप्या वृक्षाः पलाश-
खदिरबिल्वरौहीतकाः १५ पालाशं तेजस्कामो यज्ञकामो वा । खादिरं
स्वर्गकामो वीर्यकामो वा । बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा ।
रौहीतकं प्रजाकामश्चक्षुष्कामो वा १६ समे जातमशाखाजं बहुपर्णशाखम-
प्रतिशुष्काग्रमसुषिरमव्यावृत्तमघूर्णमृजुमूर्ध्वमूर्ध्वशकलमग्र ईषदुपावनतं
प्रागुदक् प्रत्यग्वौपनतम् १७ यं कामयेताप्रतिष्ठितः स्यादित्युक्तम् १८
अतिक्रम्य यूप्यान्यं जोषयते तमभिमन्त्रयते १९

इति प्रथमा कण्डिका

अत्यन्यानगामिति १ अथैनमुपस्पृशति तं त्वा जुषे वैष्णवं देवयज्याया
इति २ देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सर्वतो मूलं पर्यणक्ति ३
ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिना
प्रहरति ४ प्रथमपरापातिनं शकलमाहरति ५ गुल्फदघ्ने वृश्चेज्जानुदघ्नेऽन-
क्षसङ्गं वा ६ दिवमग्रेण मा लेखीरिति प्राञ्चं पातयत्युदञ्चं प्राञ्चमुदञ्चं वा ७
वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति ८ सहस्रवल्शा वि वयं रु-
हेमेत्यात्मानं प्रत्यभिमृश्य यं त्वायं स्वधितिरित्यन्वग्रमद्गांश्छिनत्ति ९ अ-
च्छिन्नो रायः सुवीर इत्यग्रं परिवासयति १० पञ्चारत्निमिति काम्याः ११

एकारत्निप्रभृत्या त्रयस्त्रिंशदरत्नेरव्यवायेनैके समामनन्ति १२ यावान्यजमान ऊर्ध्वबाहुस्तावान् १३ यावान्वा रथे तिष्ठन् १४ ऊर्ध्वबाहुर्वा १५ पुरुषमात्री त्वेतस्यावमा मात्रा । अथ ततो वर्षीयान् । वर्षीयानेव कार्य इत्येके १६ त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयकम् १७

इति द्वितीया कण्डिका

मूलतोऽतष्टमुपरम् १ अष्टाश्रिरनुपूर्वोऽग्रतोऽणीयान्प्रज्ञाताग्निष्ठाश्रिरस्थूलोऽनणुः २ अवतक्षणानां स्वरुरधिमन्थनश्च शकलः ३ अग्राच्चषालं पृथमात्रमष्टाश्रिमध्ये संनतम् ४ यं कामयेतान्योऽस्य लोकमभ्यारोहेदिति तस्यान्यवृक्षस्य स्वरुचषाले कुर्यात् ५ यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्यातिरिक्तं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा ६ रथमात्री निरूढपशुबन्धस्य वेदिः ७ अक्षसंमिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्ताद्यावता वा बाह्ये छिद्रे ८ अरत्निर्भिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तात् ९ तां वेदं कृत्वा दर्शपूर्णमासवत्संनमनवर्जं प्रागुत्तरात्परिग्राहात्कृत्वापरेण यूपावटदेशं संचरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति १० अंहीयसीं पुरस्तादित्येके ११ तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते १२ शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः १३ शम्यां पुरस्तादुदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति वित्तायनी मेऽसीति । एवं दक्षिणतः प्राचीं तिक्तायनी मेऽसीति । पश्चादुदीचीमवतान्मा नाथितमिति । उत्तरतः प्राचीमवतान्मा व्यथितमिति १४

इति तृतीया कण्डिका इति प्रथमः पटलः

उत्तरस्माद्वेद्यंसादुदक्प्रक्रमे चात्वालः १ तमुत्तरवेदिवत्तूष्णीं शम्यया परिमित्य देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादाय परिलिखितं रक्षः परिलिखिता अरातय इति त्रिः प्रदक्षिणं परिलिख्य तूष्णीं जानुदघ्नं त्रिवितस्तं वा खात्वोत्तरवेद्यर्थान्पांसून्हरति विदेरिति २ सिंहीरसीत्युत्तरवेद्यां निवपति ३ एतेनैव यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयम् ४ तूष्णीं चतुर्थं हृत्वोरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा ध्रुवासीति शम्यया संहत्य देवेभ्यः कल्पस्वेत्यभिमन्त्र्य देवेभ्यः शुन्धस्वेत्यद्भिरवोक्ष्य

देवेभ्यः शुम्भस्वेति सिकताभिरवकीर्य प्रोक्षणीशेषमुत्तरत उत्तरवेद्यै निनीयापो रिप्रं निर्वहतेति स्फ्येनोदीचीमेकस्फ्यां निःसार्य विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपताव-विह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजतीत्युत्तरवेद्या अन्तान्कल्पयति ५ संमृशतीत्येके ६

इति चतुर्थी कण्डिका

अथास्यामध्ये प्रादेशमात्रीं गोपदमात्रीमश्वशफमात्रीं वोत्तरनाभिं चतुःस्रक्तिं कृत्वा चतुःशिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये । तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्तामित्युभे अभिमन्त्र्येन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्येतैर्यथालिङ्गमुत्तरवेदिं प्रोक्षति १ त्वष्टा त्वा रूपैरुपरिष्टात्पात्विति मध्यम् २ प्रोक्षणीशेषं दक्षिणत उत्तरवेद्यै निनयेच्छुचा त्वार्पयामीति द्वेष्यं मनसा ध्यायन् ३ पूर्ववदेकस्फ्यां दक्षिणतो निःसार्य जुह्वां पञ्चगृहीतं गृहीत्वा सर्वत्र हिरण्यमुपास्यन्नक्ष्णयोत्तरवेदिमुत्तरनाभिं वा व्याघारयति ४ दक्षिणमंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसं मध्यमिति सिंहीरसीत्येतैः प्रतिमन्त्रम् ५ भूतेभ्यस्त्वेति स्रुचमुद्गृह्य पौतुद्रवैः परिधिभिरुत्तरवेदिं परिदधाति विश्वायुरसीति मध्यमं ध्रुवक्षिदसीति दक्षिणमच्युतक्षिदसीत्युत्तरम् ६ परिधिसंधिना सर्वाहुतीर्जुहोति ७

इति पञ्चमी कण्डिका

अग्नेर्भस्मासीत्युत्तरवेद्यां संभारान्निवपति गुल्गुलु सुगन्धितेजनं श्वेतामूर्णास्तुकां पेत्वस्यान्तराशृङ्गीयां लूनस्यालूनपूर्वस्य वा १ व्याघारणप्रभृति संभारनिवपनान्तमुत्तरवेद्यामुपर्यग्नौ धार्यमाण एके समामनन्ति २ प्रोक्षान्तां कृत्वोदुम्बरशाखाभिः लक्षशाखाभिर्वा प्रच्छाद्य वसति यद्यसद्यस्कालः पशुर्भवति ३ आहवनीये प्रणयनीयमिध्मामादीप्य सिकताभिरुपयम्याग्नये प्रणीयमानायानुब्रूहीति संप्रेष्यति । प्रणीयमानायानुब्रूहीति वा ४ उद्यम्याग्निमाहवनीय उद्यतहोमं जुहोति यत्ते पावक चकृमा कच्चिदागः पूर्वो यत्सन्नपरो भवासि । घृतेन त्वं तन्वं वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात्स्वाहेति ५ प्रथमायां त्रिरनूक्तायामुपयमनीभिरुपयम्य हरति ६ ऊर्णावन्तं

प्रथमः सीद योनिमिति होतुरभिज्ञायाग्ने बाधस्व विमृधो नुदस्वापामीवा अप रक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह । यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्ग्धीह यज्ञः प्रत्यष्ठादिति संभारेषु प्रतिष्ठाप्य ७

इति षष्ठी कण्डिका

अग्नेः पुरीषमसीत्युत्तरत उपयमनीर्न्युप्य मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान्देवायते यजेत्युपसमिध्य द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति १ अग्निर्वायुरादित्यो विष्णुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्देवेभ्यो यज्ञं प्रब्रूतात्प्रप्र यज्ञपतिं तिर स्वाहेति चतस्रोऽतिमुक्तीर्जुहोति २ एष पशुबन्धस्याहवनीयो यतः प्रणयति स गार्हपत्यः ३ प्रणीते चेदग्निहोत्रकाल एतस्मिन्नेवाग्निहोत्रं जुहुयात् ४ एवमन्यत्र विप्रक्रान्ते तन्त्रे ५ इध्माबर्हिराहरति ६ त्रयोविंशतिदारुरिध्म आश्ववालः प्रस्तर ऐक्षवो विधृती कार्ष्मर्यमयाः परिधयः ७

इति सप्तमी कण्डिका इति द्वितीयः पटलः

अग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते १ यथार्थं पात्राणि प्रयुनक्ति २ स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीं द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं प्लक्षशाखां शाकपवित्रं कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलामेकशूलां चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चुबुकदघ्नं वा रशने च ३ पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति ४ वाग्यतः ह्पात्राणि संमृश्य प्रोक्षणीः संस्कृत्य ब्राह्मणमामन्त्र्य पात्राणि प्रोक्षत्यत्र वाचं विसृजते । स्फ्यमादायोत्तरं परिग्राहं परिगृह्य दर्शपूर्णमासवत्संप्रेष्यति । आज्येन दध्नोदेहीति संप्रैषान्तं नमति ५ स्रुचां संमार्जनकाले स्रुवं संमृज्य तस्यावता स्वधितिम् ६ जुहूवद्वसाहोमहवनीमुपभृद्वत्पृषदाज्यधानीम् । आज्यं निरुप्य दधि निर्वपति ७ अधिश्रयणवर्जं दधनि क्रियते ८ नैतस्य दध्नः संस्कारो विद्यत इत्यपरम् ९

इत्यष्टमी कण्डिका

आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति १ दधन्याज्यमानीय महीनां पयोऽसीति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वे-षां देवानां समिदिति वा २ चतुर्ध्रुवायाम् ३ सादनकाल आज्यानि सा-दयति ४ उपभृद्वत्पृषदाज्यधानीम् ५ पूर्ववदाज्यान्यभिमन्त्र्याग्रेणाहवनीयं यूपावटं परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि ६ पूर्ववदभ्रेरादानं परिलेखनञ्च ७ अथ खनति यथा नाविरुपरं भविष्यतीति ८ अग्रेणावटं प्राञ्चं यूपं नि-धाय यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या । आपस्तत्सर्वं जीवलाः शुन्धन्तु शुचयः शुचिमिति यूपं प्रक्षाल्याथैनं यवमतीभिः प्रोक्षति । पृथि-व्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् ९ शुन्धतां लोकः पितृषदन इति प्रोक्षणीशेषमवटेऽवनीय यवोऽसीति यवमवास्य पितृणां सदनमसीति बर्हिषावस्तीर्य स्वावेशोऽसीति प्रथमपरापातिनं शकलमवा-स्य घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण शकले हुत्वा १०

इति नवमी कण्डिका

यूपायाज्यमानायानुब्रूहीति संप्रेष्यत्यज्यमानायानुब्रूह्यञ्ज्मो यूपमनुब्रूहीति वा १ अथैनमसंस्कृतेनाज्येन यजमानोऽग्रतः शकलेनानक्ति २ ऐन्द्रमसीति चषालमक्त्वा सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण संततमविच्छिन्दन्नग्निष्ठामश्रिमनक्त्योपरात् ३ रश-नादेशे त्रिः सर्वतो यूपं संमृशति ४ अञ्जनादि यूपं यजमानो नोत्सृजात्या परिव्ययणात् ५ यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यत्युच्छ्रीयमाणायानु-ब्रूहीति वा ६ उद्दिवं स्तभानान्तरिक्षं पृणेत्युच्छ्रयति ७ ते ते धामानीत्य-वटेऽवदधाति ८ विष्णोः कर्माणि पश्यतेति द्वाभ्यामाहवनीयेनाग्निष्ठां संमिनोति ९ यं कामयेत तेजसैनमित्युक्तम् १० अग्रमाहवनीयमुपनतं यू-पस्यावनतं मूलम् ११ अनाविरुपरं कृत्वा ब्रह्मवनिं त्वा क्षत्रवनिमिति प्र-दक्षिणं पांसुभिः पर्यूह्य ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन समं भूमिपरि-दृंहणं कृत्वा १२

इति दशमी कण्डिका

उन्नम्भय पृथिवीमित्यद्भिः परिषिञ्चति १ दर्भमय्यौ रशने भवतः । द्विगुना द्विव्यायामा पशुरशना त्रिगुणा त्रिव्यायामा यूपस्य २ देवस्य त्वा सवितुः प्रसव इति रशनामादाय विष्णोः कर्माणि पश्यतेति सरशनेन पाणिना यूप-मुन्मार्ष्टि ३ तद्विष्णोः परमं पदमित्यग्रं प्रेक्षते । यूपाय परिवीयमाणाया-नुब्रूहीति संप्रेष्यति । परिवीयमाणायानुब्रूहीति वा ४ परिवीरसीति ना-भिदघ्ने रशनया त्रिः प्रदक्षिणं यूपं परिव्ययति मध्यदेशे वा ५ यं कामये-तोर्जैनमित्युक्तम् ६ अधो दूरं परिव्ययेद्वृष्टिकामस्योपरि दूरमवृष्टिकामस्य-ेत्येके ७ यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषज्य न प्रवेष्टयेत् ८ यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयाणिमति स्थविमत्प्रवीय दिवः सूनुरसीति स्वरुमादायान्तरिक्षस्य त्वा सानाववगूहामीत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहति ९ उत्तमे सर्वेषु वा । द्वयोरधरयोरिति वाज-सनेयकम् १०

इत्यकादशी कण्डिका इति तृतीयः पटलः

पशुं स्नपयन्ति कूटकर्णकाणखण्डबण्डश्लोणसप्तशफवर्जम् १ यद्यङ्गहीनः स्यादङ्गतो वा विरुज्येत २ अथैकेषां वैष्णवीमाग्नावैष्णवीं सारस्वतीं बा-र्हस्पत्यामिति च हुत्वा प्रयोजयेत् ३ योऽपन्नदन्मलं तत्पशूनामिति विज्ञा-यते ४ इषे त्वेति बर्हिषी आदत्ते । उपवीरसीति प्लक्षशाखां बहुपर्णशा-खामप्रतिशुष्काग्रामसुषिराम् ५ यं कामयेतापशुः स्यादित्यपर्णया तस्य शुष्काग्रयोपाकुर्यात् ६ तृणेनोपाकरोतीत्येके ७ बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोति । उपो देवान्दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन्निन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति ८ पञ्चकृत्वो दे-वतोपदेशनमुपाकरणे नियोजने प्रोक्षणे वपाया उद्धरणे हृदयस्याभिघारण इति ९ प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पञ्च हुत्वाग्निं मन्थति १० अपि वाग्निं मथित्वोपाकुर्यात् ११ अग्नेर्जनित्रमसीत्यधिमन्थनं शकलं निदधाति । वृषणौ स्थ इति प्राञ्चौ दर्भौ १२ उर्वश्यसीत्यधरारणिमादत्ते । पुरूरवा इत्युत्तरारणिम् १३ देवो वां सविता मध्वानक्त्वित्याज्यस्थाल्या बिलेऽङ्क्-वा घृतेनाक्ते वृषणं

दधाथामित्युभे अभिमन्त्र्यायुरसीति समवधाय १४

इति द्वादशी कण्डिका

अग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति । मथ्यमानायानुब्रूहीति वा १ प्रथमायां त्रिरनूक्तायां त्रिः प्रदक्षिणमग्निं मन्थति । गायत्रं छन्दोऽनुप्रजायस्वेति प्रथमं त्रैष्टुभमिति द्वितीयं जागतमिति तृतीयम् २ ततो यथा प्राशु मन्थति ३ यदि मथ्यमानो न जायेत राक्षोघ्नीरनुब्रूयात् ४ जातायानुब्रूहीति जाते संप्रेष्यति । प्रह्रियमाणायेति प्रहरन् ५ भवतं नः समनसावित्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति संधिना वा ६ अग्नावग्निश्चरति प्रविष्ट इति प्रहृत्य स्रुवेणाभिजुहोति ७ सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवीयोर्ध्वमुत्कृष्यर्तस्य त्वा देवहविः पाशेनारभ इति दक्षिणेऽर्धशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्षा मानुषानित्युत्तरतो यूपस्य नियुनक्ति ८ दक्षिणत ऐकादशिनान् ९ अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति १० अपां पेरुरसीति पाययति ११ स्वात्तं चित्सदेवं हव्यमापो देवीः स्वदतैनमित्युपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते १२

इति त्रयोदशी कण्डिका इति चतुर्थः पटलः

स्रुच्यमाघार्य प्रत्याक्रम्य जुह्वा पशुं समनक्ति १ सं ते प्राणो वायुना गच्छतामिति शिरसि । सं यजत्रैरङ्गानीत्यंसोच्चलयोः । सं यज्ञपतिराशिषेति श्रोण्याम् २ ध्रुवासमञ्जनादि कर्म प्रतिपद्यते समानमा प्रवरात् ३ षड्त्विजः ४ दैवं च मानुषं च होतारौ वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीते मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति ५ तिष्ठति पशावेकादश प्रयाजान्यजति ६ समिद्धः प्रेष्येति प्रथमं संप्रेष्यति । प्रेष्य प्रेष्येतीतरान् ७ चतुर्थाष्टमयोः प्रतिसमानीय दशेष्वैकादशायाज्यमवशिनष्टि ८ तान्यजमानः प्राकृतैरादितश्चतुर्भिश्चतुरोऽनुमन्त्र्य चतुर्थस्यानुमन्त्रणेन दुरःप्रभृतींस्त्रीनुत्तमेन शेषम् ९ प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्ति । त्रिः स्वरुं सकृत्स्वधितेरन्यतरां धाराम् १० स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति शिरसि ११ न वा स्वधितिना स्वरुणैव १२ अक्तया

शृतस्यावद्यति पशुमितरया विशास्ति १३ शमित्रे स्वधितिं प्रयच्छन्नाह शमितरेषा तेऽश्रिः स्पष्टास्त्विति १४

इति चतुर्दशी कण्डिका

पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यति पर्यग्नयेऽनुब्रूहीति वा १ आहवनीयादुल्मुकमादायाग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालम् । आज्यानि चेत्येके २ प्रत्यमिसृज्योल्मुकं त्रिः प्रतिपर्यैति ३ प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोत्येकं द्वे त्रीणि चत्वारि वा ४ पशुपतेः पशवो विरूपाः सदृशा उत । तेषां यं वव्रिरे देवास्तं स्वराडनुमन्यतामिति द्वितीयाम् ५ ये बध्यमानमिति प्रमुच्यमाने । प्रमुञ्चमाना इति प्रणीयमाने ६ रेवतीर्यज्ञपतिं प्रियधा विशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च । आश्राव्य प्रत्याश्राविते संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इति ७ प्रास्मा अग्निं भरत स्तृणीत बर्हिरिति होतुरभिज्ञायाहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते ८ शमिता पशुं नयति ९ उरो अंतरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति १० नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति ११

इति पञ्चदशी कण्डिका

ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायोवध्यगोहं खनति १ अभिपर्यग्निकृते देश उल्मुकं निदधाति २ स शामित्रः ३ तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति तस्याधस्ताद्बर्हिरुपास्यत्युपाकरणयोरन्यतरत् ४ तस्मिन्संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनन्पादम् ५ अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्ततेऽध्वर्युः ६ स्वर्विदसि स्वर्वित्त्वास्वरिहि स्वर्मह्यं स्वः पशुभ्यः । लोकविदसि लोकं वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यः । गातुविदसि गातुं वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः । नाथविदसि नाथं वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यः । न वा उवेतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु । अशानां त्वाशापाले-

भ्य इत्येषा । विश्वा आशा मधुना संसृजाम्यनमीवा आप ओषधयो भवन्तु । अयं यजमानो मृधो व्यस्यताम् । अगृभीताः पशवः सन्तु सर्व इत्युक्त्वा पराङावर्तते यजमानः । नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति ७

इति षोडशी कण्डिका

यासामूर्धश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीरस्मिन्गोष्ठे वयोवृधः । इह पशवो विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माँ अवन्तु पयसा घृतेनेति पृषदाज्यमवेक्ष-माणौ वाग्यतावासाते अध्वर्युर्यजमानश्च १ इन्द्रस्य भागः सुविते दधातनेमं यज्ञं यजमानं च सूरौ । यो नो द्वेष्टयनु तं रवस्वानागसो यजमानस्य वीरा इति च वाश्यमानेऽवेक्षेते २ यत्पशुर्मायुमकृतेति संज्ञप्ते संज्ञप्तहोमं जुहोति ३ शमितार उपेतनेति वपाश्रपणीभ्यां पशुमुपैतोऽध्वर्युर्यजमानश्च ४ पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमुमोक्त्वेतमिति ५ संवेष्टय रशनां ग्रीवासु निधायैकशूलयोपसज्य चात्वाल उदस्यत्यरातीयन्तमधरं करोमीति ६ य-द्यभिचरेदरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्भं वापिदध्यात् ७

इति सप्तदशी कण्डिका इति पञ्चमः पटलः

ततः प्रतिप्रस्थाता पत्नीमुदानयति १ नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते २ अनर्वा प्रेहीति प्राचीमुदानयत्यनुमन्त्रयत इत्येके ३ आपो देवीः शुद्धा-युव इति चात्वाले पत्न्यपोऽवमृशत्यृत्विजो यजमानश्च ४ न पत्नीत्येके ५ अद्भिः पशोः सर्वान्प्राणानाप्याययति ६ सर्वाण्यङ्गान्यध्वर्युरभिषिञ्चति प-त्न्याप्याययति । एतद्वा विपरीतम् । वाक्त आप्यायतामित्येतैर्यथालिङ्गम् ७ या ते प्राणाञ्छुग्जगामेति हृदयदेशम् ८ मेढ्रं त आप्यायतामिति मेढ्रम् ९ शुद्धाश्चरित्रा इति पादान् १० एकैकमाप्याय्य जपति शमद्भ्य इति पुरा स्तोकानां भूमेः प्रापणात् ११ शमोषधीभ्यः शं पृथिव्या इति भूम्यां शेषं निनीयौषधे त्रायस्वैनमित्युपाकरणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय स्व-धिते मैनं हिंसीरिति स्वधितिना पार्श्वतस्तिर्यगाच्छति १२ बर्हिषोऽग्रं स-व्येन पाणिनादत्ते १३ अथ मध्यं यत आच्छयति तदुभयतो लोहितेनाङ्क्वा

रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत्सव्येन पदाभितिष्ठती-
दमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीति १४

इत्यष्टादशी कण्डिका

इषे त्वेति वपामुत्खिद्य घृतेन द्यावापृथिवी प्रोर्ण्वाथामिति वपया द्विशूलां
प्रच्छाद्योर्जे त्वेति तनिष्ठेऽन्तत एकशूलयोपतृणत्ति १ देवेभ्यः कल्पस्वेत्य-
भिमन्त्र्य देवेभ्यः शून्धस्वेत्यद्भिरवोक्ष्य देवेभ्यः शुम्भस्वेति स्वधितिना वपां
निमृज्याच्छिन्नो रायः सुवीर इन्द्राग्निभ्यां त्वा जुष्टामुत्कृन्तामीत्युत्कृन्तति २
मुष्टिना शमिता वपोद्धरणमपिधायास्त आ वपाया होमात् ३ प्रत्युष्टं रक्षः
प्रत्युष्टा अरातय इति शामित्रे वपां प्रतितप्य नमः सूर्यस्य संदृश इत्यादित्य-
मुपस्थायोर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति ४ उल्मुकैकदेशमादायाग्नीध्रः पू-
र्वः प्रतिपद्यते ५ वपाश्रपणी पुनरन्वारभते यजमानः ६ उल्मुकैकदेशमा-
हवनीये प्रत्यपिसृजति ७ निर्दग्धं रक्षो निर्दग्धा अरातय इत्याहवनीय-
स्यान्तमेऽङ्गारे वपां निकूड्यान्तरा यूपमाहवनीयं च दक्षिणातिहृत्य प्रतिप्र-
स्थात्रे प्रयच्छति ८ तां दक्षिणत आसीनः प्रतिप्रस्थाताहवनीये श्रपयति ९

इत्येकोनविंशी कण्डिका

वायो वीहि स्तोकानामिति बर्हिषोऽग्रमधस्ताद्वपाया उपास्यति १ त्वामु ते
दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति २ प्रादुर्भूतेषु स्तोकेषु
स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति ३ अलोहिनीं सुशृतां कृत्वा सुपिप्पला ओ-
षधीः कृधीति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि लक्सशाखायामासाद्य प्रयुता
द्वेषांसीति वपाश्रपणी प्रवृह्य निधाय घृतवति शब्दे जुहूपभृतावादाय दक्षि-
णातिक्रम्याश्राव्य प्रत्याश्राविते संप्रेष्यति स्वाहाकृतीभ्यः प्रेष्य स्वाहाकृति-
भ्यः प्रेष्येति वा ४ वषट्कृते हुत्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्य
पृषदाज्यमभिघारयत्यथ वपाम् । एतद्वा विपरीतम् ५
नोपभृतम् ६
आज्यभागौ यजति ७
तौ न पशौ करोति । न सोम इत्येके ८
स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा जुह्वामुप-

स्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिर-
ण्यशकलमुपरिष्टात्कृत्वाभिघारयति ९
एवं पञ्चावत्ता भवति १०
चतुरवत्तिनोऽपि पञ्चावत्तैव स्यात् ११
इति विंशी कण्डिका

इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूहीन्द्राग्निभ्यां
छागस्य वपाया मेदसः प्रेष्येति संप्रैषौ १
जातवेदो वपया गच्छ देवानिति वषट्कृते हुत्वा
प्रत्याक्रम्य देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा वपोद्ध-
रणमभिघारयत्युत्तरतस्तिष्ठन् २
प्रतिप्रस्थाताहवनीये वपाश्रपणी प्रहरति स्वाहोर्ध्व-
नभसं मारुतं गच्छतमिति प्राचीं द्विशूलां प्रतीचीमे-
कशूलाम् । एतद्वा विपरीतम् ३
अथैने अध्वर्युः संस्रावेणाभिजुहोति ४
अत्र यजमानो वरं ददात्यनड्वाहं तिस्रो वा धेनू-
स्तिस्रो वा दक्षिणाः ५
समुत्क्रम्य सहपत्नीकाः हपञ्चभिश्चात्वाले मार्जयन्ते ।
आपो हि ष्ठा मयोभुव इति तिस्रः । इदमापः प्रवह-
तावद्यं च मलं च यत् । यद्वाभिदुद्रोहानृतं यद्वा शेपे
अभीरुणम् । आपो मा तस्मादेनसो विश्वान्मुञ्चत्वं-
हसः । निर्मा मुञ्चामि शपथान्निर्मा वरुणादधि । निर्मा
यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषादथो मनुष्यकि-
ल्बिषादिति ६
इत्येकविंशी कण्डिका

इति षष्ठः कण्डिका

पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते १ यथार्थं पात्रयोगः २
निर्वपणकाले व्रीहिमयं पशुपुरोडाशं निर्वपत्येकादशकपालं द्वादशकपालं

वा ३ हविष्कृता वाचं विसृज्य पशुं विशास्ति ५ हृदयं जिह्वा वक्षो य-
कृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि । दक्षिणं
दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि । क्लोमानं लीहानं पुरीततं
वनिष्ठुमध्यूध्नीं मेदो जाघनीमित्युद्धरति ६ गुदं मा निर्व्लेषीरिति संप्रेष्यति
७ मा विपर्यास्त इत्यर्थो भवति ८ उदक् पवित्रे कुम्भ्यां पशुमवधाय
शूले प्रणीक्ष्य हृदयं शामित्रे श्रपयति ९ अवहननादि कर्म प्रतिपद्यते १०
वपया प्रचर्य पुरोडाशेन प्रचरति । शृते वा पशौ ११ इन्द्राग्निभ्यां पुरोडा-
शस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति संप्रैषौ । इन्द्राग्निभ्यां पुरोडाश-
स्यावदीयमानस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति वा १२ अग्नयेऽनु-
ब्रूह्यग्नये प्रेष्येति स्विष्टकृतः संप्रैषौ १३

इति द्वाविंशी कण्डिका

प्राशित्रमवदायेडां न यजमानभागम् १ हविराहुतिप्रभृतीडान्तः संतिष्ठते २
उपहुतां मैत्रावरुणषष्ठा भक्षयित्वा पुर्ववत्प्रस्तरे मार्जयित्वा स्रुवेण पृषदा-
ज्यस्योपहत्य वेदेनोपयम्य त्रिः पृच्छति शृतं हवीः३ शमितरिति ३ शृतमि-
तीतरः प्रत्याह ४ अर्धाध्वे द्वितीयं प्राप्य तृतीयम् ५ पूषा मा पशुपाः पा-
त्विति प्रथमेऽभिप्रव्रजति । पूषा मा पथिपाः पात्विति द्वितीये । पूषा
माधिपाः पात्विति तृतीये ६ शूलात्प्रवृह्य हृदयं कुम्भ्यामवधाय सं ते म-
नसा मन इति पृषदाज्येन हृदयमभिघारयत्युत्तरतः परिक्रम्य ७ आज्येन
पशुं यस्त आत्मा पशुषु प्रविष्ट इति ८ स्वाहोष्मणो व्यथिष्या इत्युद्यन्त-
मूष्माणमनुमन्त्रयते ९ पशुं हरन्पार्श्वतो हृदयशूलं धारयत्यनुपस्पृशन्नात्मा-
नमितरांश्च १० अन्तरा यूपमाहवनीयं च दक्षिणातिहृत्य पञ्चहोत्रा षड्ढोत्रा वा
दक्षिणास्यां वेदिश्रोण्यामासाद्य चतसृषूपस्तृणीते जुहूपभृतोर्वसाहोमहवन्यां
समवत्तधान्यामिति ११ जुहूपभृतोर्हिरण्यशकलाववधाय बर्हिषि प्लक्ष-
शाखायामवदानान्यवद्यन्संप्रेष्यति १२

इति त्रयोविंशी कण्डिका

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति १ हृदयस्याग्रेऽवद्यति । अथ
जिह्वाया अथ वक्षसो याथाकामीतरेषाम् २ मध्यतो गुदस्यावद्यतीत्युक्त ३

यथोद्धृतं वा ४ दैवतानां द्विर्द्विरवदाय जुह्वामवदधाति । उपभृति सौ-विष्टकृतानां सकृत्सकृत् ५ गुदं त्रैधं विभज्य स्थविमदुपयड्भ्यो निधाय मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति । अणिमत्सौविष्टकृतेषु ६ अपि वा द्वैधं विभज्य स्थविमदुपयड्भ्यो निधायेतरत्त्रैधं विभज्य मध्यमं द्वैधं विभज्य दैवतेष्ववदधाति । अणिमत्सौविष्टकृतेषु स्थविष्ठमिडायाम् ७ त्रधा मेदोऽवद्यति द्विभागं स्रुचोस्तृतीयं समवत्तधात्याम् ८ यूषे मेदोऽव-धाय मेदसा स्रुचौ प्रावृत्य हिरण्यशकलावुपरिष्टात्कृत्वाभिघारयति ९ स-मवत्तधान्यां षडाद्यानीडामवद्यति वनिष्ठुं सप्तमम् । षड्भ्यो वा वनिष्ठोः सप्तमात् १० अनस्थिभिरिडां वर्धयति ११ क्लोमानं प्लीहानं पुरीततमि-त्यन्ववधाय यूष्णोपसिच्याभिघारयति १२

इति चतुर्विंशी कण्डिका इति सप्तमः पटलः

अपां त्वौषधीनां रसं गृह्णामीति वसाहोमहवन्यां वसाहोमं गृह्णाति १ स्व-धितिना धारां छिनत्ति २ द्विः पञ्चावत्तिनः ३ श्रीरसीति पार्श्वेन वसाहोमं प्रयौति ४ वातस्य त्वा ध्रज्या इति तेनैवापिदधाति । स्वधितिना वा प्रयौति । स्वधितिनापिदधातीत्येके ५ अथ यन्न शीर्ष्णोऽवद्यति नांस-योर्नाणूकस्य नापरसक्थ्योरनवदानीयानि ६ तानि शृतैः संनिधाय संमृश-त्यैन्द्रः प्राणो अङ्गेअङ्ग इति ७ अथ हविषा प्रचरति ८ इन्द्राग्निभ्यां छाग-स्य हविषोऽनुब्रूहीन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति संप्रैषौ ९ याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावानः पिबतेति १० उद्रे-केण दिशः प्रदिश इति प्रतिदिशं जुहोति । मध्ये पञ्चमेन ११ प्राञ्चमुत्तमं संस्थाप्य नमो दिग्भ्य इत्युपतिष्ठते १२ वषट्कृते जुहोति १३ अत्र वा दिशः प्रति यजेत् । उपरिष्टाद्वा वनस्पतेः स्विष्टकृतो वा १४ प्रत्याक्रम्य जुह्वामुपस्तीर्य सकृत्पृषडाज्यस्योपहत्य द्विरभिघार्य वनस्पतये नुब्रूहि वन-स्पतये प्रेष्येति संप्रैषौ । वषट्कृते जुहोति १५ स्विष्टकृद्वद्यजमानोऽनुम-न्त्रयते १६ उपर्याहवनीये जुह्वामौपभृतानि विपर्यस्यन्नाहाग्नये स्विष्टकृते ऽनुब्रूह्यग्नये स्विष्टकृते प्रेष्येति संप्रैषौ १७ वषट्कृते हुत्वा प्रत्याक्रम्यायतने स्रुचौ सादयति १८

इति पञ्चविंशी कण्डिका

अत्रेडाया निरवदानमेके समामनन्ति १ अवान्तरेडामवद्यति २ मेद उप-
स्तीर्य मेदसाभिघारयति ३ यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा इत्यु-
क्तम् ४ उपहूतां मैत्रावरुणषष्ठा भक्षयन्ति । प्रतिप्रस्थाता सप्तमः ५ व-
निष्ठुमग्नीधे षडवत्तं संपादयति ६ अध्यूध्नीं होत्रे हरति ७ अग्नीदौपयजा-
नङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं
च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ८ आग्नीध्रादौपयजानङ्गारानाहरति ।
होत्रीय उपयजति ९ शामित्रान्निरूढपशुबन्ध उत्तरस्यां वेदिश्रोण्याम् १०
गुदकाण्डमेकादशधा तिर्यक्छित्त्वासंभिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृ-
तेवषट्कृत एकैकं गुदकाण्डं प्रतिप्रास्थाता हस्तेन जुहोति समुद्रं गच्छ
स्वाहेत्येतैः प्रतिमन्त्रम् ११ सर्वाणि हुत्वाद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं
निमृज्य मनो मे हार्दि यच्छेति जपति । पृषदाज्यं जुह्वामानीय पृषदाज्य-
धानीमुपभृतं कृत्वा तेनैकादशानूयाजान्यजति १२ देवेभ्यः प्रेष्येति प्रथमं
संप्रेष्यति । प्रेष्य प्रेष्येतीतरान् १३ तान्यजमानः प्राकृतैरनुमन्त्रयते १४

इति षड्विंशी कण्डिका

प्रथमेनाद्यांश्चतुरो दशमं च । द्वितीयेन प्राग्वनस्पतेः । उत्तमेन शेषम् १
उत्तरयोर्विकारेषुभौ होतारं चोदयतोऽध्वर्युर्मैत्रावरुणश्च यजेति २ अत्र स्व-
रोरञ्जनमेके समामनन्ति ३ प्रत्याक्रम्य जुह्वां स्वरुमवधायानूयाजान्ते जुहो-
ति द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेति ४
समानमा प्रत्याश्रावणात् ५ सूक्तवाकप्रैषो विक्रियते ६ तं मैत्रावरुणो ब्रू-
यादग्निमद्य होतारमवृणीतेति ७ ध्रुवावर्जं चतसृभिः परिधीनभिजुहोति ८
दक्षिणेन विहारं जाघनीं हृत्वा तया पत्नीः संयाजयन्ति ९ आज्येन सोम-
त्वष्टाराविष्ट्वोत्तानायै जाघन्यै देवानां पत्नीभ्योऽवद्यति । नीच्या अग्नये गृ-
हपतये १० उत्तानायै होत्र इडामवद्यति नीच्या अग्नीधे ११ तां पत्न्यै प्र-
यच्छति तां साध्वर्यवेऽन्यस्मै वा ब्राह्मणाय १२ बाहुं शमित्रे १३ तं स
ब्राह्मणाय यद्यब्राह्मणो भवति १४ यज्ञ यज्ञं गच्छेति त्रीणि समिष्टयजूंषि
हुत्वानुपस्पृशन्हृदयशूलमुदङ् परेत्यासंचरेऽप उपनिनीय शुष्कार्द्रयोः सं-
धावुद्वासयति शुगसीति द्वेष्यं मनसा ध्यायन् १५ सुमित्रा न आप ओषधय

इति तस्मिंश्चात्वाले वा सहपत्नीका मार्जयित्वा धाम्नोधाम्नो राजन्नुदुत्तममि-
त्यादित्यमुपस्थायैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्व-
चारिषमित्युपतिष्ठन्ते १६

इति सप्तविंशी कण्डिका

इष्टिविधो वा अन्यः पशुबन्धः सोमविधोऽन्यः । स यत्रैतदपः प्रणयति
पूर्णपात्रं निनयति विष्णुक्रमान्क्रामति स इष्टिविधोऽतोऽन्यः सोमविध इति
वाजसनेयकम् १ यूपं यजमान उपतिष्ठते नमः स्वरुभ्यः सन्नान्मावगाता-
पश्चाद्ध्वान्नं भूयासम् । शृङ्गाणीवेच्छृङ्गिणां संददृश्रिरे चषालवन्तः स्वरवः
पृथिव्याम् । ते देवासः स्वरवस्तस्थिवांसो नमः सखिभ्यः सन्नान्मावगात ।
आशासानः सुवीर्यमिति च २ उपस्थाय यज्ञ शं च म इति जपति ३
आहुत्यै वा एतं वनस्पतिभ्यः प्रच्यावयन्त्युपयज्य मनुष्याः ह्प्रयान्ति ।
यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । यद्यूपमुपस्पृशेद्दुरिष्टं यज्ञस्यामुञ्चेत्तमभिम-
न्त्रयेत वायवेष ते वायवित्येकम् । वायवेतौ ते वायविति द्वौ । वायवेते
ते वायविति बहून् ४ ऐन्द्राग्नी निरूढपशुबन्धः सौर्यः प्राजापत्यो वा ५
तेन संवत्सरेसंवत्सरे यजेत । षट्सुषट्सु मासेष्वित्वेके ६ ऋतुव्यावृत्तौ
सूयवस आवृत्तिमुखआवृत्तिमुखे वा ७ मांसीयन्ति ह वा अग्नयोऽजुह्वतो
यजमानस्य । ते यजमानमेव ध्यायन्ति । यजमानं संकल्पयन्ति । प-
चन्ति ह वा अन्येष्वग्निषु वृथामांसम् । अथैतेषां नान्या मांसाशा विद्यते ।
यस्यो चैते भवन्ति तं ततो नानीजानं पशुना संवत्सरोऽतीयात् । आयुष्यो
ह वा अस्यैष आत्मनिष्क्रयण इति वाजसनेयकं भवति भवति ८

इत्यष्टाविंशी कण्डिका इत्यष्टमा कण्डिका

इति सप्तमः प्रश्नः

अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति १ फाल्गुन्यां पौर्णमास्यां
चैत्र्यां वा वैश्वदेवेन यजते २ पूर्वस्मिन्पर्वणि पञ्चहोतारं मनसानुद्रुत्याहव-
नीये सग्रहं हुत्वान्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं
च चरुम् ३ वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य याज्यानुवाक्ये ।
पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । अच्छा

वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसाविवास । कनिक्रदद्वृषभो जीरदानू रेतो दधात्वोषधीषु गर्भमिति पार्जन्यस्य । हिरण्य वैश्वानरे ददाति धेनुं पार्जन्ये । सिद्धमिष्टिः संतिष्ठते ४ प्राचीनप्रवणे वैश्वदेवेन यजते ५ पशुबन्धवद्गार्हपत्यादग्निं प्रणयन्नोद्यतहोमं जुहोति ६ ऊर्णावन्तं प्रथमः सीद योनिमिति होतुरभिज्ञायाहवनीयायतन ऊर्णास्तुकां निधाय तस्यामग्निं प्रतिष्ठापयति ७ नानुत्तरवेदिके पाशुकं प्रणयनं विद्यत इत्यपरम् ८ अग्नीनन्वाधाय शाखामाहृत्य वैश्वदेव्या आमिक्षाया वत्सानपाकरोति ९ प्रसूमयं बर्हिः प्रस्तरश्च १० त्रेधा संनद्धं पुनरेकधा ११ तस्मिन्मन्त्रः १२ तथेध्मः १३ त्रयोविंशतिदारुः १४ त्रीन्कलापान्संनह्यैकधा पुनः संनह्यति १५ पूर्ववद्वैश्वदेव्याः सायंदोहं दोहयति १६

इति प्रथमा कण्डिका

श्वोभूते पात्रसंसादनकाले पालाशं वाजिनपात्रं प्रयुनक्ति स्रुचं वा १ निर्वपणकाल आग्नेयमष्टाकपालमिति यथासमाम्नातमष्टौ हवींषि निर्वपति २ तेषां पौष्णान्तानि पञ्च संचराणि ३ पिष्टानां पौष्णं श्रपयति ४ तप्ते प्रातर्दोहे सायंदोहमानयति ५ यत्संवर्तते सामिक्षा । यदन्यत्तद्वाजिनम् ६ पशुवत्संप्रैषः । तथाज्यानि ७ पृषदाज्ये विकारः । महीनां पयोऽसीति पृषदाज्यधान्यां द्विराज्यं गृह्णाति द्विर्दधि सकृदाज्यम् ८ उद्वासनकाल आमिक्षां संहत्य द्वयोः पात्रयोरुद्धृत्य वाजिनैकदेशेनोपसिञ्चति ९ अलंकरणकाल आज्येनैककपालमभिपूरयत्याविःपृष्ठं वा कृत्वा व्याहृतीभिर्हवींष्यासादयति १० उत्करे वाजिनम् ११ पञ्चहोत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति १२ पशुवन्निर्मथ्यः सामिधेन्यश्च १३ नव प्रयाजाः १४ चतुर्थोत्तमावन्तरेण पाशुकाश्चत्वारो दुरःप्रभृतयः प्रैषप्रतीकयाज्याः १५ पशुवत्समानयनम् १६ प्रचरणकाल उपांशु सावित्रेण प्रचर्य पूर्ववदेककपालेन प्रचरति १७ मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपलमभिजुहोति १८ दक्षिणाकाले प्रथमजं वत्सं ददाति मिथुनौ वा गावौ १९ पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेन नवानूयाजान्यजति २०

इति द्वितीया कण्डिका

अष्टावाद्याः पाशुकाः परिषवर्जम् १ उत्तमेनोत्तमम् २ देवान्यजेति प्रथमं संप्रेष्यति । यज यजेतीतरान् ३ संवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते ४ एवं यजमानो जपति । आशास इति मन्त्रं संनमति ५ परिधीन्प्रहृत्य संस्रावान्तं कृत्वा वाजिनपात्र उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति ६ नाभिघारयति ७ वाजिभ्योऽनुब्रूहि वाजिनो यजेति संप्रैषौ । वषट्कृते चमसेन जुहोति । स्रुचा वानुविषिच्यमानयानुवषट्कृते च ८ ऊर्ध्वज्ञुरासीनो ऽनवानं होता यजति ९ वाजिनस्याग्ने वीहीत्यनुयजति १० त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यति सोमस्य वाजिनस्य घर्मस्येति ११ उद्रेकेण पशुबन्धवद्दिशः प्रतीज्यान्तर्वेदि शेषं सर्वे समुपहूय भक्षयन्ति १२ असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते १३ उपहूत इति प्रतिवचनः १४ होता प्रथमो भक्षयति यजमान उत्तमः । यजमानः प्रथमश्चोत्तमश्चेत्येके १५ वाजिनां भक्षो अवतु वाजो अस्माँ रेतः सिक्तममृतं बलाय । स न इन्द्रियं द्रविणं दधातु मा रिषाम वाजिनं भक्षयन्तः । तस्य ते वाजिभिर्भक्षंकृतस्य वाजिभिः सुतस्य वाजिपीतस्य वाजिनस्योपहूतस्योपहूतो भक्षयामीति भक्षयति १६ पशुवत्समिष्टायजूंषि १७ सिद्धमिष्टिः संतिष्ठते १८

इति तृतीया कण्डिका

श्वोभूते पौर्णमास्येष्ट्वा प्रसूता देवेन सवित्रा दैव्या आप उन्दन्तु ते तनुं दीर्घायुत्वाय वर्चस इत्युपोद्य त्र्येण्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण नि केशान्वर्तयते वापयते श्मश्रूणि १ ऋतमेव परमेष्ट्यृतं नात्येति किंचन । ऋते समुद्र आहित ऋते भूमिरियं श्रिता । अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तय इति निवर्तयति २ तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति यजमानो जपति । ब्राह्मण एकहोतेति चानुवाकम् ३ तस्य पर्वस्वन्तरालव्रतानि ४ न मांसमश्नाति न स्त्रियमुपैति ५ ऋत्वे वा जायाम् ६ नोपर्यास्ते ७ जुगुप्सेतानृतात् ८ प्राङ् शेते ९ मध्वश्नाति १० मध्वशनं स्यादित्येकम् । व्यञ्जनार्थमित्यपरम् ११ ऋ-

तयाजी वा अन्यश्चातुर्मास्ययाज्यन्यः १२ यो वसन्तोऽभूत्प्रावृडभूच्छरदभू-
दिति यजते स ऋतुयाजी । अथ यश्चतुर्षुचतुर्षु मासेषु स चातुर्मास्ययाजी ।
वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते
१३

इति चतुर्थी कण्डिका इति प्रथमः पटलः

ततश्चतुर्षु मासेष्वाषाढ्यां श्रवणायां वोदवसाय वरुणप्रघासैर्यजते १ प्ररू-
ढकक्षे यष्टव्यमिति बह्वृचब्राह्मणं भवति २ तस्य वैश्वदेववत्कल्पः ३ वे-
दौ कृत्वाग्रेण गार्हपत्यं समे प्राची वेदी भवतः ४ उत्तरामध्वर्युः करोति
दक्षिणां प्रतिप्रस्थाता । उत्तरे विहारेऽध्वर्युश्चरति दक्षिणे प्रतिप्रस्थाता ५
उभयत्र कृत्स्नं तन्त्रम् ६ अपि पत्नीसंयाजाः ७ एकवत्संप्रैषः ८ द्विव-
द्ब्रह्मानुजानाति ९ द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं पृथमात्रं रथवर्त्ममात्रं मी-
तामात्रं प्रादेशमात्रेण वा तिर्यगसंभिन्ने वेदी भवतः १० अन्तरा वेदी प्रति-
प्रस्थातुः संचरः ११ अपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमभिपरिहरति
१२ उत्करे निवपति १३ समान उत्करः १४ पञ्चर्त्विजः १५ यदेवा-
ध्वर्युः करोति तत्प्रतिप्रस्थाता १६ यत्किंच वाचाकर्मीणमध्वर्युरेव तत्कु-
र्यात् १७ युगपत्कालान्वा निगदान् १८ साधारणद्रव्यांश्च संस्कारान् १९
प्रागुत्तरात्परिग्राहात्कृत्वैकस्फ्यया वेदी अनुसंभिनत्ति । दक्षिणस्या उत्तरायै
श्रोणेः प्रक्रम्या दक्षिणादंसादुत्तरस्याः २० उत्तरस्यां वेद्यां पशुबन्धवदुत्तर-
वेदिमुपवपति २१ काले पशुबन्धवद्गार्हपत्यादग्नी प्रणयतः २२ नोद्यत-
होमौ जुहुतः २३ अन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यते । उत्तरेणोत्तरां वे-
दिमध्वर्युः २४ पूर्वोऽध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति । जघन्यः प्रति-
प्रस्थाता दक्षिणस्याम् २५ अग्नीनन्वाधाय पृथक् शाखे आहरतः २६ त-
थेध्माबर्हिषी २७ मारुत्याः प्रतिप्रस्थाता वत्सानपाकरोति । वारुण्या
अध्वर्युः २८ शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति २९ यथादेवतं
सायंदोहौ दोहयतः ३० सद्यस्काला वा वरुणप्रघासाः ३१ एवं सति
लौकिकेन दध्नामिक्षाकर्म स्यात् ३२ प्रातर्दोहविकारमेक आमिक्षापयस्य-
माहुः ३३ निर्वपणकाल आग्नेयमष्टाकपालमिति नवोत्तराणि हवींषि निर्व-
पति ३४ सर्वे यवा भवन्ति ३५ अपि वा पौष्णः करम्भपात्राणि मेषाविति

यवानां व्रीहीणामितराणि ३६ एतस्मिन्काले प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान्यवान्निर्वपति ३७ यजुषाध्वर्युर्मेषार्थान् । मेष्यर्थान्प्रतिप्रस्थाता ३८ तयोरामिक्षावद्दैवतम् ३९ आमपेषाणां पत्नी करम्भपात्राणि करोति ४० यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि ४१ आमपेषाणां भेषप्रतिकृती भवतः ४२ मेषमध्वर्युः करोति मेषीं प्रतिप्रस्थाता ४३

इति पञ्चमी कण्डिका

स्त्रियाः स्त्रिष्यञ्जनानि १ पुंसः पुंव्यञ्जनानि २ अपि वा पूर्वेद्युरन्वाहार्यपचने वितुषानिव यवान्कृत्वा तेषामीषदुपतप्तानां पत्नी करम्भपात्राणि करोति ३ अत्रापि मेषं मेषीं च करोतीति वाजसनेयकम् ४ ऐन्द्राग्नपर्यन्तान्यधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति । अष्टासु मेषम् ५ कुम्भीपाक्यौ वा भवतः ६ कायमेककपालमधिश्रित्याप्येभ्यो निनीयाग्नी प्रणयत इति वाजसनेयकम् ७ पशुवत्संप्रैषः । तथाज्यानि ८ पृषदाज्ये विकारः । महीनां पयोऽसीति पृषदाज्यधान्यां सकृदाज्यं गृह्णाति । द्विर्दधि द्विराज्यम् ९ यद्यु वै श्रवणायां संसृज्य गृह्णीयात् १० उद्वासनकालेऽनैडकीभिरूर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः ११ तदभावे कुशोर्णा निश्लेष्य मारुत्यां मेषमवदधाति । वारुण्यां मेषीम् १२ अथाभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि वा १३ करम्भपात्रेषु चान्वोप्याष्टावुत्तरस्यां वेद्यां हवींष्यासादयति १४ एकां मारुतीं प्रतिप्रस्थाता दक्षिणस्यां करम्भपात्राणि च १५ अत्र मेषप्रतिकृती व्यतिहरतः १६ मारुत्यां मेषीमवदधाति । वारुण्यां मेषम् १७ पशुवन्निर्मन्थ्यौ सामिधेन्यश्च न व प्रयाजानूयाजाः १८ प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीमुदानयत्येतच्च वाचयति १९ तां पृच्छति पत्नि कति ते जारा इति २० यानाचष्टे तान्वरुणो गृह्णात्विति निर्दिशति २१ यज्जारं सन्तं न प्रब्रूयात्प्रियं ज्ञातिं रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति विज्ञायते २२ संमृष्ट उत्तरोऽग्निर्भवत्यसंमृष्टो दक्षिणः । अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण वोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः २३ मो षू ण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह । यद्ग्राम इत्युभौ याज्याम् २४

अक्रन्कर्म कर्मकृत इति विपरायन्तौ जपतः २५ अपि वाध्वर्युः प्रतिप्रस्थाता वा जुहुयात् । अन्वारभेयातामितरौ २६ अत्र दक्षिणमग्निं संमार्ष्टि २७ ऐन्द्राग्नपर्यन्तैः प्रचर्यारमत्यध्वर्युः २८ अथ प्रतिप्रस्थाता पूर्वेण सहावदानेन मारुत्याः सर्वां मेषीमवद्यति । उत्तरेण शमीपर्णकरीराणि २९ अथ प्रचर्यारमति ३० अथाध्वर्युः पूर्वेण सहावदानेन वारुण्याः सर्वं मेषमवद्यति । उत्तरेण शमीपर्णकरीराणि । अथ प्रचरति ३१

इति षष्ठी कण्डिका

कायानुब्रूहि कं यजेत्येककपाले संप्रैषौ १ नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति २ तदु हैके पृथगीडे निरवद्यन्ति । तदु तथा न कुर्यात् । सप्तानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति । तस्मिन्प्रतिप्रस्थाता मारुत्या अन्ववदधाति ३ उपहूतां प्राश्नन्ति ४ यः प्रवया इवर्षभः स दक्षिणा ५ कामं तु ततो भूयो दद्यात् ६ धेनुर्दक्षिणेत्येके ७ परिवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति ८ उभौ वाजिनाभ्यां प्रचरतः ९ शेषौ समवनीयोत्तरे विहारे पूर्ववद्भक्षयन्त्या मा विशन्त्विन्दव आ गल्गा धवनीनां रसेन मे रसं पृण । तस्य ते वाजोभिर्भक्षंकृतस्येति समानम् १० पूर्णपात्रवज पूर्ववदिष्टिं संस्थापयति ११ पूर्णपात्रस्य स्थाने सौमिकोऽवभृथः १२ चतुर्गृहीतान्याज्यानि १३ वारुण्यै निष्कासेन तुषैश्चावभृथमवयन्ति १४ तुषा ऋजीषधर्मं लभन्ते १५ वारुणमेककपालमेके समामनन्ति १६ नायुर्दां नाभिप्रव्रजनमन्त्रं न साम गायति १७ सर्वा दिशोऽवभृथगमनमाम्नातम् १८ नोदीचीरभ्यवेत्या इत्येके १९ यां दिशं गच्छेयुस्तथामुखाः प्रचरेयुरित्येके २० वहन्तीनां स्थावरा अभ्यवेत्याः २१ तदभावे याथाकामी २२ उदकान्ते स्तरणान्तां वेदिं कृत्वा तस्यां हवींषि सादयति २३ अपि वा न वेदिः २४ शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा जपति २५ अभिष्ठितो वरुणस्य पाश इत्युदकान्तमभितिष्ठन्ते २६ अपः प्रगाह्य तिष्ठन्तोऽवभृथेन चरन्ति २७ तृणं प्रहृत्य स्रौवमाघारयति २८ यदि वा पुरा तृणं स्यात्तस्मिञ्जुहुयात् २९

इति सप्तमी कण्डिका

अग्नीदपस्त्रिः संमृड्ढीति संप्रेष्यति १ आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादा अन्नाद्यायेति मन्त्रं संनमति २ अग्नेरनीकमप आविवेशेति स्रुच्यमाघारयति ३ वागस्याग्नेयीत्यनुमन्त्रयते यजमानः ४ लुप्यते प्रवरः ५ अपबर्हिषः प्रयाजानिष्ट्वाप्सुमन्तावाज्यभागौ यजति ६ अप्स्वग्न इत्येषा । अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवमापश्च विश्वभेषजीरित्यप्सुमन्तौ ७ निष्कासस्यावदाय वरुणमिष्ट्वा कृत्स्नं निष्कासमवदायाग्नीवरुणौ स्विष्टकृदर्थे यजति ८ नोत्तरं क्रियते ९ अपि वौपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति १० देवौ यजेति प्रथमं संप्रेष्यति । यजेत्युत्तरम् ११ तुषाणां स्थालीं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति १२ अपि वा न सौमिकोऽवभृथः । तूष्णीं तुषनिष्कासमप्सूपवपेत् १३ इमं विष्यामीति पत्नी योक्त्वपाशं विमुञ्चते १४ देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमज्जन्तौ स्नातः पत्नी यजमानश्च १५ अन्योऽन्यस्य पृष्ठे प्रधावतः १६ काममेते वाससी यस्मै कामयेयातां तस्मै दद्याताम् । नहि दीक्षितवसने भवत इति वाजसनेयकम् १७ उद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यसित्वा समिधः कृत्वाप्रतीक्षास्तूष्णीमेत्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते १८ अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् १९ सर्वं वा वापयेत् २० मन्त्रादिर्विक्रियते । यद्धर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेनेति समानम् २१ अपि वा स्नात्वोप्त्वा केशश्मश्रूण्यरण्योरग्नीन्समारोप्योदवसाय निर्मथ्य पौर्णमासेन यजते २२ यज्ञो ह वा एष यद्वरुणप्रघासा नह्यवकल्पते यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति वाजसनेयकम् २३

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजते १ अग्नये

ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता २ साकं वा रश्मिभिः प्रचरन्ति ३ सिद्धमिष्टिः संतिष्ठते ४ मरुद्धः सांतपनेभ्यो मध्यंदिने चरुम् ५ न बर्हिरनुप्रहरति ६ सिद्धमिष्टिः संतिष्ठते ७ मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् ८ यत्सांतपनस्य बर्हिस्तद्गृहमेधीयस्य ९ अपि वा नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह । न प्रयाजा इज्यन्ते नानूयाजाः १० अयजुष्केण वत्सानपाकृत्यापवित्रेण गा दोहयति ११ स वै खलु पर्णशाखया वत्सानपाकृत्य पवित्रवति संदोह्य यथैतदमावास्यायां क्रियते तं चरुं श्रपयतीत्येके १२ अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्राणि प्रयुनक्ति १३ स्थालीं कपालानां स्थाने १४ निर्वपणकाले १५

इति नवमी कण्डिका

चतुरो मुष्टीन्निरुप्य बह्वन्वावपति १ कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति । ध्रुवोऽसीति मन्त्रं संनमति । पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति २ अधिश्रयणकाले प्रातर्दोहवत्सर्वा यजमानस्य गा दोहयित्वा तस्मिञ्छ्रपयति ३ संप्रैषकाले यदन्यदिध्माबर्हिषस्तत्संप्रेष्यति । आज्य ग्रहणकाले ध्रुवायामेव गृह्णाति ४ प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यान्तर्वेदि विधृती निधाय ध्रुवां स्रुवं च सादयति ५ एतावसदतामिति मन्त्रं संनमति ६ उद्वासनकाले शरं निधाय यावन्तो यजमानस्यामात्यास्तावत ओदनानुद्धरति ७ अतो भूयसो यदि बहुरोदनो भवति ८ उद्धृतानुत्पूतानलंकृतानभिघारितानासादयति ९ दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति १० तं नाभिघारयति ११ द्वयोरुद्धरणं वाजसनेयिनः समामनन्ति । दक्षिणादेव मरुतो गृहमेधिनो यजति १२

इति दशमी कण्डिका

उत्तरस्मात्स्विष्टकृतम् १ ओदनयोर्निम्ने कृत्वा तत्राज्यमानीय तत आज्यार्थान्कुरुत आज्यस्थाल्या वेति वाजसनेयकम् २ एवं कुर्वन्न ध्रुवायां गृह्णीयात् ३ आज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य सर्वतः समवदाय मरुतो गृहमेधिनो यजति ४ सर्वेषामुत्तरार्धात्सकृत्सकृदवदायाग्निं स्विष्टकृतम् ५

न प्राशित्रं न यजमानभागम् ६ इडान्तः संतिष्ठते ७ ये यजमानस्यामात्या हविरुच्छिष्टाशास्ते ओदनशेषान्प्राश्नन्ति । ऋत्विजोऽन्ये वा ब्राह्मणाः ८ प्राश्नन्ति ब्राह्मणा ओदनं यः स्थाल्याम् ९ सुहिता एतां रात्रिं वसन्ति प्रतीता अनवर्तिमुखिनः १० प्रतिवेशा अपि पचन्ते ११ गा अभिघ्नते १२ आञ्जतेऽभ्यञ्जते १३ अनु वत्सान्वासयन्ति १४ अनिष्कासितां स्थालीं निदधाति १५ अप्रमृष्टं दर्व्युदायुवनमन्ववदधाति १६ पराचीनरात्रेऽभिवान्याया अग्निहोत्र्यै च वत्सौ बध्नाति १७ व्युष्टायां पुराग्निहोत्रात्पूर्णदर्व्येण चरन्ति । हुते वा १८ शरनिष्कासस्य दर्वीं पूरयित्वर्षभमाहूय तस्य रवेते पूर्णा दर्वि परापतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात् १९ यद्यृषभो न रूयाद्ब्रह्मा ब्रूयाज्जुहुधीति २० यस्य रवते जुहोति तां दक्षिणां ददाति २१ मरुद्भ्यः क्रीडिभ्यः स्वतवद्भ्यो वा पुरोडाशं सप्तकपालं निर्वपति । साकं सूर्येणोद्यता साकं वा रश्मिभिः प्रचरन्ति । सिद्धमिष्टिः संतिष्ठते २२

इत्येकादशी कण्डिका

ततो महाहविषस्तन्त्रं प्रक्रमयति १ तस्य वारुणप्रघासिकेनोत्तरेण विहारेण कल्पो व्याख्यातः २ निर्वपणकाल आग्नेयमष्टाकपालमित्यष्टावुत्तराणि हवींषि निर्वपति ३ ऐन्द्रस्य चरोः स्थान इन्द्राय वृत्रघ्ने चरुमेके समामनन्ति । अग्ने वेर्होत्रं वेर्दूत्यमूर्ध्वो अध्वरे स्थात् । अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी । स्विष्टकृदिन्द्राय देवेभ्यो भव जुषाणो अस्य हविषो घृतस्य वीहि स्वाहेति स्रुच्यमाघारयति । वागस्याग्नेयीत्यनुमन्त्रयते यजमानः ४ सहश्च सहस्यश्चेति चतुर्भिर्मासनामभिरेककपालभभिजुहोति । धेनुर्दक्षिणर्षभो वा प्रवयाः । इदावत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति ५ ऐन्द्राग्नतुषानप्सु प्रतिपादयति ६ सिद्धमिष्टिः संतिष्ठते ७

इति द्वादशी कण्डिका इति तृतीयः पटलः

तदानीमेव पितृयज्ञस्य तन्त्रं प्रक्रमयति १ वेदं कृत्वाग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुःस्रक्तिं वेदिं करोति २ प्रतिदिशं स्रक्तयोऽवान्तरदेशा-

न्प्रति मध्यानि ३ उद्धता खाता भवति ४ न प्राची वेदिरुद्धत्या । पितृयज्ञो हि । न दक्षिणा । यज्ञो हि । उभे दिशावन्तरोद्धत्या । उभये हि देवाश्च पितरश्चेज्यान्त इति विज्ञायते ५ ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान्संनमति । यथा भवति पृथिवि देवपितृयजनीति ६ अविकारो वा परवाक्यश्रवणात् ७ प्रागुत्तरात्परिग्राहात्कृत्वा दक्षिणाग्नेरग्निमाहृत्य मध्ये वेद्या उपसमादधाति ८ एतस्मिन्पितृयज्ञ आहवनीयकर्माणि क्रियन्ते ९ अग्नीनन्वाधायेध्माबर्हिराहरति १० समूलं बर्हिर्दाति ११ उपमूललूनं वा १२ वर्षीयानर्थादिध्मो द्राधीयांश्च १३ अग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्रप्रयोगः १४ निर्वपणकाले सर्वतो वेदिं परिश्रित्योत्तरेण द्वारं कृत्वा दक्षिणतः प्राचीनावीती हवींषि निर्वपति । उत्तरतो वा । यज्ञोपवीती सोमाय पितृमत इति यथासमाम्नातम् १५ अथैकेषाम् । सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालं पितृभ्यो ग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते १६ उदकुम्भः प्रोक्षणीभाजनं भवति १७ प्रोक्षण्युद्रेकेण यवान्संयुत्य त्रिष्फलीकृतांस्तण्डुलान्विभागमन्त्रेण विभज्य धानार्थान्निधायेतरान्पिष्टानि कृत्वा दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपधाय दक्षिणाग्नौ प्रथमेन कपालमन्त्रेण धानार्थं कपालमधिश्रयति १८ अधिश्रयणकाले ऽधिश्रयणमन्त्रेण तण्डुलानोप्य बहुरूपा धानाः करोति १९ विदह्यमानाः परिशेरत इति विज्ञायते २०

इति त्रयोदशी कण्डिका

संप्रैषकाले पत्नीवर्जं संप्रेष्यति १ आज्यग्रहणकाल उत्तरेण गार्हपत्यं चतुर्गृहीतान्याज्यानि गृह्णाति २ प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते ३ स्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन्पर्येति ४ औद्धवान्धारयमाणस्त्रिरस्तृणन्प्रतिपर्येति ५ औद्धवः प्रस्तरः ६ प्रस्तरस्य ग्रहणसादने तूष्णीम् ७ न विधृती ८ द्वौ परिधी परिदधाति ९ मध्यमोत्तरौ १० सर्वान्वा यदि सर्वानावाहनकाले परिधीँरपोर्णवति वाभिज्ञाय दक्षिणं मध्यमे परिधावुपसमस्येत् १२ उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति १३ अर्धाः पिष्टानामावृता सक्तून्कृत्वाभिवान्यायै दुग्ध-

स्यार्धशरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखस्त्रिः प्रसव्यमनारभ्योपमन्थति १४ शलाकास्थं मन्थं कृत्वैकैकशो हवींष्यासादयति १५ दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते १६ अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यति १७ एकां सामिधेनीं त्रिरन्वाह । उशन्तस्त्वा हवामह इत्येताम् १८ एकामनूयाजसमिधमवशिष्य समश इध्मं त्रैधं विभज्य त्रिरादधाति १९ समानमा प्रवरात् २० नार्षेयं वृणीते न होतारम् २१ आश्राव्याह सीद होतरिति । एतावान्प्रवरः २२ अपबर्हिषः प्रयाजानिष्ट्वा जीववन्तावाज्यभागौ यजति २३ आ नो अग्ने सुकेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे । त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवस इति जीववन्तौ २४ अत्र वेद्याः परिश्रयणमेके समामनन्ति २५

इति चतुर्दशी कण्डिका

विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्यृत्विजः । विपरिहरन्ति स्रुचो हवींषि परिश्रयणानीति १ दक्षिणेन जुहूमुपभृतं सादयति । दक्षिणेनोपभृतं ध्रुवां दक्षिणेन पुरोडाशं धानास्ता दक्षिणेन मन्थम् २ समानत्र जुहूषट्कपालौ ३ ब्रह्मयजमानावित्येके ४ षडवत्तः पञ्चावत्तिनां पञ्चावत्तश्चतुरवत्तिनाम् ५ संभिन्दन्पुरोडाशस्यावद्यति ६ द्विः प्रथमस्यावद्येत्पञ्चावत्तिनः ७ जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति ८ सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य ९ दक्षिणतोऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्ना स्वधेत्याश्रावयति १० अस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तं स्वधेति संप्रेष्यति । ये स्वधामह इति यजति । स्वधा नम इति वषट्करोति ११ स्वधाकारं तु प्रतिषिध्य बह्वृचवाजसनेयिनामाश्रुतप्रत्याश्रुतान्येव विदधाति १२ द्वे पुरोऽनुवाक्ये अन्वाह १३ ऋचमुक्त्वा प्रणौति । अपरामुक्त्वा प्रणौति १४ त्वं सोम प्रचिकित इत्येता आम्नाता भवन्ति १५ एका याज्या १६ अग्निष्वात्ताः पितर इत्येषा । ये अग्निष्वात्ता येऽनग्निष्वात्ता अंहोमुचः पितरः सोम्यासः । परेऽवरेऽमृतासो भवन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान् । वा-

न्यायै दुग्धे जुषमाणाः करम्भमुदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदाना इन्द्रवन्तो हविरिदं जुषन्तामिति पितृभ्योऽग्निष्वात्तेभ्यः १७ उपांशु परिश्रिते पितृयज्ञेन चरन्ति १८ एतेनैव कल्पेन पितॄन्बर्हिषदो यजत्यग्निष्वात्तान् १९ अग्निं कव्यवाहनं स्विष्टकृदर्थे यजति २० यां देवतां यजेत्तद्धविषः प्रथममवदानमवद्यति २१ स चावदानकल्पः २२ मन्थ इडामवद्यति मन्थं वैव २३ मन्थं होत्र आदधाति २४ तं होतावजिघ्रति २५

इति पञ्चदशी कण्डिका

ब्रह्माध्वर्युरग्नीद्यजमानश्च १ अपि वा न यजमानः २ समशो वा प्रतिविभज्यावघ्रेण भक्षयित्वा बर्हिषि लेपान्निमृजन्ते ३ उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन्पर्येति ४ निधाय कुम्भमया विष्ठा जनयन्कर्वराणीति त्रिरपरिषिञ्चन्प्रतिपर्येति ५ हविःशेषान्संप्लोम्नाय पिण्डान्कृत्वा तिसृषु स्रक्तिषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामिति । एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ६ त्रीन्परान्पितॄनन्वाचष्टे । षष्ठं प्रथमे पिण्डे । पञ्चमं द्वितीये । चतुर्थं तृतीये ७ उत्तरस्यां स्रक्त्यां रिप्ललेपं निमृज्यात्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसंदृशं त्वा वयनित्यैन्द्र्यर्चाहवनीयमुपतिष्ठन्त ऐन्द्रीणां वा ८ आ तमितोरुपस्थायाक्षन्नमीमदन्त हीति पङ्क्त्या गार्हपत्यमुपतिष्ठन्ते ९ एतयैव परिश्रितं प्रविशन्ति १० अत्रैके भक्षणपरिषेचने समामनन्ति ११ अवघ्रेण सर्वभक्षाः १२ आञ्जनादि पिण्डपितृयज्ञवदा पङ्क्त्याः १३ यदन्तरिक्षमिति पङ्क्त्या पुनरेति १४ विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्यृत्विजः । विपरिहरन्ति स्रुचः १५ अपकर्षन्ति परिश्रयणानि १६ औपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति । देवौ यजेति प्रथमं संप्रेष्यति । यजेत्युत्तरम् १७ सूक्तवाकं प्रति निवीतानि कुर्वते १८ न पत्नीः संयाजयन्ति १९ न समिष्टयजुर्जुहोति २० सर्वमन्यत्क्रियते २१ संतिष्ठते पितृयज्ञः २२

इति षोडशी कण्डिका इति चतुर्थः पटलः

प्रतिपुरुषमेककपालान्निर्वपति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावत एकातिरिक्तान् १ यावन्तो गृह्याः स्मस्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति २ तूष्णीमुपचरिता भवन्ति ३ उत्तरार्धे गार्हपत्यस्याधिश्रयति ४ तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य पशूनां शर्मासीति मूते समावपति ५ मूतयोर्मूतेषु वा ६ कोशापिधानेन हरन्तीत्येकेषाम् ७ एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति ८ उत्तरपूर्वमवान्तरदेशं गत्वाखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपति ९ असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन् १० यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात् ११ चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात्सकृत्सकृदवदाय मध्यमेनान्तमेना वा पलाशपर्णेन जुहोति १२

इति सप्तदशी कण्डिका

एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेति भेषजं गव इत्येताभ्यां चातुष्पथमग्निं परिषिञ्चति । अवाम्ब रुद्रमदिमहीति यजमानो जपति १ त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं परियन्ति २ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति यजमानस्य पतिकामा परीयात् ३ ऊर्ध्वान्पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भग स्थ भगस्य वो लप्सीयेत्यपादायैतेनैव कल्पने त्रिः समावपेयुः ४ पतिकामा याश्चैवं समावपेयुस्तथैव मन्त्रं संनमयत्यः ५ परीत्यपरीत्य समावपन्तीत्येके ६ तान्मूते समावपति मूतयोर्मूतेषु वा ७ एष ते रुद्र भाग इति वृक्ष आसजति वृक्षयोर्वृक्षेषु वा ८ अपि वा मूतयोः समोप्य विवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वावधायावततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति ९ अपः परिषिच्याप्रतीक्षास्तूष्णीमेत्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते १०

इत्यष्टादशी कण्डिका

आदित्यं घृते चरुं पूर्ववन्निर्वपति १ अश्वः श्वेतो दक्षिणा २ गौर्वा श्वेतः

श्वेतन्यङ्गो वा ३ सिद्धमिष्टिः संतिष्ठते ४ आग्नावैष्णवमेकादशकपालं निर्वपेच्चक्षुष्कामो बार्हस्पत्यं चरुं ब्रह्मवर्चसकाम ऐन्द्रं पशुकामः सारस्वतं प्रजाकामः पौष्णं प्रतिष्ठाकामः ५ एतेषां यत्कामयेत्तदनुनिर्वपेत् ६ सिद्धमिष्टिः संतिष्ठते ७ संतिष्ठन्ते साकमेधाः ८ अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते । यो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेनेति समानम् ९

इत्येकोनविंशी कण्डिका इति पञ्चमः पटलः

ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयेण यजते १ तस्य वैश्वदेववत्कल्पः २ निर्वपणकाल आग्नेयमष्टाकपालमिति दशोत्तराणि हवींषि निर्वपति ३ वायव्यस्य पयसः प्रातर्दोहवत्कल्पः ४ अथैकेषाम् । पञ्च संचराणि निरुप्य वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः । इन्द्राय शुनासीराय स्रुचा जुहुत नो हविः । जुषतां प्रति मेधिरः । प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता स जोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरी हविरिदं जुषस्वेति शुनासीरीयस्य याज्यानुवाक्ये । सौर्य एककपाल इति ५ नव प्रयाजानूयाजाः ६ पञ्चप्रयाजं त्र्यनूयाजमित्येके ७ संसर्पोऽस्यंहस्पत्याय त्वेति मासनाम्नैककपालमभिजुहोति ८ द्वादशगवं सीरं दक्षिणा ९ षड्योगं वा १० उष्टारावित्येकेषाम् ११ उष्टारं वा १२ अश्वं श्वेतमेककपालस्य गां वा श्वेतम् १३

इति विंशी कण्डिका

अनुवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति । सिद्धमिष्टिः संतिष्ठते । संतिष्ठन्ते चातुर्मास्यानि । अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते । एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः । प्रजामनु प्रजायसे तदु ते मर्त्यामृतम् । येन मासा अर्धमासा ऋतयः परि-

वत्सराः । येन ते ते प्रजापत ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे । अग्निस्तिग्मेनेति समानम् १ चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते २ फाल्गुन्या उद्दृष्टे सोमाय दीक्षते ३ तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् ४ इति वै खलूत्सृजमानस्य ५ अथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा ६

इत्येकविंशी कण्डिका

पञ्चदश्यां वैश्वदेवेन यजते १ एतेनैव पशुकामो यजेत यस्मिन्नस्यर्तौ भूयिष्ठं गोषु पयः स्यात् २ एतेनैव प्रजाकामः पशुकामो वा यजेत ३ अथैकेषाम् । वैश्वदेवेनेतरेषां पर्वणां स्थाने पशुकामो यजेत यावत्सहस्रं पशून्प्राप्नुयात् । अथेतरैः स्वकालैर्यजेत ४ शुनासीरीयेण ग्रामकामो वर्ष्य उदके यजेत ५ वर्ष्यमुदकमन्ववसाय तत उदकार्थान्कुरुते ६ एतेनैव प्रजाकामः पशुकामः पुष्टिकामो ब्रह्मवर्चसकामोऽन्नाद्यकामो वा यजेत ७ पर्वभिश्चातुर्मास्येषु मासान्संचष्टे ८ पञ्चसांवत्सरिकाणि व्याख्यास्यामः ९ त्रीनृतून्संवत्सरानिष्ट्वा मासं न यजते । द्वौ पराविष्ट्वा विरमति १० चैत्र्यां तूपक्रम्य द्वाविष्ट्वा मासमनिष्ट्वा त्रीन्परानिष्ट्वा विरमति ११ अथ पञ्चदशवार्षिकाणि १२ एतान्येव द्विः १३ त्रिरपरिमितं वाभ्यस्येत् १४ विज्ञायते च स त्रिषुत्रिषु संवत्सरेषु मासं न यजत इत्येतद्वचनोऽभ्यासः १५ पञ्चसांवत्सरिकेषु वैश्वानरपार्जन्या पञ्चहोता च नाभ्यावर्तेत १६ एकोपक्रमत्वात् १७ यथान्वारम्भणीया यथान्वारम्भणीया १८

इति द्वाविंशी कण्डिका इति षष्ठः पटलः

इत्यष्टमः प्रश्नः

श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते १ एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात् २ जपो होम इज्या च ३ दोषनिर्घातार्थानि भवन्ति ४ अनन्तरं दोषात्कर्तव्यानि ५ निर्हृते दोषे पुनः कृत्स्नं कर्म ६ तस्य नावचनात्पुनःप्रयोगः ७ तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात् ८ पृथगरणीष्वग्नीन्समारोप्य प्रयाति ९ यत्र वसेत्तदेतामिष्टिं संस्थापयेत् १० यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेदन्वग्निरु-

षसामग्रमख्यदित्यन्यं प्रणीय भूरित्युपस्थाय यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृडय स्वाहेति पूर्णं स्त्रुवं सर्वप्रायश्चित्तं हुत्वेदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात् ११ जपेदित्येके १२ मनसा व्रतोपायनीयं यजुर्जपेत् १३ यः कश्चनानुगच्छेदेतदेव प्रणयनवर्जमावर्तेत १४ मन्थेद्गार्हपत्यम् १५ याप्रकृतिर्दक्षिणाग्नेः १६ यद्याहिताग्नेरग्निरपक्षायेदा शम्यापरासात्परि वाजपतिः कविरग्निरिति त्रिः प्रदक्षिणं परिक्रम्य तं संभरेदिदं त एकं पर उत एकं तृतीयेन ज्योतिषा संविशस्व । संवेशनस्तनुवै चारुरेधि प्रिये देवानां परमे जनित्र इति १७ यदि परस्तरामपक्षायेदनुप्रयायावस्येत् १८ तदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् १९ पथोऽन्तिकाद्बर्हिराहरेत् २० अनड्वान्दक्षिणा । सिद्धमिष्टिः संतिष्टते २१ ततः श्वोभूते गृहेषु प्रत्यवस्यति २२ यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेत् २३ अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् २४ यस्य सायं दुग्धं हविरार्तिमार्छतीन्द्राय व्रीहीन्निरुप्योपवसेत् २५ यत्प्रातः स्यात्तच्छृतं कुर्यात् २६ अथेतर ऐन्द्रः पुरोडाशः स्यात् २७ तस्य प्रातर्दोहेन समवदाय प्रचरेत् २८ एतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तम् २९ सायं दोहेनास्य समवदाय प्रचरेत् ३० यस्योभौ दोहावार्तिमार्छेयातामाग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनम् ३१ अग्निं पुरोडाशेन यजेत । इन्द्रं पञ्चशरावेण ३२ पञ्चशरावेण वोभे देवते यजेत ३३ अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ३४

इति प्रथमा कण्डिका

यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत १ जघनेन वेदिमन्तर्वेदि वोदकशुल्बं संनहनं स्तृणीयात् २ यदा त्रिरात्रीणा स्यादथैनामुपह्वयेतामूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति ३ यस्याग्निहोत्रं सांनाय्यं वा विष्यन्देतोदङ्परेत्य वल्मीकवपामुद्धृत्य प्रजापते न त्वदेतानीति प्राजापत्यर्चा वल्मीकवपायामवनीय भूरित्युपस्थायान्यां दुग्ध्वा पुनर्जुहुयात् । यदि सांनाय्यमन्यदागमयेत् ४ यदि कीटोऽवपद्येत मध्यमेनान्तमेन वा पलाशपर्णेन मही द्यौः पृथिवी च न इति द्यावापृथिव्य-

यर्चान्तःपरिधि निनीयान्यां दुग्ध्वा पुनर्जुहुयात् । यदि सांनाय्यमन्यदागमयेत् ५ यस्याग्निहोत्रमववर्षेन्मित्रो जनान्कल्पयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवज्जुहोतेति तत्कृत्वान्यां दुग्ध्वा पुनर्जुहुयात् ६ यदि पूर्वस्यामाहुत्यां हुतायामुत्तराहुतिः स्कन्देद्यदि वोत्तरया पूर्वामभिजुहुयाद्यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयोंत वानस्पत्ययर्चा समिधमाधाय तत एव तूष्णीं हुत्वान्यां दुग्ध्वा पुनर्जुहुयात् ७ यदि पूर्वस्यामाहुत्यां हुतायामाहवनीयोऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदन्ननन्तरे शकले हिरण्ये वा जुहुयात् ८ यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारः स्कन्देत्तं स्रुवस्य बुध्नेनाभिनिदध्यान्मा तमो मा यज्ञस्तमन्मा यजमानस्तमन्नमस्ते अस्त्वायते नमो रुद्र परायते नमो यत्र निषीदसि । अध्वर्युं मा हिंसीर्यजमानं मा हिंसीरिति यदि पुरस्तात् । ब्रह्माणं मा हिंसीर्यजमानं मा हिंसीरिति यदि दक्षिणतः । होतारं मा हिंसीः पत्नीं मा हिंसीर्यजमानं मा हिंसीरिति यदि पश्चात् । आग्नीध्रं मा हिंसीः पशून्मा हिंसीर्यजमानं मा हिंसीरिति यद्युत्तरतः ९ आहं यज्ञं दधे निर्ऋतेरुपस्थात्तं देवेभ्यः परिददामीत्येनमादाय १०

इति द्वितीया कण्डिका

सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्सुप्रतीकः । मा नो हासीन्मेत्थितो नेत्त्वा जहाम गोपोषं नो वीरपोषं च यच्छेत्येनमग्नौ प्रहरति १ प्रहृत्य वाभिजुहुयात् २ यदि कालसंनिकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य जुहुयात् ३ अथात्वरमाणः पुनर्मन्थेत् ४ यद्यन्यं न विन्देदजायै दक्षिणे कर्णे होतव्यम् ५ अजस्य तु ततो नाश्नीयात् ६ यद्यजां न विन्देद्ब्राह्मणस्य दक्षिणे हस्ते होतव्यम् ७ ब्राह्मणं तु वसत्यै नापरुन्धीत ८ यदि ब्राह्मणं न विन्देद्दर्भस्तम्बे होतव्यम् ९ दर्भांस्तु नाध्यासीत १० यदि दर्भान्न विन्देदप्सु होतव्यम् ११ आपस्तु न परिचक्षीतेमा भोजनीया इमा अभोजनीया इति १२ अप्यभोजनीयस्यैतं संवत्सरं परिगृह्णीयादेवापः १३ अद्भिस्तु न पादौ प्रक्षालयीत १४ सांवत्सरिकाण्येतानि व्रतानीत्याश्मरथ्यः । यावज्जीवमित्यालेखनः १५ संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् १६ अग्नये क्षामवतेऽष्टाकपालं

येषां पूर्वापरा अन्वञ्चः प्रमीयेरन् । गृहदाहे वा १७ अग्नये विविचये-ऽष्टाकपालं यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्मिथो वा १८ अग्नये विपृचेऽष्टाकपालं यदि गार्हपत्याहवनीयौ १९ अग्निना विपृचा वयं गी-र्भिः स्तोमं मनामहे । स नो रास्व सहस्त्रिणः । कविरग्निः समिध्यते विप्रो यज्ञस्य साधनः । विपृञ्चन्रास्व नो वस्विति याज्यानुवाक्ये २० अग्नये वीतयेऽष्टाकपालं यदि गार्हपत्यदक्षिणाग्नी दक्षिणाग्न्याहवनीयौ वा २१ अग्नये शुचयेऽष्टाकपालं यदि प्रदाव्येनाभ्यादाह्येन शवाग्निना वा । अग्नये संकुसुकायाष्टाकपालं यदि सूतकाग्निना । संकुसुको कुसुको वि-किरो यश्च विष्किरः । माषाज्येन नलेध्मेन क्रव्यादं शमयामसि । अस्मि-न्वयं संकुसुकेऽग्नौ रिप्राणि मृज्महे । अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषदिति याज्यानुवाक्ये । अग्नयेऽप्सुमतेऽष्टाकपालं यदि वैद्युतेन २२ यदि सर्वाः संनिपतेरन्विविचये निरुप्य शुचये निर्वपेद्व्रातभृतीं तृतीयाम-प्सुमतीं चतुर्थीं क्षामवतीमन्तं परिक्रमयेत् २३ व्रातभृतीं द्वितीयामेके स-मामनन्ति । व्रातपतीमुत्तमाम् २४

इति तृतीया कण्डिका

गर्भं स्त्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः । पृथिव्यामवचुश्चोतैतन्ना-भिप्राप्नोति निर्ऋतिं पराचैरित्यग्निहोत्रस्थालीं स्त्रवन्तीमभिमन्त्र्य विधुं दद्रा-णमिति संदध्यात् १ अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्श-पूर्णमासयाजीत्युक्तम् २ समानतन्त्रे वा मुख्यः कार्यः ३ अथैकेषाम् । वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्तरेतामिष्टिं निर्वपन्ति । य एवासावाग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमावास्यायां तमग्नये पथिकृते कुर्यात् । तेनैव पुनः पन्थामवैति न यज्ञं निच्छिनत्तीति विज्ञायते ४ सं-याज्ये एव पाथिकृती स्यातामित्यपरम् ५ यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीत्युक्तम् ६ अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः ७ तण्डुलभूतेष्वपनयेत् ८ व्यृद्धभाग्भ्य इत्यालेखनः ९ निनिरुप्तेऽभ्युदिते प्राकृतीभ्यः शेषम् १० तण्डुलभूतेष्वपनयेत् ११ यस्यागृहीतं हविरभ्युदि-याद्व्रतचर्यां वा नोदाशंसीत । स त्रेधा तण्डुलानिति पूर्ववत् । अथोत्तर-स्मै हविषे वत्सानपाकृत्योपवसेत् १२ अथ यस्य गृहीतं हविरभ्युदिया-

त्सैव प्रायश्चित्तिः सा व्रतचर्या १३ वत्सान्मातृभिः संसृज्य पुनरपाकृत्य पूर्वेद्युर्दुग्धं दधि हविरातञ्चनार्थं निदध्यात् १४ अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेत्प्रवसेद्वा व्रत्येऽहनि मांसं वाश्नाति स्त्रियं वोपैति १५ अग्नये व्रतभृदेऽष्टाकपालं यद्यार्तिजमश्रु कुर्यात् १६ त्वमग्ने व्रतभृच्छुचिर्देवाँ आसादया इह । अग्ने हव्याय वोढवे । व्रतानुबिभ्रद्व्रतपा अदाभ्यो यजा नो देवाँ अजरः सुवीरः । दधद्रत्नानि सुविदानो अग्ने गोपाय नो जीवसे जातवेद इति याज्यानुवाक्ये । व्रातभृतीं प्रवास एके समामनन्ति व्रातपतीमश्रुकर्मणि १७

इति चतुर्थी कण्डिका इति प्रथमः पटलः

यद्यग्निहोत्र्युपसृष्टा वाश्येत यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि । अभयं नः पशुभ्यो नमो रुद्राय मीढुष इति जुहुयादभि वा मन्त्रयेत १ यद्यु वै निषीदेदेतयैव यस्माभीषा न्यषद इत्यभिमन्त्र्योदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्युपस्थाप्य तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यात् । अवर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्चतीति विज्ञायते २ अपि वा दण्डेन विपिष्याविपिष्य वोत्थाप्यात्मन्कुर्वीत ३ सूयवसाद्भगवती हि भूया थो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति दर्भस्तम्बमालुप्य ग्रासयेत् ४ यद्यु वै लोहितं दुहीत व्युत्क्रामतेत्युक्त्वा दक्षिणमग्निं परिश्रित्य तस्मिन्नेतच्छ्रपयित्वा तस्मिन्व्याहृतीभिस्तूष्णीं वा हुत्वा तां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्स्यात् ५ यदि दुह्यमानं स्कन्देद्यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयीत्येनदभिमन्त्र्य समुद्रं वः प्रहिणोमीत्यद्भिरुपसृजेत् ६ यदि दुह्यमाना स्थालीमवभिन्द्यान्निर्णिज्यान्यां दुह्यात्तां वैव ७ यदि दुह्यमानं दुग्धं ह्रियमाणं हृतमधिश्रीयमाणमधिश्रितमुद्वास्यमानमुद्वासितमुन्नीयमानमुन्नीतं वा स्कन्देत्तदेव यादृक्कीदृक्च होतव्यमन्यया वाभिदोह्यम् ८ यदि सकृदुन्नीतं स्कन्देद्द्विस्त्रिर्वा न तदाद्रियेत । यद्यु वै चतुर्थमुन्नीतं स्कन्देत्स्थाल्यां शेषमवनीय चतुरभ्युन्नीय होतव्यमन्यया वाभिदोह्यम् ९

इति पञ्चमी कण्डिका

यद्युद्द्रुतस्य स्कन्देत्तन्निषद्य पुनर्गृहीत्वा तदेव यादृक्कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अथाज्येन वरुणीमृचमनूच्य वारुण्यर्चा जुहुयात् १ यदि प्राचीनं स्कन्देत्तदेव यादृक्कीदृक्च होतव्यमन्यया वाभिदोह्यम् २ अथैकेषाम् । यदि प्राचीनं ह्रियमाणं स्कन्देत्प्रजापतेर्विश्वभृति तन्वं हुतमसि स्वाहेत्येनदभिमन्त्र्यैतदेवाग्निहोत्रं स्यादित्याश्मरथ्यः । अन्यां दुग्ध्वा पुनरोहोतव्यमित्यालेखनः ३ यदि पुरः पराहृतं स्कन्देदनूदाहृत्य चतुरभ्युन्नीय होतव्यमन्यया वाभिदोह्यम् ४ यदि पुर उपसन्नं स्कन्देत्तदेवयादृक्कीदृक्च होतव्यमन्यया वाभिदोह्यम् ५ अथैकेषाम् । यदि पुर उपसन्नमहुतं स्कन्देत्तदेव यादृक्कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अथाज्येन वारुणीमिति समानम् ६ अस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजन्या स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहीति स्कन्नमभिमन्त्र्योन्नम्भय पृथिवीमित्यद्भिरुपसृजेत् ७ यदनाहुतिमात्रं विप्रुडेव सा ८ यदि सायं स्कन्देदा होतोः प्रातर्नाश्नीयात् । यदि प्रातरा होतोः सायं नाश्नीयात् ९ दिव्या वा एतमशनिरभ्यवैति यस्याग्निहोत्रं शिरिशिराभवति । समोषामुमिति ब्रूयाद्यं द्विष्यात् १० यस्याग्निहोत्रेऽधिश्रिते श्वान्तराग्नी धावेद्गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वंसयन्नुद्द्रुत्यैतयैव भस्मना शुनः पदमपिवपेत् ११ यस्याग्निमनाहृतं सूर्योऽभिनिम्रोचेद्यत्र दीप्यमानं परापश्येत्तत आहृत्यैतं प्रविशानीति वैष आधीयते १२ इति दक्षिणाग्नेरनुगतस्याधानकल्पः १३ यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेत् १४

इति षष्ठी कण्डिका

दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । अन्वङ्ङार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत् । अन्वङ्ङग्निहोत्रेणानूद्रवेत् । आयतने हिरण्येऽग्निं प्रतिष्ठाप्य नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपस्थाय वारुणं चरुं निर्वपेत् १ व्रातभृतीं द्वितीयामेके समामनन्ति । ऋते हिरण्यात्प्रणयनमेके २ यदि सायमग्निहोत्रकालोऽतिपद्येत दोषा वस्तोर्नमः स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्या त-

मितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत ३ यदि प्रातः प्रातर्वस्तोर्नमः स्वाहेति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत ४ वरो दक्षिणा ५ हुत्वाहवनीयमुद्वाप्यान्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीयेहैव क्षेम्य एधि मा प्रहासीन्मामुमामुष्यायणमित्यादित्यमुपस्थाय मैत्रं चरुं निर्वपेत् ६ सौर्यमेककपालमेके समामनन्ति ७ संस्थितायामिष्ट्यामाहवनीयमेवैतदहरिन्धानावनश्नन्तौ वाग्यतावासाते यजमानः पत्नी च ८ द्वयोः पयसा पूर्ववत्सायमग्निहोत्रं जुहुयात् ९ यस्याग्निमनुद्धृतं सूर्योऽभ्युदियाच्चतुर्गृहीतमाज्यं पुरस्ताद्धरेत् । अन्वङ्ङार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत् । अन्वङ्ङग्निहोत्रेणानूद्द्रवेत् । आयतनेऽग्निं प्रतिष्ठाप्योषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमं स्वाहेति प्रत्यङ्ङिषद्याज्येन जुहुयात् १० अग्निहोत्रस्य स एव होमकल्पः । तत्प्रायश्चित्तं यत्प्रातः कालातिपन्नस्य ११ एतावन्नाना । नात्राहवनीयमनुगमयति १२ अथैकेषाम् । यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेदभ्युदियाद्वा १३

इति सप्तमी कण्डिका

मनो ज्योतिर्जुषतां त्रयस्त्रिंशत्तन्तव इति द्वे चतुर्गृहीते जुहुयात् १ यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्योऽभ्युदियाद्यथा विजनिष्यमाणो न विजायेत तादृक्तत् । आत्मानं वा ह यजमानो रुणद्धि सर्वज्यानिं वा जीयते । नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत । एकहायनो दक्षिणा २ हुत्वा तदुद्वास्य पुनराधेयं तस्य प्रायश्चित्तिरित्याश्मरथ्यः ३ अथैकेषाम् । यद्यन्ते स्यादुन्नीय प्राङुदाद्रवेत् । स उपसाद्या तमितोरासीत । स यदा ताम्येदथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भूतस्तमेवोपासरेत्स एवैनं तत उन्नयति नार्तिमार्छति यजमान इति विज्ञायते ४ यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् ५ स्वयं कृण्वानं सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नं सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततान । त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैः सधमादं मदेमेति याज्यानुवाक्ये ६ तन्तुं तन्वन्नुद्बुध्यस्वाग्न उदुत्तममु-

द्वयं तमसस्पर्युदु त्यं चित्रमित्युपहोमाः ७ हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरंधिमग्निं स्विष्टकृतमाहुवेम । स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुरिति संयाज्ये ८

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदाहवनीयमुद्वाप्य गार्हपत्यं मन्थेदितः प्रथमं जज्ञे अग्निरित्येतया । अग्ने सम्राडिषे रय्यै रमस्व सहसे द्युम्नायोर्जपत्यायेत्यभिमन्त्र्य सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समिन्धातामन्नादं त्वान्नपत्यायेत्युपसमिध्यान्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीयाग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् १ सर्वत्रानुगतेष्टिमेतामेके समामनन्ति २ आयाहि तपसा जनेष्वग्ने पावको अर्चिषा । उपेमां सुष्टुतिं मम । आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत् । हव्या देवेषु नो दधदिति याज्यानुवाक्ये ३ आहवनीयेऽनुगतेऽग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपति ४ न तपस्वते ५ यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदधिश्रित्याग्निहोत्रमुन्नीय वाग्निना च सहाग्निहोत्रेण चानूद्द्रवेत् । यो ब्राह्मणो बहुवित्स उद्धरेत् । यत्पुरा धनमदायी स्यात्तद्द्यात् । अच्युतेनैनं च्यावयतीति विज्ञायते ६ यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदनुगमयित्वा पूर्वं पूर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात् ७ यदि त्वरेत पूर्वमन्ववसाय ततः प्राङुद्धृत्य जुहुयात् ८ जामि तु तद्योऽस्य पुर्वस्तमपरं करोति । अन्यत्रैवावसाय पुर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात् । ततः श्वोभूतेऽग्नये तपस्वते जनद्वत इति समानम् ९ अथैकेषाम् । यस्याग्निरनुगच्छेन्न कालमवधारयेत् । अनुगमयित्वा पूर्वं पूर्ववन्मथित्वापरं पूर्ववदुद्धृत्य जुहुयात् । वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं यवमयं चरुम् १० यदि गार्हपत्य आहवनीयो वानुगच्छेत्तेभ्य एवावक्षाणेभ्योऽधि मन्थितव्यः । यदि नतादृशानीवावक्षाणानि स्युर्भस्मनारणी संस्पर्श्य मन्थितव्यः । स्वादेवैनं योनेर्जनयतीति विज्ञायते ११ एवं शकैधे तृणैधे च १२ अग्नये तपस्वते जनद्वत इति समानम् १३ अनुगतेष्टेर्वा स्थान एता आहुतीर्जुहुयान्मित्राय स्वाहा वरुणाय स्वाहाग्नये स्वाहाग्नये व्रतपतये स्वाहाग्नये तपस्वते जनद्वते पा-

वकवते स्वाहाग्नये शुचये स्वाहाग्नये ज्योतिष्मते स्वाहा सूर्याय स्वाहेति व्याहृतीभिर्विहृताभिः समस्ताभिश्च जुहुयात् १४

इति नवमी कण्डिका

यदि प्राग्घोमकालादाहवनीयोऽनुगच्छेद्गार्हपत्यादन्यं प्रणयेत् १ यदि होमकाले प्राण उदानमप्यगादिति गार्हपत्ये जुहुयात् २ यदि गार्हपत्य उदानः प्राणमप्यगादित्याहवनीये ३ यदि दक्षिणाग्निर्व्यान उदानमप्यगादिति गार्हपत्ये ४ यदि सर्वेऽनुगच्छेयुरग्निं मथित्वा यां दिशं वातो वायात्तां दिशमुद्धृत्य वायवे स्वाहेति जुहुयात् ५ यद्यु वै निवाते मथित्वा विहारं साधयित्वापरेणाहवनीयं यजमान उपविश्य स्वयमग्निहोत्रं पिबेत् । अग्निहोत्रप्रत्याम्नायो भवतीति विज्ञायते ६ यदि प्रागस्तमयाज्जुहुयात्पुनरेवास्तमिते हुत्वा भवतं नः समनसावित्युपतिष्ठेत ७ यदि महारात्रे पुनरेवौषसं हुत्वैतयैवोपतिष्ठेत ८ यदि हविः प्रोक्षन्नग्निमभिप्रोक्षेद्धतेन यज्ञेन यजेत । पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति पुनरग्निमुपसमिन्ध्यात् ९ एवं सर्वेष्वग्न्युपघातेषु १० अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः ११ यथा कथा चाभ्युद्धरेयुः प्रायश्चित्तमित्याश्मरथ्यः । यद्यसंन्युप्ते स्पाशयेयुरनुगमयेयुरेनं न प्रायश्चित्तमित्यालेखनः १२ अग्नये ज्योतिष्मतेऽष्टाकपालमित्युक्तम् १३ अथाहुतिं जुहुयात्त्रयस्त्रिंशत्तन्तव इति १४ यस्य सांनाय्येऽधिश्रिते हविषि वा निरुप्ते पुरुषः श्वानो रथो वान्तराग्नी वीयादुर्वराहैडको वा तदत्रापोऽन्वतिषिच्य गामन्वत्यावर्तयेद्दूर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहसः स्वाहेति १५ देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरागच्छतु पितॄन्पञ्चजनान्दिश आप ओषधीर्वनस्पतीञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरागच्छत्विति षडाहुतीर्हुत्वेदं विष्णुर्विचक्रम इति वर्त्म समूहेत् । पदं वा लोभयेत् १६ यस्यानो वा रथो वान्तराग्नी यात्याहवनीयमुद्वाप्य गार्हपत्यादुद्धरेद्यदग्ने पूर्वं प्रभृतं पदं हि ते सूर्यस्यरश्मीनन्वाततान । तत्र रयिष्ठामनुसंभरैतं सं नः सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असीत्येताभ्याम् । ततः पाथिकृतीं पूर्ववन्निर्वपेत् १७ एतामेव निर्वपेत् १८

इति दशमी कण्डिका

स्तोत्रे शस्त्रे वा मूढे १ यस्य वाग्निभिरग्नीन्व्यवेयुर्यो वा व्यवेयात् २ यस्य वाग्निभिरग्नीन्विहरेयुः ३ एतां जने प्रमीतस्य ४ तस्याभिवान्यवत्सायै पयसाग्निहोत्रं जुहुयादा शरीरस्याग्निभिः संस्पर्शनात् ५ सर्वं तूष्णीं क्रियेत ६ पाचीनावीती दोहयति ७ ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रान्कृत्वा दक्षिणार्धे गार्हपत्यस्य शीते भस्मन्यधिश्रित्य दक्षिणोद्वास्य सकृदेव सर्वं तूष्णीमुन्नीयाधस्तात्समिधं धारयन्दक्षिणेन विहारमुद्रवति ८ उपरि हि देवेभ्यो धारयतीति विज्ञायते ९ स उपसाद्य समिधमाधाय सकृदेव सर्वं तूष्णीं जुहुयात् १० अपि वा सोमं पितृमन्तं पूर्वस्यामाहुत्यामुपलक्षयेत् । अग्निं कव्यवाहनमुत्तरस्याम् ११ प्राश्नोत्सेचनपरिषेचनानि न विद्यन्ते १२ ब्राह्मणेभ्यो यज्ञायुधानि ददाति १३ ददात्येवायस्मयानि १४ अपो मृन्मयान्यभ्यवहरन्त्यमैव १५ पुत्रस्य दृषत्स्यात् १६ यद्यप्रमीतं प्रमीतमुपश्रृणुयुरग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेत् १७ यदि पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत दक्षिणतः शीते भस्मन्युत्तरामाहुतिं निनयेत् १८ भस्मोत्करं वा गमयेत् १९ यैषा पितृमेधे प्रथमाहुतिस्तामेवात्र कुर्यादित्येके २० यदि विसंस्थितायामिष्ट्यां यजमानो म्रियेत सर्वतः समवदाय सर्वा देवता अनुद्रुत्य स्वाहाकारेण जुहुयात् २१ यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत यां दिशमभिप्रस्थितः स्यात्तामस्याग्निभिः कक्षं दहेयुः २२ अपि वा त्रीणि षष्टिशतानि पलाशवृन्तानाम् तैः कृष्णाजिने पुरुषाकृतिं कुर्वन्ति । पलाशवल्कैः कुशैर्वा संधिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते । दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशतापञ्चाशतैकैकं बाहुम् । ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते । सप्तत्यासप्तत्यैकैकं पादम् । ताभ्यामेव पञ्चभिः पञ्चभिरङ्गुलीरुपकल्ल्पयते । अष्टाभिः शिश्नं द्वादशभिर्वृषणम् । तैः कृष्णाजिने पुरुषाकृतिं कृत्वा स्नापयित्वालङ्कृत्यान्तर्वेदि कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छाद्य बान्धवाः पर्युपविशन्ति । अभिमृशन्त्ययमस्यासौ यस्य त इमे अग्नय इति प्रेतेऽमात्याः । इत्येतदादि कर्म प्रतिपद्यते । कृत्वा तामस्याग्निभिर्दहेयुरिति वाजसनेयकम् २३ यदि हवींष्यासन्नानि कृष्णशकुनिरुपर्युपर्यतिपतेत्पक्षाभ्यामाधून्वान इवाभिनिषीदेद्वेदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात् २४ यद्युच्चैः पतेन्न तदाद्रियेत २५ यद्युच्छ्रियमाणो यूपश्च-

षालं वा पद्येत ब्रह्म प्रतिष्ठा मनस इत्याहुतिं जुहुयात् २६

इत्येकादशी कण्डिका

यदि हविःशेषाननुद्वासिताननूयाजैरभ्याश्रावयेद्यद्वो देवा अतिपादयानीत्याहुतिं जुहुयात् १ यदि प्रणीता स्कन्देयुरुपदस्येयुर्वापो हि ष्ठा मयोभुव इति तिसृभिः पुनर्गृहीत्वा ततं म आप इत्याहुतिं जुहुयात् २ यद्यग्न्याधेये सूर्यो ऽनाविः स्यादुद्वयं तमसस्पर्युदु त्यं चित्रमित्याहुतीर्जुहुयात् ३ यद्येनमुपधावेयुर्गोमायवोऽवादिषु रेकसृकोऽवादी दभिमृताः स्मः परिधिं नः कुर्विति पालाशमिध्ममुपसमाधायेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि प्रजापत इति षडाहुतीर्हुत्वेमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वतेनेति दक्षिणतोऽश्मानं परिधिं दधाति ४ नैय्यग्रोध इध्मः क्षत्रियस्य राष्ट्रमर्यादायाम् ५ आश्वत्थो वैश्यस्य क्षत्रमर्यादायाम् ६ इष्टेभ्यः स्वाहेत्यष्टावाहुतीर्दार्शपूर्णमासिकैः सर्वप्रायश्चित्तैर्विकल्पेरन् ७ यदि दौःष्वप्न्यमन्यद्वा भयं पश्येद्यत इन्द्र भयामह इत्याहुती जुहुयात् । जपेदित्येके ८ सर्वेषां वै घर्मो रुचां रोचते । तस्मात्प्रवर्ग्येण प्रचय प्रवृज्यमानस्य वोपश्रुत्याभिर्गीर्भिरिति जुहुयात् । जपेदित्येके ९ यदि होमायोपसमिद्धेष्वहुतेष्वग्निषु यजमानोऽश्नीयाद्यत्ते वयं यथा ह तदित्याहुती जुहुयात् । समिधौ वादध्यात् । जपेदित्येके १० यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्यामभिनिम्रुक्ताभ्युदितपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानो वा जुहुयात् । जपेदित्येके ११ अनाज्ञातमिति तिस्रोऽनाज्ञाते जुहुयात् । जपेदित्येके १२

इति द्वादशी कण्डिका इति तृतीयः पटलः

यस्याज्यमनुत्पूतं स्कन्देच्छिन्दत्प्राणि दद्यात् १ यद्युत्पूतं चित्रं देयम् २ वरो देय इत्येकेषाम् ३ यदि स्रुग्गतं यदस्य गृहे पुष्कलं स्यात्तद्दद्यात् । सं त्वा सिञ्चामीति तत्संसिञ्चेदभि वा मन्त्रयेत ४ देवां जनमगन्यज्ञ इत्येकेषामनन्तरमाज्याद्वदति ५ यज्ञस्य त्वा प्रमयाभिमया प्रतिमयोन्मया परिगृह्णामीति तत्परिगृह्य भूपतये स्वाहेति प्राञ्चं प्रादेशं मिमीते । भुवनपतये

स्वाहेति दक्षिणम् । भूतानां पतये स्वाहेति प्रत्यञ्चम् । भूत्यै स्वाहेत्युदञ्चम् । भूर्भुवः सुवरित्यूर्ध्वम् ६ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनुमन्त्रयेतेति सर्वहविषामनवयवेन श्रूयते ७ यदि कपालं भिद्येत गायत्र्या त्वा शताक्षरया संदधामीति तत्संधायोपरि गार्हपत्ये धार्यमाणमभिजुहुयान्मनो ज्योतिर्जुषतामिति ८ अथैनदपोऽभ्यवहरेदभिन्नो घर्मो जीरदानुरिति ९ अथान्यत्संस्कृत्य कपालेष्वपिसृजेत्त्रयस्त्रंशत्तन्तव इति यदि प्रागुपधानाद्भिद्येत १० अथ यद्युपहितानामेतेनैव मन्त्रेणान्यदुपदध्यात् ११ यस्य वा मन्त्रस्य स्थाने भिद्येत १२ यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालम् १३ भार्गवो होता भवति । एकहायनो दक्षिणा १४ मही द्यौः पृथिवी च न इति द्यावापृथिव्यर्चा स्रुवाहुतिमत्र वाजसनेयिनः समामनन्ति १५

इति त्रयोदशी कण्डिका

यद्येककपालः स्कन्देत्परि वावर्तेत प्रजापतेर्वर्तनिमनुवर्तस्वानु वीरैरनुराध्याम गोभिः । अन्वश्वैरनु सर्वैरु पुष्टैरनु प्रजयान्विन्द्रियेण देवा नो यज्ञमृजुधा नयन्त्विति यथास्थानं कल्पयति १ तं यजमानोऽभिमन्त्रयते प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रति प्रजायां प्रतितिष्ठामि भव्ये । विश्वमन्याभिवावृधे तदन्यस्यामधिश्रितम् । दिवे च विश्वकर्मणे पृथिव्यै चाकरं नम इति । अथास्कान्द्यौः पृथिवीमित्याहुती जुहुयात् २ वैश्वानरं द्वादशकपालं निर्वपेद्यदि पत्नीः संयाजयन्कपालमभिजुहुयात् ३ एतामेव निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम् ४ एतामेव निर्वपेद्यदकृत्वाग्रायणं नवस्याश्नीयात् ५ आनीतो वा एष देवानां य आहिताग्निरदन्त्यस्य भागं प्रतिक्लृप्तमद्यादार्तिमार्छेत् ६ मारुतं त्रयोदशकपालं निर्वपेद्यस्य यमौ जायेयातां गावौ वा पुरुषौ वा ७ निर्वीर्यतां वै पुरुष आशास्ते । अपशुतां गौः ८ आग्नावैष्णवमेकादशकपालं निर्वपेद्यमन्यस्याग्निषु याजयेयुर्यस्य वाग्निष्वन्यो जयेत १० रौद्रं वास्तुमयं चरुं निर्वपेद्यस्य रुद्रः पशूञ्छमायेत ११ एतयैवावृता निषादस्थपतिं याजयेत् १२ सा हि तस्येष्टिः १३ कृष्णाजिनं दक्षिणा कूटं वा कर्णो वा गर्दभो हरिणो वा हरिणपृणाका वा श्यामाकपात्रो वा शफको वेति विज्ञायते १४

इति चतुर्दशी कण्डिका

यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत १ भूमावकपालं पुरोडाशं श्रपयेत् २ अप्स्ववदानैश्चरेयुः ३ रक्षोदेवत्यः स्यान्निर्ऋतिदेवत्यो वा ४ निर्ऋतिं पाकयज्ञेन यजेत ५ यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति । तत्संस्थाप्यान्यद्धविस्तद्देवतं निर्वपेत् ६ अथैकेषाम् । यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति । यदुच्छिष्टं स्यात्तेन प्रचरेद्द्वेष्याय तां दक्षिणां हविरुच्छिष्टं च दद्यात् । तमेव निर्ऋत्या ग्राहयतीति विज्ञायते ७ सर्वदाहे प्रायश्चित्तम् ८ यदि वावदानेभ्यो न प्रभवेत् ९ यद्यप्रत्तदैवतं हविर्व्यापद्येतान्यद्धविस्तद्दैवतं निर्वपेत् १० तत्र स्रुगादानप्रभृतयो मन्त्रा आवर्तेरन् ११ यावदन्ते वा व्यापद्येत १२ यदि प्रत्तदैवतमाज्येन शेषं संस्थापयेत् १३ यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाज्येनैता देवताः प्रतिसंख्याय यजेत १४ अथान्यामिष्टिमनुल्बणां तन्वीत । यज्ञो हि यज्ञस्य प्रायश्चित्तिः १५ अपो व्यापन्नं हविरभ्यवहरतीति विज्ञायते १६ यदार्याणामभोजनीयं स्यान्न तेन यजेत १७ यस्य पुरोडाशो दुःशृतस्तद्धविर्यमदैवत्यं यममेव तद्गच्छतीति विज्ञायते । संस्थाप्य तदन्वाहार्यपचने चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् १८ तेषां भार्गवः प्राशितृणामेकः स्यात् १९ योऽदक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामोऽनायुः । उर्वरां दद्यात् २० यद्यादिष्टां दक्षिणामन्तरियादुर्वरा प्रतिष्ठिता देया । सा प्रायश्चित्तिः २१ यद्यभागां देवतामावाहयेदाज्येनैनां यथोढां यजेत । पुरस्ताद्वा स्विष्टकृतः २२ यदि भागिनीं नावाहयेद्यत्र स्मरेत्तदुपोत्थाय मनसावाह्य यद्वो देवा अतिपादयानीत्याहुतिं जुहुयात् २३

इति पञ्चदशी कण्डिका

यदि पुरा प्रयाजेभ्यो बहिःपरिध्याहुतिः स्कन्देदाग्नीध्रं ब्रूयादेतां संकृष्य जुहुधीति । तां सोऽञ्जलिना जुहोति । तस्मै पूर्णपात्रो देयः १ यत्किंच यज्ञे मृन्मयं भिद्येत तदपोऽभ्यवहरेद्भूमिर्भूमिमगादिति २ आहवनीये दारुमयाणि ३ यद्यृक्तो यज्ञं भ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयात् । यदि यजुष्टो भुव इति दक्षिणाग्नौ । यदि सामतः सुवरित्याहवनीये ४ यदि

सर्वतः सर्वा जुहुयात् ५ तदिदं सर्वप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः । यत्रानाम्नातं तत्र क्रियेतेत्यालेखनः । सर्वत्र समभ्युच्चयः स्यादित्यपरम् ६ यद्येनं विहारे बहिर्वा भयं विन्देत्प्रजापतिर्विश्वकर्मा तस्य मनो देवं यज्ञेन राध्यासम् । अर्थेगा अस्य जहितोऽवसानपतेऽवसानं मे विन्देत्याहुतिं जुहुयात् ७ यस्य हविर्निरुप्तं स्कन्देच्छिन्दत्प्राणि दद्यात् । यद्युत्पूतं चित्रं देयम् । वरो देय इत्येकेषाम् ८ यस्य देवते अवदाने हवींषि याज्यानुवाक्ये वा विपरिहरेयुर्यस्य वा देवतायै गृहीतमहुतं स्कन्देद्देवतान्तरये वा यदस्य गृहे पुष्कलं स्यात्तद्दद्यात् ९ त्वं नो अग्ने स त्वं नो अग्न इति सर्वत्रान्तरये विपर्यासे चैते आहुती जुहोतीत्येके १० यस्य पुरोडाश उद्वा पतेत्सं वा विजेत तमुद्वास्य बर्हिषदं कृत्वा किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि । अघोरो यज्ञियो भूत्वासीद सदनं स्वमासीद सदनं स्वम् । मा हिंसीर्देव प्रेषित आज्येन तेजसाज्यस्व मा नः किंचन रीरिषः । योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीत्येताभ्यामभिमन्त्रयेताभि च घारयेत् ११ भूत्वा प्रभवति यजमानो यस्यैतां यज्ञे प्रायश्चित्तिं कुर्वन्ति १२

इति षोडशी कण्डिका इति चतुर्थः पटलः

स्कन्ना द्यौः स्कन्ना पृथिवी स्कन्नं विश्वमिदं जगत् । स्कन्नादो विश्वा भूतानि प्र स्कन्नाज्जायतां हविः । इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायस्पोषो निषीदतु । अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः स्वपत्या सुवीरा । इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः । पयस्वतीरोषधय इत्येताभिश्चतसृभिः पृषदाज्यं स्कन्नमभिमन्त्र्यापोऽभ्यवहृत्य निर्णिज्य स्रुचं शतमानं हिरण्यं स्रुच्यवधायेदं विष्णुर्विचक्रम इत्यन्यत्पृषदाज्यं गृहीत्वाश्वेनावघ्राप्यायतने सादयेत् १ अथैकेषाम् । पृषदाज्ये स्कन्ने पृषदाज्युए पृषदाज्यमभिगृह्य मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात् २ एवं सोमे स्कन्ने सोमे सोममभिगृह्य जुहुयात् ३ यदपामृक्षच्छकुनिर्मुखेन निर्ऋते तव । अग्निष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदन इति कृष्णशकुन्यवमृष्टमभिमन्त्रयते । अभ्यवहरणादि पूर्ववत् । निर्लिख्यतेऽत्र पात्रम् ४ यदवालिक्षच्छ्वपान्मुखेन निर्ऋते तव । अग्निष्टत्सव शुन्धतु हव्यवाड् घृतसूदन इति श्वापदावमृष्टमभिमन्त्रयते । अभ्यवहरणादि पूर्ववत् । नात्र

पात्रं प्रयुज्यते । अन्यस्मिन्गृह्णाति ५ यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्याहुतिं जुहुयात् । यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुष इति जुहुयादभि वा मन्त्रयेत ६ यद्यु वै निषीदेदेतयैव यस्माद्भीषा न्यषद इति द्वितीयाम् ७ निषण्णे तं मैत्रावरुणदण्डेनोत्थापयेत् ८

इति सप्तदशी कण्डिका

उदुस्र तिष्ठ प्रतितिष्ठ मा रिषो मेमं यज्ञं यजमानं च रीरिषः । सुवर्गे लोके यजमानं हि धेहि शं न एधि द्विपदे शं चतुष्पद इति १ उच्छागेति छागम् । उन्मेषेति मेषम् । उद्वश इति वशाम् २ यस्माद्भीषावेपिष्ठा इति द्वितीयां वेपमाने ३ यस्माद्भीषा पलायिष्ठा इति द्वितीयां पलायिते ४ अनागच्छत्यन्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत ५ यस्माद्भीषा समज्ञास्था इति द्वितीयामकामसंज्ञपने ६ य इदमकस्तस्मै नमस्तस्मै स्वाहेति सर्वत्र तृतीयाम् ७ न वा उवेतन्म्रियसे । आशानां त्वा विश्वा आशाः । आपो हि ष्ठा मयोभुव इत्येताभिश्चतसृभिरपोऽभ्यवहृत्यान्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत ८ यस्माद्भीषा निमेहसीति द्वितीयां मूत्रं कुर्वति । यस्माद्भीषा शकृत्करोषीति द्वितीयां शकृत्कुर्वति ९ ऊर्ध्व ऊ षु ण ऊतय इत्युच्छ्रयन्तमभिमन्त्रयते १० यद्युपपाय्यमानो न पिबेन्न वा उवेतन्म्रियस इत्युपपाययेत् ११ गर्भं स्रवन्तीमगदामकमाग्निर्होता पृथिव्यन्तरिक्षं द्यौर्यतश्च्युतदग्नावेव तन्न तत्प्राप्नोति निर्ऋतिं पराचैरिति पशूखां स्रवन्तीमभिमन्त्रयते १२ यर्हि पशुमाप्रीतमुदञ्चं नयन्तीत्युक्तम् १३ ये पशुं विमथ्नीरन्यस्तान्कामयेतार्तिमार्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयात् । आहवनीये शामित्रे वा निरूढपशुबन्धे १४ यदि वपा हविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वग्निया यूयं दधायेन्द्रियं पय इत्यादाय यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश । स नः पाह्यरिष्टचै स्वाहेत्याहुतिं जुहुयात् १५ यद्यष्टापदीत्यनुबुध्येत धाता रातिः सूर्यो देवो दिविषद्भ्य इत्याहुती हुत्वाष्टाप्रूड्ढिरण्यमुष्णीषेणावेष्ट्य १६

इत्यष्टादशी कण्डिका

कोशेऽवधाय द्वितीयेऽवधाय तृतीयेऽवदधाति १ विबिलानिव कोशान्कृ-
त्वाथैनामध्वर्युरभिमन्त्रयते यस्यास्ते हरितो गर्भ इति २ आ वर्तन वर्तयेति
प्रदक्षिणं गर्भमावृत्य वि ते भिनद्मि तकरीमित्युल्बमाछ्यति ३ बहिस्ते
अस्तु बालित्यन्तरा सक्थिनी गर्भं निरस्य शूले प्रणीक्ष्य शामित्रे निहत्य श्र-
पयति ४ उरुद्रप्सो विश्वरूप इन्दुरिति गर्भरसाय पात्रमुपोहति ५ पशुपु-
रोडाशं निरुप्य गर्भपुरोडाशं निर्वपति भक्तीद्यावापृथिव्यमेककपालम् ६
पशुपुरोडाशेन प्रचर्य गर्भपुरोडाशेन प्रचरति भक्तीद्यावापृथिव्येनेति ७ प-
शोर्दैवतान्यवद्यन्गर्भस्य पुरस्तान्नाभ्या अन्यदवदाय दैवतेष्ववदधाति । उ-
परिष्टादन्यत्सौविष्टकृतेषु ८ त्रैधं गर्भरसं व्यानयति दैवतसौविष्टकृतैडेषु च
९ एकपदी द्विपदीति पुरस्तात्स्विष्टकृतो जुहोति १० अष्टाप्रूड्हिरण्यं दक्षिणा
११ गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजति प्र तत्ते अद्य
शिपिविष्ट नामेति । उत्तरया वा १२ मरुतो यस्य हि क्षय इति गर्भं ग-
र्भपुरोडाशं चोत्तरेण गार्हपत्यस्य शामित्रस्य वा शीते भस्मन्युपोप्य मही द्यौः
पृथिवी च न इति शीतेन भस्मनाभिसमूह्यैतं युवानमिति पञ्चभिरुपतिष्ठते
१३ तदिदं गर्भिणिप्रायश्चित्तं सर्वत्र क्रियेतेत्याश्मरथ्यः । यत्रानाम्नातं तत्र
क्रियेतेत्यालेखनः १४ यद्यनपवृक्तार्थो यूपो विरोहेत्तस्मिंस्त्वाष्ट्रं साण्डं
लोमशं पिङ्गलं बहुरूपं सवनीयस्योपालम्भ्यं कुर्यात् १५ त्वाष्ट्रं चरुमत्र
वाजसनेयिनः समामनन्ति १६ त्वाष्ट्रीरेवात्र स्रुवाहुतीर्जुहोतीत्येके १७

इत्येकोनविंशी कण्डिका

यदि यूपः सुषिरः स्यादतीसारेण यजमानो म्रियेत । वैष्णव्या व्याहृतिभिः
प्राजापत्यया च हुत्वा तं संवृश्च्याग्नौ प्रवृज्याथान्यं साधयेत् १ यदि क्रि-
म्णः क्रिमय एनं भक्षयेयुः । पूर्ववत्प्रायश्चित्तम् २ यद्यावश्चनमास्कन्देत्प-
क्ष्येनमतिचरिष्यतीति विद्यात् । व्याहृत्यादि समानमुत्तरम् ३ यदि द-
क्षिणा पतेत्प्रत्यङ्वा सं वा शीर्येत शाखासु वा सज्येत यजमानो म्रियेत ।
वैष्णव्याः स्थाने यामी । समानमुत्तरम् ४ यद्यप्सु पतेदप्सु म्रियेत ।
वैष्णव्याः स्थाने वारुणी । समानमुत्तरम् ५ यदि प्रासहा हरेयुः सर्वस्वं
जीयेत । वैष्णव्याः स्थान ऐन्द्री । समानमुत्तरम् ६ यदि मूल उपशु-
ष्कः स्यान्न पितृभ्यो यथापुरं करिष्यतीति विद्यात् । यदि मध्ये क्षुधा म-

रिष्यति । यद्यग्रे न स्वर्गं लोकं गमिष्यतीति । यद्यग्निष्ठा विच्छिद्येत यजमानो म्रियेत । यदि पूर्वा पत्नी । एतद्वा विपरीतम् । यदि दक्षिणा माहिषेयः पुत्रः । यद्युत्तरान्वग्ज्येष्ठः । यदि दक्षिणपूर्वा ब्रह्मा । यदि दक्षिणापरा होता । यद्युत्तरापराध्वर्युः । यद्युत्तरपूर्वाग्नीध्रः ७ शुष्कादिषु सर्वेषु याम्यादि समानमुत्तरम् ८ यदि लोहिन्यो लेखाः प्रसव्यं यूपं परिहरेयुर्न साहस्रं क्रतुमाहरिष्यतीति विद्यात् । श्वेताश्चेत्प्रदक्षिणं क्षिप्रं साहस्रं क्रतुमाहरिष्यतीति ९ यद्याहुतौ हुतायां कृष्णो धूमो दक्षिणां दिशमभिनिहन्याद्वातो वा प्रसव्यं धूममावेष्टयेद्यजमानो म्रियेत । सर्वप्रायश्चित्तं जुहुयाज्जुहुयात् १०

इति विंशी कण्डिका इति पञ्चमः पटलः

इति नवमः प्रश्नः

सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वानूचानानूर्ध्ववाचोऽनङ्गहीनान् १ तेभ्यः सोमं प्राह २ तं पृच्छति क ऋत्विजः के याजयन्ति कच्चिन्नाहीनः कच्चिन्न न्यस्तमार्त्विज्यं कच्चित्कल्याण्यो दक्षिणा इति छन्दोगब्राह्मणं भवति ३ अथ जपति महन्मेऽवोचो भर्गो मेऽवोचो यशो मे वोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचस्तन्मावतु तन्माविशतु तेन भुक्षिषीयेति ४ यद्वा नामासि स्रुतिः सोमसरणी सोमं गमेयमिति पन्थानमातिष्ठते ५ देवो देवमेतु सोमः सोममेत्वृतस्य एथा विहाय दौष्कृत्यमित्यभिप्रव्रजति ६ पितरो भूरिति दक्षिणावृत्तः पितॄनुपतिष्ठते ७ तान्वृणीते चतुरः सर्वान्वैकैकशः ८ अध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् । ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणः । होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन् । उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् ९ सदस्यं सप्तदशं कौषीतकिनः समामनन्ति १० स कर्मणामुपद्रष्टा भवति ११ यदि चतुर आद्यान् १२ अथ वरणाः १३ अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताकाशो मे सदस्य आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यव इत्युपांशु देवतादेशनम् । असौ मानुष इत्युच्चैः १४

इति प्रथमा कण्डिका

स्वर्गकामो ज्योतिष्टोमेन यजेत । एककामः सर्वकामो वाऽयुगपत्कामये- ताहारपृथक्त्वे वा १ वसन्ते ज्योतिष्टोमेन यजेत २ अग्निष्टोमः प्रथमयज्ञः ३ अतिरात्रमेके पूर्वं समामनन्ति ४ वसन्तेवसन्ते ज्योतिष्टोमेन यजेत । तस्य तिस्रो दक्षिणा इति छन्दोगब्राह्मणं भवति ५ रथंतरसाम्ना बृहत्साम्नो- भयसाम्ना वा प्रथमं यजेत ६ न रथंतरसामानमकृत्वा बृहत्सामानमाहरे- दित्येके ७ यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां वैव पौ- र्णमास्यां वा यजेत ८ देव वरुण देवयजनं मे देहीति यजमानो राजानं दे- वयजनं याचेत् ९ स यदि ददाति देवयजनवान्भूया इत्येनमाह । यदि न ददाति यदहं देवयजनम् वेद तस्मिंस्त्वा देवयजन आ क्षिणोमीति १० अ- थैनमनुव्याहरन्ति । मन उपावधीर्मनस्त्वा हास्यतीति ब्रह्मा । वाचमुपा- वधीर्वाक्त्वा हास्यतीति होता । प्राणमुपावधीः प्राणस्त्वा हास्यतीत्यध्वर्युः । चक्षुरुपावधीश्चक्षुस्त्वा हास्यतीत्युद्गाता । आत्मानमुपावधीरात्मा त्वा हा- स्यतीति सदस्यः । प्रजातिमुपावधीः प्रजा त्वा हास्यतीति यजमानः । अङ्गान्युपावधीरङ्गानि त्वा हास्यन्तीति होत्रकाः । भूतान्युपावधीर्भूतानि त्वा हास्यन्तीति सर्व ऋत्विजः ११

इति द्वितीया कण्डिका

राजा देवयजनं याचति । अग्निर्होता स मे होता होतर्देवयजनं मे देहीति होतारम् । आदित्योऽध्वर्युः स मेऽध्वर्युरध्वर्यो देवयजनं मे देहीत्यध्वर्युम् । चन्द्रमा ब्रह्मा स मे ब्रह्मा ब्रह्मन्देवयजनं मे देहीति ब्रह्माणम् । पर्जन्य उ- द्गाता स म उद्गातोद्गातर्देवयजनं मे देहीत्युद्गातारम् । आकाशः सदस्यः स मे सदस्यः सदस्य देवयजनं मे देहीति सदस्यम् । आपो होत्राशंसिनस्ते मे होत्राशंसिनो होत्राशंसिनो देवयजनं मे दत्तेति होत्रकान् । रश्मयश्चमसा- ध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यून् १ अपि वा न देवयजनं याचेत् । देवता एवोपतिष्ठेत सक्षेदं पश्य विध- र्तरिदं पश्य नाकेदं पश्य । रमतिः पनिष्ठर्तं वर्षिष्ठममृता यान्याहुः सूर्यो वरिष्ठो अक्षभिर्विभात्यनु द्यावापृथिवी देवपुत्रे इति २ एदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यवस्यति ३ प्राग्वंशस्य मध्यमं स्थूणाराजमार-

भ्य जपतीति वाजसनेयकम् ४ ततः संभारयजूंषि जुहोति ५ अग्निर्यजुर्भिः सविता स्तोमैरित्येषोऽनुवाक आम्नातः ६ अत्र राजानमाहृत्य पयसौदनेन परिवेविषन्त्या क्रयात् ७ स्वे दक्षे दक्षपितेह सीद देवानां सुम्नो महते रणाय । स्वासस्थस्तनुवा संविशस्व पितेवैधि सूनव आ सुशेवः । शिवो मा शिवमाविश सत्यं म आत्मा श्रद्धा मेऽक्षितिस्तपो मे प्रतिष्ठा । सवितृप्रसूता मा दिशो दीक्षयन्तु सत्यमस्मीति पुरस्ताद्दीक्षणीयाया आहवनीयं यजमान उपतिष्ठते । सप्तहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वा ८

इति तृतीया कण्डिका

दीक्षणीयायास्तन्त्रं प्रक्रमयति १ आग्नावैष्णवमेकादशकपालं निर्वपति । आग्नावैष्णवं वा घृते चरुम् २ पुरोडाशो ब्रह्मवर्चसकामस्य । घृते चरुः प्रजाकामस्य पशुकामस्य वा ३ आदित्यं घृते चरुं द्वितीयं प्रजाकामपशुकामस्यैके समामनन्ति ४ पञ्चदश सप्तदश वा सामिधेन्यः ५ प्राग्वंशमेके पूर्वं समामनन्ति । दीक्षणीयामेके ६ पत्नीसंयाजान्ता दीक्षणीया संतिष्ठते ७ धारयति ध्रौवमाज्यम् ८ यत्प्रागग्नीषोमीयात्तेनोपांशु चरति ९ अथैकेषाम् । यावत्यस्य वाग्भवति तावतीं दीक्षणीयायामन्वाह । ततो नीचैस्तरां प्रायणीयायाम् । नीचैस्तरामातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये १० मन्द्रेण दीक्षणीयायाम् । मन्द्रतरेण प्रायणीयायाम् । मन्द्रतरेणातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये । उपांशु वा दीक्षणीयायाम् । उपांशुतरं प्रायणीयायाम् । उपांशुतरमातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये ११ दर्शपूर्णमासप्रकृतीनां सोमेऽग्न्यन्वाधानं व्रतोपायनमारण्याशनं जागरणमन्वाहार्यस्य च दानं पत्न्याः संनहनं विमोचनमिति न विद्यन्ते १२ अग्न्यन्वाधानं तु दीक्षणीयायां क्रियेत पत्न्याश्च संनहनम् १३ दीक्षासु यूपं कारयति १४ क्रीते राजन्युपसत्सु वा १५

इति चतुर्थी कण्डिका इति प्रथमः पटलः

प्राचीनवंशं करोति पुरस्तादुन्नतं पश्चान्निनतं सर्वतः परिश्रितम् १ अवान्तरदिक्षु स्रक्तयः २ स्रक्तिष्वारोकान्करोति ३ प्रतिदिशं द्वाराणि ४ पुर-

स्ताद्द्वारं स्वर्गकामः । दक्षिणतो यः कामयेत पितृलोक ऋध्नुयामिति । पश्चान्मनुष्यलोककामः । उत्तरतो यः कामयेत देवलोक ऋध्नुयामिति । उत्तरतः पुरस्ताद्यः कामयेतोभयोर्लोकयोर्ऋध्नुयामिति । सर्वतो यः कामयेत सर्वासु दिक्ष्वृध्नुयामिति ५ उत्तरेण बहिः प्राग्वंशं म्परिश्रिते यजमानः केशश्मश्रु वापयते ६ उपपक्षावग्रेऽथ श्मश्रूण्यथ केशान् । अपि वा श्मश्रूण्युपपक्षावथ केशान् ७ आप उन्दन्त्विति दक्षिणं गोदानमुनक्ति । ओषधे त्रायस्वैनमिति प्रागग्रं दर्भमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिनाभिनिधाय देवश्रूरिति प्रवपति ८ एवमुत्तरं गोदानम् ९ ओषधे त्रायस्व मा स्वधिते मा मा हिंसीः स्वस्त्युत्तराण्यशीयेति यजमानो जपति १० अभ्यन्तरं नखानि कारयते ११ सव्यस्याग्रे कनिष्ठिकातः १२ हस्त्यान्यग्रेऽथ पद्यानि १३ औदुम्बरेण दतो धावते लोहितमनभिगमयन् १४ स्थावरास्वप्सु स्नाति शङ्खिनीष्ववकिनीषु लोमशे तीर्थे १५ कुण्डे हिरण्यमवधाय तस्मिन्स्नातीति वाजसनेयकम् १६

इति पञ्चमी कण्डिका

आपो अस्मान्मातरः शुन्धन्त्विति । हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वावद्यमापः । शतं पवित्रा वितता ह्यासु ताभिर्नो देवः सविता पुनात्विति । हिरण्यवर्णाः शुचयः पावका इति चैताभ्याम् १ उदाभ्यः शुचिरापूत एमीत्युद्ग्राहमानो जपति । अपोऽश्नाति २ एवं पत्नी केशवर्जम् ३ अथास्मै क्षौममहतं महद्वासः प्रयच्छति ४ तत्प्रतिगृह्णाति दीक्षासि तपसो योनिस्तपोऽसि ब्रह्मणो योनिर्ब्रह्मासि क्षत्रस्य योनिः क्षत्रमस्यृतस्य योनिर्ऋतमसि भूरारभे श्रद्धां मनसा दीक्षां तपसा विश्वस्य भुवनस्याधिपत्नीं सर्वे कामा यजमानस्य सन्त्विति ५ सोमस्य तनूरसि तनुवं मे पाहि दीक्षासि तनूरसि तां त्वां शिवां स्योनां परिधिषीयेति तत्परिधाय सोमस्य नीविरसीति नीविमनुपरिकल्पयते ६ ऊर्जे त्वेत्यन्नमश्नाति सर्पिर्मिश्रं दधि मधु चाभ्युपसेकम् ७ यदस्य मनसः प्रतिप्रियं तदश्नाति ८ तदेवास्यामुष्मिंल्लोके भवतीति विज्ञायते । तथाशितः स्याद्यथा ततो दीक्षासु कनीयः-कनीयो व्रतमुपेयात् ९ पुरस्तात्केशवपनाद्वाससो वा परिधानाद्भोजनमेके समामनन्ति १० महीनां पयोऽसीति दर्भपुञ्जीलाभ्यां नवनीतमुद्यौति ११

वर्चोधा असीति तेन पराचीनं त्रिरभ्यङ्क्ते । मुखमग्रे १२ अनुलोममङ्गानि । स्वक्तो भवति १३

इति षष्ठी कण्डिका

वृत्रस्य कनीनिकासीति त्रैककुदेनाञ्जनेनाङ्क्ते १ यदि त्रैककुदं नाधिगच्छेद्ये-नैव केन चाञ्जनेनाञ्जीतेति वाजसनेयकम् २ सतूलया दर्भेषीकया शरेषी-कया दर्भपुञ्जीलेन वाभ्यन्तरं द्विर्दक्षिणमनिधावमानः । सकृत्सव्यम् ३ अपि वा द्विर्दक्षिणं त्रिः सव्यम् । त्रिस्त्रिर्वोभे ४ अथैनमुत्तरेण बहिः प्रा-ग्वंशाद्दर्भपुञ्जीलैः पवयति ५ द्वाभ्यां पवयति त्रिभिः पवयतीत्युक्तम् ६ एकविंशत्या त्रेधा विभक्तया सप्तभिःसप्तभिर्द्विरूर्ध्वं नाभेरुन्मार्ष्टि । सकृद-वाक् ७ अन्वञ्चं पावयतीत्येके ८ यं द्विष्यात्तं तिर्यञ्चमक्ष्णया वा पावयेत् ९ चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रम् १० अच्छिद्रेण पवित्रेणेति सर्व-त्रानुषजति ११ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुना-त्विति पाव्यमानो जपति १२ तस्य ते पवित्रपत इति च । पवमानः सु-वर्जनः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमह इति च १३ यद्देवा देवहेडनं त्वमग्ने अयासीति च पूतः १४ प्राग्वा दीक्षणीयाया जुहु-यात् । जपेदित्येके १५

इति सप्तमी कण्डिका इति द्वितीयः पटलः

आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्येन्द्राग्नी द्यावापृथिवी इत्यपरेणाहवनीयं दक्षिणातिक्रम्य त्वं दीक्षाणामधिपतिरसीत्याहवनीयमुपो-पविशति १ एष एवात ऊर्ध्वं यजमानस्य संचरो भवति २ अत्र दीक्ष-णीयामेके समामनन्ति ३ पुरस्ताद्दीक्षाहुतीभ्यः संभारयजूंष्येके ४ यद्दी-क्षणीयाया ध्रौवमाज्यं ततो दीक्षाहुतीः स्रुवेण चतस्रो जुहोति । स्रुचा प-ञ्चमीम् । आकूत्यै प्रयुजेऽग्नये स्वाहेत्येतैः प्रतिमन्त्रम् ५ द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं षष्ठीम् ६ यत्राध्वर्युरौद्ग्र-हणानि जुहोति तद्यजमानोऽध्वर्युमन्वारभ्य पञ्च जुहोति वाचा मे वाग्दीक्षतां स्वाहा । प्राणेन मे प्राणो दीक्षतां स्वाहा । चक्षुषा मे चक्षुर्दीक्षतां स्वाहा ।

श्रोत्रेण मे श्रोत्रं दीक्षतां स्वाहा । मनसा मे मनो दीक्षतां स्वाहेति ७ अ-ध्वर्युं वा जुह्वतमनुमन्त्रयते ८ वातं प्राणं मनसान्वारभामहे प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वंहसो ज्योग्जीवा जरामशीम-हीति पूर्णाहुतिं हूयमानामनुमन्त्रयते ९ अत्र संभारयजूंष्येके १० कृष्णा-जिनेन यजमानं दीक्षयति ११ द्वाभ्यां समस्य दीक्षेतान्तर्मांसाभ्यां बहिर्लो-माभ्याम् १२ यद्येकं स्याद्दक्षिणं पूर्वपादं प्रतिषीव्येत् । अन्तान्वा १३ द्वे विषूची प्रतिमुञ्चेत पादं वा प्रतिषीव्येदित्येके १४ अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति १५ ऋक्सामयोः शिल्पे स्थ इति शुक्लकृ-ष्णे राजी आलभते । संमृशतीत्येके १६

इत्यष्टमी कण्डिका

इन्द्र शाक्वर गायत्रीं प्रपद्ये तां ते युनज्मीन्द्र शाक्वर त्रिष्टुभं प्रपद्ये तां ते युन-ज्मीन्द्र शाक्वर जगतीं प्रपद्ये तां ते युनज्मीन्द्र शाक्वरानुष्टुभं प्रपद्ये तां ते यु-नज्मीन्द्र शाक्वर पङ्क्तिं प्रपद्ये तां ते युनज्मीत्येतैः प्रतिमन्त्रं प्रतिदिशं कृष्णा-जिनमभिमृशति । मध्य उत्तमेन १ अथ प्राङ्मुखो जान्वक्नोऽभिसर्पति २ इमां धियं शिक्षमाणस्येति कृष्णाजिनं भसत्त आरोहति ३ सुत्रामाणमित्या रोहञ्जपति । इमां सु नावमारुहमित्यारूढः । आहं दीक्षामरुहमृतस्य प-त्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तं सत्येऽधायि सत्यमृतेऽधाय्यृतं च मे सत्यं चाभूतां ज्योतिरभूवं सुवरगमं सुवर्गं लोकं नाकस्य पृष्ठं ब्रध्नस्य विष्टपमग-ममिति च ४ अत्र पत्नी शिरसि कुम्बकुरीरमध्यूहते ५ कृष्णं जीवोर्णाना-मिति वाजसनेयकम् ६ जालं कुम्बकुरीरमित्याचक्षते ७ विष्णोः शर्मा-सीत्यहतेन वाससा दक्षिणमंसं यजमानः प्रोर्णुते । नक्षत्राणां मातीकाशा-त्पाहीति शिरः ८ उष्णीषेण प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकम् ९ न पुरा सोमस्य क्रयादपोर्णवीतेत्युक्तम् १० प्राचीनमात्रावाससा पत्नीं दीक्ष-यति ११ ऊर्ध्ववास्यं ब्रुवते १२ शरमयी मौञ्जी वा मेखला त्रिवृत्पृथव्य-न्यतरतःपाशा । तया यजमानं दीक्षयति । योक्त्रेण पत्नीम् १३ ऊर्गसी-ति नाभिं प्रतिपरिव्ययति द्वेष्यं मनसा ध्यायन् १४ उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्थापयति १५ अत्र दर्श-पूर्णमासवत्पत्नीं संनह्यति । सं त्वा नह्यामीति विकारः १६ इन्द्रस्य यो-

निरसि मा मा हिंसीरिति कृष्णविषाणां यजमानाय प्रयच्छति १७ आब-
ध्नातीत्येके १८ त्रिवलिः पञ्चवर्लिवा दक्षिणावृद्भवति । सव्यावृदित्येके
१९

इति नवमी कण्डिका

कृष्यै त्वा सुसस्याया इति तया वेदेर्लोष्टमुद्धन्ति १ सुपिप्पलाभ्यस्त्वौष-
धीभ्य इत्यर्थे प्राप्ते शिरसि कण्डूयते २ विषाणे विष्यैतं ग्रन्थिं यदस्य गु-
ल्फितं हृदि मनो यदस्य गुल्फितमित्यङ्गानि ३ ऊर्ध्वसदसि वानस्पत्यः
सुद्युम्नो द्युम्नं यजमानाय धेहीत्यौदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति ।
यो वा यज्ञियो बृक्षः फलग्रहिः ४ आस्यदघ्नश्चुबुकदघ्नो वा ५ सूपस्था
देवो वनस्पतिरिति तं यजमानः प्रतिगृह्योरुव्यचा असि जनधाः स्वभक्षो मा
पाहीति चमसं व्रतप्रदानमभिमन्त्र्य केशिनीं दीक्षां जपत्यग्निर्दीक्षितः पृथिवी
दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्ष । वायुर्दीक्षितोऽन्तरिक्षं
दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे । आदित्यो दीक्षितो द्यौ-
र्दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे । चन्द्रमा दीक्षितः श्रोत्रं
दीक्षा सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे । प्रजापतिर्दीक्षितो मनो
दीक्षा सा मा दीक्षा दीक्षयतु दीक्षया दीक्षे । वाचा मे वाग्दीक्षतामग्नये
समष्टवा उ । प्राणेन मे प्राणो दीक्षतां वायवे समष्टवा उ । चक्षुषा मे
चक्षुर्दीक्षतां सूर्याय समष्टवा उ । श्रोत्रेण मे श्रोत्रं दीक्षतां चन्द्रमसे समष्ट-
वा उ । मनसा मे मनो दीक्षतां प्रजापतये समष्टवा उ । भूर्भुवः सुव-
स्तपो मे दीक्षा सत्यं गृहपतिरिति ६ अथैनमध्वर्युरभिमन्त्रयते ७

इति दशमी कण्डिका

पृथिवी दीक्षा तयाग्निर्दीक्षया दीक्षितो ययाग्निर्दीक्षया दीक्षितस्तया त्वा
दीक्षया दीक्षयामि । अन्तरिक्षं दीक्षा तया वायुर्दीक्षया दीक्षितो यया वा-
युर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि । द्यौर्दीक्षा तयादित्यो
दीक्षया दीक्षितो ययादित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि ।
दिशो दीक्षा तया चन्द्रमा दीक्षया दीक्षितो यया चन्द्रमा दीक्षया दीक्षित-
स्तया त्वा दीक्षया दीक्षयामि । आपो दीक्षा तया वरुणो राजा दीक्षया

दीक्षितो यया वरुणो राजा दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि । ओषधयो दीक्षा तया सोमो राजा दीक्षया दीक्षितो यया सोमो राजा दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि । वाग्दीक्षा तया प्राणो दीक्षया दीक्षितो यया प्राणो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामि । पृथिवी त्वा दीक्षमाणमनुदीक्षताम् । अन्तरिक्षं त्वा दीक्षमाणमनुदीक्षताम् । द्यौस्त्वा दीक्षमाणमनुदीक्षताम् । दिशस्त्वा दीक्षमाणमनुदीक्षन्ताम् । आपस्त्वा दीक्षमाणमनुदीक्षन्ताम् । ओषधयस्त्वा दीक्षमाणमनुदीक्षन्ताम् । वाक्त्वा दीक्षमाणमनुदीक्षताम् । ऋचस्त्वा दीक्षमाणमनुदीक्षन्ताम् । सामानि त्वा दीक्षमाणमनुदीक्षन्ताम् । यजूंषि त्वा दीक्षमाणमनुदीक्षन्ताम् । अहश्च रात्रिश्च कृषिश्च वृष्टिश्च त्विषिश्चापचितिश्चापश्चौषधयश्चोर्क् च सूनृता च तास्त्वा दीक्षमाणमनुदीक्षन्तामिति १ संभारयजूंषि चैनमध्वर्युर्वाचयति २ अथाङ्गुलीर्न्यचति ३ स्वाहा यज्ञं मनस इति द्वे । स्वाहा दिव इति द्वे । स्वाहा पृथिव्या इति द्वे । स्वाहोरोरन्तरिक्षादिति द्वे । द्वाहा यज्ञं वातादारभ इति मुष्टीकरोति वाचं च यच्छति ४ अथैनं त्रिरुपांश्वावेदयति त्रिरुच्चैरदीक्षिष्टायं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्तामुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति ५ ब्रह्मणो वा एष जायते यो दीक्षते । तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवावेदयति ६

इत्येकादशी कण्डिका इति तृतीयः पटलः

अपराह्णे दीक्षयेत् १ यं कामयेत तपस्वी स्यादिति तं पूर्वाह्णे २ स वाग्यतस्तपस्तप्यमान आस्त आ नक्षत्रस्योदेतोः ३ वत्सस्यैकं स्तनमवशिष्येतरान्व्रतं दोहयित्वा याः पशूनामृषभे वाचस्ताः सूर्यो अग्रे शुक्रो अग्रे ताः प्रहिण्वो यथाभागं वो अत्र शिवा नस्ताः हृपुनरायन्तु वाच इति जपित्वा व्रतं कृणुतेति वाचं विसृजते ४ एष्ट्रीः स्थेति चतस्रोऽङ्गुलीरुत्सृजति । द्वे अन्यतरतो द्वे अन्यतरतः ५ जागर्त्येतां रात्रिम् । क्रीते राजनि द्वितीयाम् । श्वःसुत्यायां तृतीयाम् ६ चनसितं विचक्षणमिति नामधेयान्तेषु निदधाति ७ चनसितेति ब्राह्मणम् । विचक्षणेति राजन्यवैश्यौ ८ परिणयेन मानुषीं वाचं वदति ९ न स्त्रिया न शूद्रेण संभाषेत १० नैनमनुप्रपद्येत ११ यद्येनं शूद्रेण संवाद उपपद्येत ब्राह्मणराजन्यवैश्यानामेकं ब्रूयादिममित्थं ब्रू-

हीति वाससनेयकम् १२ कामं शूद्रेण संभाषेत यः पापेन कर्मणानभिलक्षितः स्यादिति शाट्यायनकम् १३ अभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति शाट्यायनकम् १४

इति द्वादशी कण्डिका

अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत् १ न चास्य नाम गृह्णीयात् २ न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेत् ३ न च दन्तान्दर्शयते ४ हस्तेनापिगृह्य स्मयते ५ मधु मांसं स्त्रियमनृतमुपरिशय्यां ष्ठीवनं विकाले निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेत् ६ न दिवा मूत्रपुरीषे कुर्यात् ७ यदि कुर्याच्छायायाम् ८ मूत्रं चिकीर्षन्निय ते यज्ञिया तनूरिति तृणं लोष्टं वापादायापो मुञ्चामि न प्रजामंहोमुचः स्वाहाकृताः पृथिवीमाविशतेति मूत्रं विसृज्याचम्य पृथिव्या संभवेत्यपात्तं प्रतिनिदधाति ९ यन्मेऽत्र पयसः परीतोषात्तदर्पिथ । अग्निहोत्रमिव सोमेन तदहं पुनरादद इति रेतः स्कन्नमनुमन्त्रयते १० यदत्रापि रसस्य मे निरष्ठविषमस्मृतम् । अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति छर्दित्वा ष्ठुत्वा वा । यदन्नमद्य ते नक्तं न तत्प्रातः क्षुधोऽवति । मरं तदस्मान्मा हिंसीर्नहि तद्ददृशे दिवेति स्वप्नेऽन्नं भुक्त्वा । रुद्रियाभ्योऽद्भ्यः स्वाहेति लोहितमुत्पतितं दृष्ट्वा ११

इति त्रयोदशी कण्डिका

बीभत्सा नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्नूहानम् । कृपा णाम स्थापः स्वाहाकृताः पृथिवीमाविशतेत्यश्रु । तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदम् १ न प्रतीच्या द्वारा निष्क्रामति २ नाक्रतुसंयुक्तामाहुतिं जुहोति ३ नाग्निहोत्रम् ४ न दर्शपूर्णमासाभ्यां यजते ५ न ददाति ६ न पचते ७ द्वादशाहमवरार्ध्यं दीक्षितो भवति । मासं संवत्सरं यदा वा कृशः स्यादित्यपरम् ८ विज्ञायते च । यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति । यदास्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति । यदास्य त्वचास्थि संधीयतेऽथ मेध्यो भवति । यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति ९ पीवा दीक्षते । कृशो यजते । यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते १०

इति चतुर्दशी कण्डिका

एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुतः । तिस्रो वा दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतः । चतस्रो वा दीक्षास्तिस्र उपसदोऽष्टमीं प्रसुतः १ अमावास्यायां दीक्षा यजनीये वा । पौर्णमास्यां यजनीये वा सुत्यमहः २ एतद्वा विपरीतम् ३ अमावास्यायां दीक्षा यजनीये वा । अमावास्यायां यजनीये वा सुत्यमहः । पौर्णमास्यां दीक्षा यजनीये वा । पौर्णमास्यां यजनीये वा सुत्यमहः ४ नैनमन्यत्र दीक्षितविमितादभिनिस्रोचेदभ्युदियाद्वा ५ वारुणीरभिनिम्रुक्तो जपेत् । सौरीरभ्युदितः ६ अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति ७ उन्दतीर्बलं धत्तेत्यववृष्टः ८ दक्षिणेनाहवनीयं प्राङ् शेते न न्यङ्नोत्तानो नाग्नेरपपर्यावर्तेत ९ यद्यपपर्यावर्तेत विश्वे देवा अभि मामाववृत्रन्निति जपेत् १० नान्यत्र कृष्णाजिनादासीत । यद्यन्यत्रासीत देवां जनमगन्यज्ञ इति जपेत् ११ न दण्डात्कृष्णाजिनादिति विप्रच्छिद्येत । उभे निधाय मूत्रपुरीषे कुर्यात् १२ यावदुक्तं पत्न्या दीक्षितव्यञ्जनानि १३ समानं ब्रह्मचर्यम् १४ न दीक्षितवसनं परिदधीत । नास्य पापं कीर्तयेत् । नान्नमश्नीयात् १५ यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् । संस्थिते वाग्नीषोमीये । हुतायां वा वपायाम् १६

इति पञ्चदशी कण्डिका इति चतुर्थः पटलः

न पुरा नक्षत्रेभ्यो वाचं विसृजेत् । यदि विसृजेदिदं विष्णुस्त्वमग्ने व्रतपा असीति जपित्वा वाचं यच्छेत् १ पुनर्वा दीक्षेत २ अथैकेषाम् । वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामुत्तमामनूच्य वाग्यन्तव्येति ३ दुग्धमेवाभिविसृजेदित्यालेखनः ४ यवागू राजन्यस्येत्युक्तम् ५ यवागूमेकदुग्धं वा व्रतयेदित्यवर्णसंयोगेनैक उपदिशन्ति ६ तद्धैतदेके पयो व्रतयन्ति । तदु तथा न कुर्यात् । पयस्येव यवागूं श्रपयित्वा व्रतयेत् ७ यदि व्रतधुगल्पं दुहीतान्यां दुह्यात् ८ यद्यन्या न स्यादद्भिः संसृज्य श्रपयेत् ९ यदि पयो न स्यादप्स्वेव यवागूं श्रपयित्वा व्रतयेत् १० अप्यन्ततः पिप्पलानि । न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदायेति ११ यदि दधीयादेतदेवास्मै दधि कुर्युः १२ यद्यन्नीयाद्धाना अस्मा अन्वावपेयुः सक्तूनस्मा

अन्वावपेयुर्घृतमस्मा अन्वानयेयुः १३ अप्यग्निहोत्रहविषामेवैकं व्रतयेन्मां-सवर्जम् १४ सोऽयं दैद्मो वादो भवतीति खल्वाहुः । सर्वेषामुपसस्त्व-नारभ्य स्तनकल्प आम्नातः १५ अपराह्णेऽधिवृक्षसूर्ये वा व्रतप्रदो वाचं य-मयति । अग्नीञ्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति संप्रेष्यति १६

इति षोडशी कण्डिका

उदितेषु नक्षत्रेषु पूर्ववद्वाचो विसर्गः १ एवमुपोदयं यमयति । उदित आदित्ये विसृजते २ मध्यंदिने मध्यरात्रे च व्रतयति ३ अतिनीय वा मानुषं कालम् ४ सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे इत्येके ५ गार्हपत्ये दीक्षितस्य व्रतं श्रपयति । दक्षिणाग्नौ पत्न्याः ६ याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्य ७ अग्निहोत्रवत्तूष्णीमुन्नीयापरेणाहवनीयं व्रतमत्या-हृत्य प्रयच्छन्नाह व्रत्य व्रतय व्रतमुपेहीति ८ दैवीं धियं मनामह इति ह-स्ताववनिज्य ये देवा मनोजाता मनोयुज इति दक्षिणेनाहवनीयं परिश्रिते व्रतयति ९ नैनमदीक्षिता व्रतयन्तं पश्यन्ति १० शिवाः पीता भवथ यूय-मापोऽस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसः शिवा नो भवथ जीवस इति व्रतयित्वा नाभिदेशमभिमृशते ११ अपश्च पीत्वा जपति १२ तूष्णीं पत्नी स्व आयतने व्रतयति १३

इति सप्तदशी कण्डिका इति पञ्चमः पटलः

अग्ने त्वं सु जागृहीति स्वप्स्यन्नाहवनीयमभिमन्त्रयते १ त्वमग्ने व्रतपा अ-सीति प्रबुध्य मुष्टी वाचं वा विसृज्यादीक्षितवादं वोदित्वा २ विश्वे देवा अभि मामाववृत्रन्निति प्रबुध्य जपति । पुनर्मनः पुनरायुरागात्पुनः प्राणः पु-नराकूतमागात् । वैश्वानरोऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वेति च ३ तस्माद्दीक्षितो द्वादशाहं भृतिं वन्वीत । यज्ञमेव तत्संभरतीति विज्ञायते ४ पूषा सन्येति सनीहारान्संशास्ति ५ चन्द्रमसीत्येतैर्यथालिङ्गं प्रतिगृह्णाति ६ देवः सविता वसोर्वसुदावेत्यन्यानि ७ वायवे त्वेति तासां नष्टामनुदिश-ति ८ वरुणाय त्वेत्यप्सु मृताम् ९ निर्ऋत्यै त्वेत्यवसन्नां संशीर्णां वा १०

इत्यष्टादशी कण्डिका

मरुद्भ्यस्त्वेति ह्रादुनिहतां मेष्कहतामप्सु वा मग्नाम् १ रुद्राय त्वेति महा-
देवहताम् २ इन्द्राय त्वा प्रसह्वन इति यां सेनाभीत्वरी विन्देत ३ यमाय
त्वेत्यविज्ञातेन यक्ष्मणा मृताम् ४ अनुदिष्टानामधिगतां न गोषु चारयेत् ५
पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति ६ तदभावे रथाङ्गमादाय ७ भ-
द्रादभि श्रेय इति प्रयाणः ८ देवीराप इत्यपोऽतिगाहते ९ अच्छिन्नं तन्तुं
पृथिव्या अनुगेषमिति हस्तेन लोष्टं विमृद्नात्या पारात् १० पृथिव्या संभ-
वेति सिकता लोष्टं वा मध्ये पारे च न्यस्यते ११ एवं नाव्यासीनस्तरन्
१२ अरणीभ्यामरणीभिरित्येके १३ रथेन रथाङ्गेन वा न विप्रच्छिद्येत १४
अत्र देवयजनाध्यवसानमेके समामनन्ति १५ य इहाध्यवस्येत्स प्रयायात् ।
य आदितो न स प्रयाति १६ नित्यानि देवयजनानि १७ इत्येकोनविंशी
कण्डिका

इति षष्ठः पटलः

दक्षिणतऽउन्नतमुदीचीनावनतं प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम् १
यत्र वा बहवो ब्राह्मणाः संराधयेयुः २ अग्नयो वाव देवयजनम् । यत्र
क्वचाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते ३ दक्षिणा वाव
देवयजनम् । दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन एव यजत इत्येके ४
पुरोहविषीति काम्यानि ५ निर्ब्रस्केऽभिचरन्यजेत ६ यस्माद्वृक्षाद्वल्मी-
कानिति निर्हरेयुरथो अभिखनेयुः ७ परोक्षं गुहा वने याजयेदभिशस्यमा-
नम् ८ परोक्षं पृष्ठान्युपेयुः । सर्वमुपांशु क्रियेत । स्थले यजेत ९ यः
कामयेतोभयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति न प्राचीनं देवयजना-
द्देवयजनमात्रमुच्छिं षेत् १० यत्रापो देवयजनं चान्तरेण पन्था अभिविधा-
वेत्तस्मिन्याजयेद्यं कामयेत नैनमुत्तरो यज्ञ उपनमेदिति ११ कौत्साद्राजानं
क्रीणीयादन्यस्माद्वा ब्राह्मणादित्युक्त्वाहाप्यब्राह्मणादिति १२ उत्तरवेदिदेश
उपरवदेशे वा लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य दक्षिणे चर्म-
पक्षे राजानं निवपति । उत्तरस्मिन्नुपविशति सोमविक्रयी १३ उदकुम्भं
राजानं सोमविक्रयिणमिति सर्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यः
सोमा३ इत्युक्तम् १४ सोमविक्रयिन्सोमं शोधयेत्युक्त्वा पराङावर्तते १५

न साम्येत्तमुपेयात् । न यजमानः सोमं विचिनुयात् १६ नास्य पुरुषो नाध्वर्युर्नाध्वर्युपुरुषः १७ राज्ञो विचीयमानस्योपद्रष्टारः स्युः १८ अहं त्वदस्म्याजुह्वान इत्येताभ्यामाहवनीयं यजमान उपतिष्ठते १९

इति विंशी कण्डिका

प्रायणीयायास्तन्त्रं प्रक्रमयति १ वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते २ यथार्थं पात्राणि प्रयुनक्ति । स्थालीं कपालानां स्थाने ३ निर्वपणकालेऽदित्यै पयसि चरुः प्रायणीयः ४ प्राक् संप्रैषात्कृत्वा पत्नीवर्जं संप्रेष्यति ५ याः कृतायां वेद्यां चोद्यन्ते सैव तासां वेदिः । याः स्तीर्णे बर्हिषि तदेव तासां बर्हिः ६ आज्यग्रहणकालेऽननूयाजे प्रायणीये चतुर्जुह्वां गृह्णाति । चतुरुपभृति समानयनार्थम् ७ अप्रयाज उदयनीये न जुह्वां गृह्णाति । चतुरुपभृत्यनूयाजार्थम् ८ षड्ढोत्रा प्रायणीयमासादयति ९ प्रयाजवदननूयाजमित्युक्तम् १० चतुर आज्यभागान्प्रतिदिशं यजति । पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतः । मध्येऽदितिं हविषा ११ अदितिमिष्ट्वा मारुतीमृचमनूच्याज्येन चरुमभिपूर्यैता देवता यजति । ध्रौवाद्वा । स्विष्टकृतं षष्ठम् १२ शंय्वन्ता संस्थाप्या वा १३ पत्नीस्तु न संयाजयेत् १४ ता उदयनीये संयाजयेत् १५ समे वा कार्ये १६ धारयति ध्रौवमाज्यम् १७ प्राग्वंशे बर्हिः स्थालीमनिष्कसितां मेक्षणमित्युदयनीयार्थं निदधाति १८

इत्येकविंशी कण्डिका इति सप्तमः पटलः

प्रायणीयाया ध्रौवादष्टौ जुह्वां चतुरो वा गृहीत्वा तस्मिन्दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वावदधातीयं ते शुक्र तनूरिति १ पुरस्तात्प्रतीची सोमक्रयण्यवस्थिता भवत्येकहायनी द्विहायनी वर्षीयसी वा २ अकूटयाकर्णयेति रूपाणि ३ या रोहिणी बभ्रुलोम्नी पृश्निवाला पृश्निशफा शुच्यक्षा श्वित्रोपकाशा तया क्रीणीयादित्येके ४ द्विरूपया राजन्यस्य ५ शुण्ठयाधीलोधकर्ण्या षोडशिनः ६ तदाज्यं सोमक्रयणीमीक्षमाणो जुहोति जूरसीति ७ अपरं चतुर्गृहीतं गृहीत्वा शुक्रमसीति हिरण्यं पश्चादुद्धृत्य वैश्वदेवं हविरित्याज्यमवेक्ष्य सूर्यस्य चक्षुरारुहमित्यादित्यमुपस्थाय चिदसि मनासीति

सोमक्रयणीमभिमन्त्रयते ८ अकर्णगृहीतापदिबद्धा भवति ९ मित्रस्त्वा पदि बध्नात्विति दक्षिणं पूर्वपादं प्रेक्षते । पूषाध्वनः पात्विति प्राचीं यती-मनुमन्त्रयते १० षट् पदान्यनुनिक्रामति दक्षिणेन पदा दक्षिणानि वस्व्यसि रुद्रासीत्येतैः प्रतिमन्त्रम् ११ एकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वा-न्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु चत्वारि मयोभवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्वेतु षड्रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्रा-भ्यो विष्णुस्त्वान्वेत्विति निक्रम्यमाणेषु यजमानोऽनुवर्तयित्वा १२

इति द्वाविंशी कण्डिका

सखायः सप्तपदा अभूम सख्यं ते गमेयं सखात्ते मा योषं सख्यान्मे मा योष्ठा इति सप्तमे पदे जपति १ बृहस्पतिस्त्वा सुम्ने रणवत्विति सप्तमं पदमध्वर्यु-रञ्जलिनाभिगृह्य पदे हिरण्यं निधाय पृथिव्यास्त्वा मूर्धन्नाजिघर्मीति हिरण्ये हुत्वापादाय हिरण्यं देवस्य त्वा सवितुः प्रसव इति स्फ्यमादाय परिलि-खितं रक्षः परिलिखिता अरातय इति त्रिः प्रदक्षिणं पदं परिलिखति यावद्भू-तमनुविसृतं भवति २ कृष्णविषाणया चानुपरिलिख्यास्मे राय इति स्था-ल्यां यावत्तमूतं समोप्य त्वे राय इति यजमानाय प्रयच्छति ३ तोते राय इति पत्नियै ४ माहं रायस्पोषेण वियोषमिति पत्नी पदं प्रदीयमानमनुमन्त्र-यते ५ सं देवि देव्योर्वश्या पश्यस्वेति सोमक्रयण्या पत्नीं संख्यापयति ६ त्वष्टीमती ते सपेयेति पत्नी सोमक्रयणीमभिमन्त्रयते ७ त्वष्टुमन्तस्त्वा सपेमेति यजमानः ८ यतः पदमपात्तं तस्मिन्सहिरण्यौ पाणी प्रक्षाल्योन्न-म्भय पृथिवीमित्यद्भिरुपनिनीय पदं त्रैधं विभज्य तृतीयमुत्तरतो गार्हपत्यस्य शीते भस्मन्युपवपति । तृतीयमाहवनीयस्य । तृतीयं पत्न्यै प्रयच्छति ९ तत्सा गृहेषु निदधाति १०

इति त्रयोविंशी कण्डिका

अत्रादित्योपस्थानं राज्ञश्च निवपनादि कर्मैके समामनन्ति १ अपि पन्थाम-गस्महीत्युद्धृतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति २ शीर्ष्णा गिरौ क्रीतं हरन्ति ३ अपरेणोत्तरेण वा राजानं प्रागीषमुदगीषं वा नद्धयुगं शकटं चुबुकप्रतिष्ठितम् ४ अंशुना ते अंशुः पृच्यतामिति य-जमानो राजानमभिमन्त्रयते ५ यं कामयेतापशुः स्यादित्यृक्षतस्तस्येत्युक्तम्

६ क्षौमं वासो द्विगुणं त्रिगुणं वा प्रागदशमुत्तरदशं चर्मण्यास्तृणाति । उद-ग्दशं वा ७ तस्मिन्हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांशून्संगृह्या-न्यचन्नभि त्यं देवं सवितारमित्यतिच्छन्दसर्चा मिमीते ८ एवमेकयैकयो-त्सर्गम् ९ सर्वास्वङ्गुष्ठमुपनिगृह्णाति १० यया प्रथमं न तया पञ्चमं तयै-वोत्तमम् ११ पञ्चकृत्वो यजुषा मिमीते । पञ्चकृत्वस्तूष्णीम् १२ एवं द्विस्त्रिरपरिमितकृत्वो वा १३ प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूह्य क्षौमेण वाससोपसंगृह्य प्राणाय त्वेति द्विगुणेनोष्णीषेणोपनह्य व्यानाय त्वेति विस्र-स्यावेक्षते प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्त्विति १४ एष ते गायत्रो भाग इत्येतैर्यजमानो राजानमुपतिष्ठते १५

इति चतुर्विंशी कण्डिका

देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूमस्तं त्वं विश्वेभ्यो देवेभ्यः क्रतून्कल्पय द-क्षिणाः कल्पय यथर्तु यथादेवतमित्यादित्यमुपस्थाय सोमविक्रयिणे राजानं प्रदाय पणते १ सोमविक्रयिन्क्रय्यस्ते सोमा इति २ क्रय्य इतीतरः प्रत्याह २ सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तमित्युक्त्वा कलया ते क्रीणानीत्येनमाह ४ भूयो वा अतः सोमो राजार्हतीति सरवेषु पणनेषु सोमविक्रयी प्रत्याहा-संपदः ५ कुष्ठया ते क्रीणानीति द्वितीयम् । शफेन ते क्रीणानीति तृतीयम् । पदा ते क्रीणानीति चतुर्थम् ६ एवं त्रिः ७ एकैकशो वा त्रिस्त्रिः ८ ग-वा ते क्रीणानीत्यन्ततः ९ अपि वा न गवेति ब्रूयात् । एषेति निर्दिश्य जपति तस्या आत्मा तस्या रूपं तस्याः प्रजा तस्याः पयस्तस्या बन्धुरिति १० शुक्रं ते शुक्रेण क्रीणामीति जपित्वा हिरण्येन क्रीणाति ११ तपसस्त-नूरसीति जपित्वाजया क्रीणाति १२ अवशिष्टानामेकैकेन १३ यद्वृषभेण क्रीणीयात्प्रजापतिना क्रीणीयात् । तत्स्थाने वत्सतरः साण्डः १४ मिथु-नाभ्यामिति वत्सतरो वत्सतरी च १५ ताभ्यां युगपत्क्रीत्वा वाससान्ततः संपादयति १६

इति पञ्चविंशी कण्डिका

दशभिर्द्वादशशतदक्षिणस्य १ भूयसा वा २ चतुर्भिर्वा गवा हिरण्येन वाससाजयेत्येकेषाम् ३ एकयैकविंशतिदक्षिणस्य । तिसृभिः षष्टिदक्षि-

णस्य । अपरिमिताभिरपरिमितदक्षिणस्य ४ चतुर्विंशत्या सहस्रे सर्ववे-
दसे वा ५ त्रिंशता वा सहस्रदक्षिणस्य ६ सप्तविंशतिर्गा हिरण्यं छागा
वास इति त्रिंशत् ७ शतेन वाजपेयस्य । द्वाभ्यां राजसूयस्य ८ सह-
स्रेणाश्वमेधस्य ९ अस्मे चन्द्राणीति सोमविक्रयिणो हिरण्यमपादत्ते १०
अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति । तां स काले
दशापवित्रस्य नाभिं कुरुते ११ शुक्लं बलक्ष्याः पवित्रममोतं भवति १२
यं द्विष्यात्तस्य कृष्णां लोहिनीं च पवित्रे कुर्यात् १३ कृष्णामूर्णास्तुकामद्भिः
क्लेदयित्वेदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य तया सो-
मविक्रयिणं विध्यति सोमविक्रयिणि तम इति १४ स्वान भ्राजेति सोम-
क्रयणाननुदिश्य स्वजा असि स्वभूरस्यस्मै कर्मणे जात ऋतेन त्वा गृह्णाम्यृ-
तेन मा पाहीति सोमविक्रयिणो राजानमपादत्ते १५ यदि कृच्छ्रायेतापैव
हरेत १६ अत्र यजमानोऽपोर्णुते १७

इति षड्विंशी कण्डिका

वयः सुपर्णा इति १ दीक्षितदण्डं च मैत्रावरुणाय प्रयच्छति मित्रावरुणयो-
स्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छाम्यवक्रोऽविधुरो भूयासमिति २ मित्रो न
एहीति यजमानो राजानमादायेन्द्रस्योरुमाविशेति दक्षिण ऊरावासाद्य ह-
स्ताभ्यां निगृह्यास्ते ३ अत्रादित्योपस्थानं दण्डप्रदानं सोमक्रयणानामनु-
देशनमेके समामनन्ति ४ रुद्रस्त्वावर्तयत्विति प्रदक्षिणं सोमक्रयणीमाव-
र्त्यान्यया गवा निष्क्रीय यजमानस्य गोष्ठे विसृजति ५ यदि सोमविक्रयी
प्रतिविवदेत पृषतैनं वरत्राकाण्डेनावक्षायं नाशयेयुः ६ लकुटैर्घ्नन्तीत्येके
७ नित्यवदेके वधं समामनन्ति ८ उदायुषा स्वायुषेति यजमानो राजान-
मादायोत्थायोर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति ९ अदित्याः सदो
ऽसीत्यध्वर्युः शकटणीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्यादित्याः
सद आसीदेति तस्मिन्राजानमासाद्य वनेषु व्यन्तरिक्षं ततानेति वाससा प-
र्यान्ह्योदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यूर्ध्वग्री-
वं बहिष्टाद्विशसनम् १०

इति सप्तविंशी कण्डिका इति नवमः पटलः

अत्र दर्शपूर्णमासवद्धुरावभिमृश्य वारुणमसीति शकटमाखिद्य वरुणस्त्वो-त्तभ्नात्वित्युपस्तभ्य वरुणस्य स्कम्भनमसीति शम्यां प्रतिमुच्योस्रावेतं धूर्षा-हावित्यनड्वाहावुपाज्य वारुणमसीति योक्त्वपाशं परिहृत्य प्रत्यस्तो वरु-णस्य पाश इत्यभिधानीं प्रत्यस्यति १ एवमुत्तरमनड्वाहं युनक्ति २ हरिणी शाखे बिभ्रन्सुब्रह्मण्योऽन्तरेषे व सर्पति । पलाशशाखे शमीशाखे वा ३ अथाध्वर्युः शकटमन्वारभ्य संप्रेष्यति सोमाय राज्ञे क्रीताय प्रोह्यमाणायानु-ब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति ४ सर्वासु सुब्रह्मण्यासु सुब्रह्मण्यम-न्वारभ्य यजमानो जपति सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः । सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः । सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः । सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः । परोरजास्ते पञ्चमः पादः । सा न इषमूर्जं धुक्ष्व तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यमिति ५ एवं त्रिराहूतामाहू-ताम् ६ प्रथमायां त्रिरनूक्तायाम् ७

इत्यष्टाविंशी कण्डिका

प्रच्यवस्व भुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते १ श्येनो भूत्वा परापतेत्यध्वर्यू राजानमभिमन्त्रयते २ अपि पन्थामगस्महीत्यध्वर्युर्यजमा-नश्च दक्षिणेनोत्तरेण वा राजानमतिक्रामतः ३ अजेनाग्नीषोमीयेण कर्णगृही-तेन यजमानो राजानमोह्यमानं प्रतीक्षते नमो मित्रस्येति ४ लोहस्तूपरो भ-वति । अप्यतूपरः । कृष्णसारङ्गो लोहितसारङ्गो वा ५ स्थूलः पीवा स्मश्रुणः ६ औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जवि-वाना । तां सर्वेऽध्वर्यवोऽग्रेण प्राग्वंशं राजन्योह्यमान उद्गृह्णन्ति ७ अ-ग्नीन्प्रज्वलयन्ति । अग्निमग्नी वा ८ अग्रेण प्राग्वंशं प्रागीषमुदगीषं वा शकटमवस्थाप्य पूर्ववदाखिद्योपस्तभ्य वरुणस्य स्कम्भनमसीति शम्यामु-द्वृह्य विचृत्तो वरुणस्य पाश इति योक्त्रपाशं विचृत्योन्मुक्तो वरुणस्य पाश इत्यभिधानीमुन्मुञ्चति ९ एवमुत्तरमनड्वाहं विमुञ्चति १० विमुक्तः सव्यो ऽविमुक्तो वा ११

इत्येकोनविंशी कण्डिका

अथातिथ्यायास्तन्त्रं प्रक्रमयति १ द्वाविंशतिदारुरध्मः २ आश्ववालः प्र-

स्तरः । ऐन्नवी विधृती । कार्ष्मर्यमयाः परिधयः । वेदं कृत्वाग्नीन्परि-
स्तीर्य पाणिप्रन्नालनादि कर्म प्रतिपद्यते ३ यथार्थं पात्रप्रयोगः ४ निर्वप-
णकाले पत्नीं शकटमन्वारम्भयित्वातिथ्यं निर्वपति ५ पत्न्या वा हस्तेन ६
हस्ताद्वा । हस्तान्निर्वपन्हस्ते सर्वाञ्छकटमन्त्राञ्जपेत् ७ अग्नेरातिथ्यम-
सीत्येतैः प्रतिमन्त्रम् ८ देवतादेशनस्य प्रत्याम्नायो भवति ९ पञ्चसु सा-
वित्रं जुष्टं चानुषजति १० नोत्तरयोरित्येके ११ वैष्णवो नवकपालः पुरो-
डाशो भवति १२ विष्णुवदेवात ऊर्ध्वं संस्काराः १३ हविष्कृता वाचं
विसृज्योत्तरमनड्वाहं विमुच्य १४ वारुणमसीति वासोऽपादाय वरुणोऽसि
धृतव्रत इति राजानमादायाच्छिद्रपत्रः प्रजा उपावरोहोशन्नुशतीः स्योनः
स्योनाः सोम राजन्विश्वस्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोह-
न्त्वित्युपावहृत्योर्वन्तरिन्नमन्विहीत्यभिप्रव्रजति १५

इति त्रिंशी कण्डिका

आसन्दीमादाय प्रतिप्रस्थाता पूर्वः प्रतिपद्यते १ या ते धामानीति पूर्वया
द्वारा प्राग्वंशं प्रविश्यापरेणाहवनीयं दन्निणातिहृत्य वरुणस्यर्तसदन्यसीति
दन्निणेनाहवनीयं राजासन्दीं प्रतिष्ठापयति २ तस्यां शकटवत्कृष्णाजिना-
स्तरणं राज्ञश्चासादनम् ३ वरुणोऽसि धृतव्रत इति राजानमभिमन्त्रयते ४
वारुणमसीति वाससा पर्यानह्यति ५ एवावन्दस्व वरुणं बृहन्तं नमस्या
धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वियंसत्पातं मा द्यावापृथिवी
उपस्थ इत्येतया सर्वत्र राजानमासीदेत् ६ अग्निं राजानं चान्तरेण मा सं-
चारिष्टेति संप्रेष्यति ७ अवहननादि कर्म प्रतिपद्यते ८ चतुर्गृहीतान्या-
ज्यानि ९ चतुर्होत्रातिथ्यमासाद्य संभारयजूंषि व्याचष्टे १० यजमानं वा-
चयतीत्येके ११ पशुवन्निर्मन्थ्यः सामिधेन्यश्च १२ पञ्च प्रयाजाः १३ च-
तुर्थे सर्वमौपभृतं समानयति १४ इडान्ता संतिष्ठते १५ धारयति ध्रौवमा-
ज्यमाज्यम् १६

इत्येकत्रिंशी कण्डिका इति दशमः पटलः

इति दशमः प्रश्नः

आतिथ्याया ध्रौवात्स्रुचि चमसे वा तानूनप्त्रं समवद्यति । चतुरवत्तं प-

ञ्चावर्त्तं वा । आपतये त्वा गृह्णामीत्येतैः प्रतिमन्त्रम् १ अनाधृष्टमसीति यजमानसप्तदशा ऋत्विजस्तानूनप्त्रं समवमृशन्ति २ अनु मे दीक्षामिति यजमानः ३ यं कामयेत यज्ञयशसमृच्छेदिति तं प्रथमम् । यदि कामयेत सर्वानिति सर्वान्सहावमर्शयेत् ४ तस्माद्यः सतानूनप्त्रिणामित्युक्तम् ५ प्रजापतौ त्वा मनसि जुहोमीति यजमानस्तानूनप्त्रं त्रिरवजिघ्रति ६ अन्वहं वा व्रतेष्वपिनयति ७ अग्नीन्मदन्त्यापा इति पृच्छति ८ मदन्ति देवीरमृता ऋतावृध इत्याग्नीध्रः प्रत्याह ९ ताभिरेहीति संप्रेष्यति १० मदन्तीरुपस्पृश्य तानूनप्त्रिणो विस्रस्य राजानं सहिरण्यैः पाणिभिराप्याययन्त्यंशुरंशुस्ते देव सोमाप्यायतामिति ११ अथ निह्नुवते । दक्षिणे वेद्यन्ते प्रस्तरं निधाय दक्षिणान्पाणीनुत्तानान्कृत्वा सव्यान्नीच एष्टा रायः प्रेषे भगायेति १२ अथ यजमानोऽवान्तरदीक्षामुपैति १३ अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसीत्याहवनीयमुपतिष्ठते १४ एतेनैवास्मिन्समिधमादधातीति वाजसनेयकम् १५

इति प्रथमा कण्डिका

संतरां मेखलां समायच्छते । संतरां मुष्टी कर्षते १ तप्तव्रतो भवति २ मदन्तीभिर्मार्जयते ३ या ते अग्ने रुद्रिया तनूरित्येतेनैवात ऊर्ध्वं व्रतयति ४ प्रवर्ग्येण प्रचर्योपसदा चरन्ति । एतद्वा विपरीतम् ५ न प्रथमयज्ञे प्रवृञ्ज्यात् ६ प्रवृञ्ज्याद्वा ७ प्रवृञ्ज्यादुर्ब्राह्मणस्य ८ ब्रह्मवर्चसकामस्येत्येके ९ योऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यादिति बह्वृचब्राह्मणम् १० आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य च । तदेव प्रस्तरपरिधि ११ तत्स्तीर्णं बर्हिस्तत्परिधिताः परिधय इत्येके १२ उपसदस्तन्त्रं प्रक्रमयति १३ प्राकृत इध्मो दशदारुर्वा १४ वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्राणि प्रयुनक्ति १५ स्फ्यमग्निहोत्रहवणीं स्रुवं जुहूमुपभृतं ध्रुवां वेदमाज्यस्थालीमिति द्वन्द्वं प्रयुज्य पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति १६ वाग्यतः पात्राणि संमृश्य प्रोक्षणीः संस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्षति १७ अत्र वाचं विसृजते १८ स्फ्यमादाय १९

इति द्वितीया कण्डिका

लोमभ्योऽधि स्तम्बयजुर्हृत्वोत्तरं परिग्राहं परिगृह्य संप्रेष्यति प्रोक्षणीरासाद-

येध्ममुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीति १ आज्यग्रहणकाले ध्रुवायामेव गृह्णाति । प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं च प्रोक्ष्य प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यैकामाघारसमिधमाधायान्तर्वेदि विधृती निधाय ध्रुवां स्रुवं च सादयति । एतावसदतामिति मन्त्रं संनमति २ वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते ३ नव सामिधेनीरन्वाह ४ तिस्र ऋचस्त्रिरनूक्ता भवन्ति । नव वा पराचीः ५ नान्यामाहुतिं पुरस्ताज्जुहुयात् । स्रौवमेवाघारयेत् ६ समानमा प्रवरात् ७ नार्षेयं वृणीते न होतारम् । आश्राव्याह सीद होतरिति । एतावान्प्रवरः ८ ध्रौवादष्टौ जुह्वां गृह्णाति । चतुरुपभृति ९ घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत्प्रचरति १० अर्धेन जौहवस्याग्निं यजति । अर्धेन सोमम् ११ औपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदं जुहोति १२ अग्नीन्मदन्त्यापा३ इत्येतदाद्या निह्नवात्कृत्वाग्नीद्देवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति १३ अपरेण गार्हपत्यमाग्नीध्र उपविश्य देवपत्नीर्व्याचष्टे सेनेन्द्रस्य धेनेति । उत्करे सुब्रह्मण्यामाह्वयति । पूर्ववदेनां यजमानोऽनुमन्त्रयते १४

इति तृतीया कण्डिका इति प्रथमः पटलः

सुपूर्वाह्णे पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति । स्वपराह्ण आपराह्णिकीभ्याम् १ सव्योत्तानैस्तु सायं निह्नवः २ एषा प्रथमा ३ एवमुत्तराभ्यां चर्या ४ रजाशयां द्वितीयायां जुहोति । हराशयां तृतीयायाम् ५ याः प्रातर्याज्या इत्युक्तम् ६ तिस्र एव साह्नस्योपसदः । द्वादशाहीनस्य ७ यदि संग्रामं पुरो वा युध्येयुरयः प्रथमायामवधाय जुहुयात् । रजतं द्वितीयायाम् । हरितमुत्तमायाम् ८ आराग्रामिति स्तनकल्पः ९ यदहः सोमं क्रीणीयुश्चतुरः सायं दुह्युस्त्रीन्प्रातर्द्वौ सायमेकमुत्तमे । सर्वान्सायमाशिरे १० अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्वन्ति ११ प्राग्वंशस्य मध्यमाल्ललाटिकात्त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति १२ तस्मात्पञ्चदशसु दक्षिणतः । एवमुत्तरतः । ते श्रोणी । प्रथमनिहताच्छङ्कोः षट्त्रिंशतिः पुरस्तात् । तस्माद्द्वादशसु दक्षिणतः । एवमुत्तरतः । तावंसौ १३ विमिमे त्वा पयस्वतीं देवानां धेनुं सुदुघामनपस्फुरन्तीम् । इन्द्रः सोमं पिबतु क्षेमो

ग्रस्तु न इति विमानः १४ सर्वतः स्यन्द्यया पर्यातनोति १५ मध्ये पृष्ट्याम् १६

इति चतुर्थी कण्डिका

इमां नरः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येद्देवस्य सवितुः सव इति संप्रेष्यति १ स्फ्येन विघनेन पर्श्वा परशुना च वेदिं कुर्वन्ति २ दर्शपूर्णमासवत्संनमनवर्जं प्रागुत्तरात्परिग्राहात्कृत्वा चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये । तस्यां सुपर्णावधि यौ निविष्टौ तयोर्देवानामधि भागधेयमित्यभिमन्त्र्य ३ चात्वालाद्द्वादशसु प्रक्रमेषु प्रत्यगुत्करः । तावत्येवाध्वन्युदग्यथा चात्वालः ४ व्याख्यातश्चात्वाल उत्तरवेदिश्च ५ उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छन्ना वसति ६ श्वोभूत उत्तमे प्रवर्ग्योपसदौ प्रतिसमस्यति ७ पौर्वाह्णिकीभ्यां प्रचर्य तदानीमेवापराह्णिकीभ्याम् ८ ग्रत्र प्रवर्ग्यमुद्वास्य पशुबन्धवदग्निं प्रणयति ९ एष सोमस्याहवनीयः । यतः प्रणयति स गार्हपत्यः १० ग्रग्निवत्युत्तरं परिग्राहं परिगृह्णाति ११ ग्रत्र प्रतिप्रस्थाता शाखामाहृत्य मैत्रावरुण्याः पयस्याया वत्सानपाकरोति १२

इति पञ्चमी कण्डिका इति द्वितीयः पटलः

प्रोक्ष्य बर्हिस्त्रिर्वेदिं प्रोक्षति १ नाप्रोक्षितामभिचरन्ति २ ग्रथैनां बर्हिषा बहुलं प्राचीनं स्तीर्त्वा प्रयुक्तपूर्वे शकटे नद्धयुगे प्रतिहतशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान्ग्रन्थीन्विस्रस्य नवान्प्रज्ञातान्कृत्वाग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यवनयन्परिश्रिते सच्छदिषी ग्रवस्थापयति ३ ग्रथैने पत्नी पदतृतीयेनाज्यमिश्रेणोपानक्ति ४ ग्रा नो वीरो जायतामिति द्विर्दक्षिणामक्षधुरं दक्षिणेन हस्तेनोत्तानेन प्राचीनम् ५ न च हस्तमावर्तयति ६ एवमितराम् ७ सकृद्वा ८ तथोत्तरस्य हविर्धानस्योपानक्ति ९ युञ्जते मन इति सावित्रियर्चौत्तरवेदिके हुत्वा हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति संप्रेष्यति । प्रवर्त्यमानाभ्यामनुब्रूहीति वा १० प्रथमायां त्रिरनूक्तायां प्राची प्रेतमध्वरमित्युदृह्णन्तः प्रवर्तयन्ति ११ स्याच्चेदक्षशब्दः सुवागित्यनुमन्त्रयेत १२ दक्षिणस्य हविर्धानस्य वर्त्मनि वर्त्मनोर्वा हिरण्यं निधायेदं विष्णुर्विचक्रम

इत्यध्वर्युर्हिरण्ये जुहोति १३ एवमुत्तरस्य प्रतिप्रस्थाता १४
इति षष्ठी कण्डिका

इरावती धेनुमती इति जुहोति १ अप जन्यं भयं नुदाप चक्राणि वर्तय । गृहं सोमस्य गच्छतमिति वितृतीयदेशे वेद्या अध्वर्युर्होता ब्रह्मा मैत्रावरुणो वा पदापनुदति । लोष्टं वा बहिर्वेदि निरस्यति २ आहवनीयात्त्रीन्प्रतीचः प्रक्रमानुच्छिष्यात्र रमेथामिति नभ्यस्थे स्थापयित्वा वैष्णवमसि विष्णुस्त्वोत्तभ्नात्वित्युपस्तभ्य दिवो वा विष्णवित्यध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दमनु मेथीं निहन्ति । तस्यामीषां निनह्यति ३ एवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नु कमित्युत्तरम् कर्णातर्दमनु ४ ऊर्ध्वाः शम्या उद्गृह्योपरिष्टात्परिवेष्टयन्ति ५ उत्ताना हि देवगवा वहन्तीति विज्ञायते ६ महो वा विष्णविति सर्वतः स्थूणाः परिमिनोति ७ पुरस्ताच्चान्तः खरायावकाशं शिष्ट्वा ८ उदञ्चौ वंशावत्यादधाति पश्चात्पुरस्ताच्च ९ समानं सांकाशिनं शालामुखीयहोत्रीयौत्तरवेदिकानाम् १०
इति सप्तमी कण्डिका

विष्णो रराटमसीति पुरस्ताद्रराट्यां तिर्यञ्चं वंशं धारयन्विष्णोः स्यूरसीति स्यूत्वा विष्णोर्ध्रुवमसीति प्रज्ञातं ग्रन्थिं कृत्वा प्राचो वंशानत्याधाय विष्णोः पृष्ठमसीति तेषु मध्यमं छदिरध्यूहति त्र्यरत्निविस्तारं नवायामम् १ तूष्णीमितरे छदिषी अध्यूह्य कटांस्तेजनीरिति छद्यन्तरालेषु प्रवर्तमुपास्यति २ तेऽन्तर्वर्ता भवन्ति ३ परि त्वा गिर्वणो गिर इति सर्वतः परिश्रित्य विष्णोः श्नप्त्रे स्थ इति रराट्या अंतौ व्यस्यति । संमृशतीत्येके ४ विष्णोः स्यूरसीत्यध्वर्युर्दक्षिणां द्वार्बाहुं स्यूत्वा विष्णोर्ध्रुवमसीति प्रज्ञातं ग्रन्थिं करोति ५ ग्रन्थिकरणमेके पूर्वं समामनन्ति ६ यं प्रथमं ग्रन्थिं ग्रथ्नीयादित्युक्तम् ७ एवमुत्तरां म्प्रतिप्रस्थाता ८ एवमपरे सीव्यतः ९ पुरस्तादुन्नतं पश्चान्निनतं हविर्धानम् १० वैष्णवमसि विष्णवे त्वेति संमितमभिमृशति ११
इत्यष्टमी कण्डिका इति तृतीयः पटलः

प्र तद्विष्णु स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु

विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेति संमितात्प्राङ् यजमानो निष्क्रम्याहवनीयात्त्रीन्प्राचः प्रक्रमान्प्रक्रामति यस्योरुष्विति १ नाध्वर्युः प्राङ् हविर्धाने अतीयात् २ अतीयाच्चेद्वैष्णव्यर्चा संचरेत् ३ षट्सु प्रक्रमेषूत्करात्प्रत्यगाग्नीध्रं मिनोति । अर्धमन्तर्वेद्यर्धं बहिर्वेदि । प्राचीनवंशं चतुःस्थूणं सर्वतः परिश्रितं दक्षिणतऽउपचारम् ४ अपरस्माद्वेद्यन्तात्त्रिषु पुरस्तात्प्रक्रमेषु तिर्यक् सदो मिनोति ५ अक्ष्णया द्वेष्यस्य ६ नवारत्निविस्तारं सप्तविंशतिरुदगायतम् । अपरिमितं वा ७ यावदृत्विग्भ्यो धिष्णियेभ्यः प्रसर्पकेभ्य आप्तं मन्येतेत्यपरम् ८ दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मध्ये सदसो मिनोति ९ दक्षिणा सदः प्रति कर्षेद्यथा सांकाशिनस्याविरोधं स्यात् १० यूपवदौदुम्बर्या अवटसंस्कारः शकलवर्जम् ११ अग्रेणावटं प्राचीं निधाय तूष्णीं प्रक्षाल्याथैनां यवमतीभिः प्रोक्षति । दिवे त्वेत्यग्रम् । अन्तरिक्षाय त्वेति मध्यम् । पृथिव्यै त्वेति मूलम् १२ उद्दिवं स्तभानान्तरिक्षं पृणेति प्राचीनकर्णां सहोद्गात्रोच्छ्रयति । उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषेति वा १३

इति नवमी कण्डिका

द्युतानस्त्वा मारुतो मिनोत्विति प्राचीनकर्णां सहोद्गात्रा मिनोति १ ऊर्ध्वं निखाताद्यजमानसंमिता २ पर्यूहणपरिदृंहणपरिषेचनानि यूपवत् ३ तस्या विशाखे हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण हिरण्ये जुह्वदान्तमौदुम्बरीमन्ववस्रावयति ४ एषा सदसः स्थूणानां वर्षिष्ठा ५ नाभिदघ्नयः पर्यन्तीयाः ६ नीचैः सदो मिनुयाद्वृष्टिकामस्य । उच्चैरवृष्टिकामस्येत्येके ७ उदञ्चः प्राचश्च वंशानत्याधायैन्द्रमसीति तेषु मध्यमानि त्रीणि छदींष्यध्यूहति ८ विश्वजनस्य छायेति त्रीणि दक्षिणानि । इन्द्रस्य सदोऽसीति त्रीण्युत्तराणि ९ दक्षिणान्युत्तराणि चौदुम्बरीमभ्यग्राणि भवन्ति १० दक्षिणान्युत्तराणि करोतीति विज्ञायते ११ नवच्छदीति काम्यानि १२ नवाग्निष्टोमे । पञ्चदशोक्थ्ये । षोडश षोडशिनि । सप्तदश वाजपेये ऽतिरात्रे च । एकविंशतिः सत्राहीनानाम् १३ अन्तर्वर्ताः परिश्रयणं सांकाशिनं द्वाराविति हविर्धानवत् १४ इन्द्रस्य स्यूरसीति सीव्यति । इन्द्रस्य ध्रुवमसीति प्रज्ञातं ग्रन्थिं कृत्वैन्द्रमसीन्द्राय त्वेति संमितमभिमृशति १५

नाध्वर्युः प्रत्यङ्ङ सदोऽतीयात् । धिष्णियान्होतारं वा १६ यद्यतीयादैन्द्रि-
यर्चा संचरेत् । आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामि-
न्द्रो युवा सखेति स्तरणीमेतामेके समामनन्ति १७ चात्रपत्या वा संचरेत्
१८ उपरवकर्मैके पुर्वं समामनन्ति । सदःकर्मैके १९

इति दशमी कण्डिका इति चतुर्थः पटलः

दक्षिणस्य हविर्धानस्याधस्तात्पुरोऽक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशमु-
खान्प्रादेशान्तरालान्करोति १ देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादाय प-
रिलिखितं रक्षः परिलिखिता अरातय इति त्रिर्दक्षिणपूर्वं परिलिखति २
एवमितरान्प्रदक्षिणमुत्तरापवर्गम् ३ एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि
क्रियन्ते ४ अधस्तात्संतृणा भवन्ति । उपरिष्टादसंभिन्नाः ५ तूष्णीं बा-
हुमात्रान्खात्वा रक्षोहणो वलगहनो वैष्णवान्खनामीति खनति ६ एकव-
दुपरवमन्त्रानेके समामनन्ति ७ विराडसीति बाहुमुपावहृत्येदमहं तं वल-
गमुद्वपामीत्युदुप्योपरवन्यन्तेऽवबाधते गायत्रेण छन्दसावबाढो वलग इति
८ हरामि वैष्णवानिति हरति । अवबाढो दुरस्युरित्यग्रेणोपस्तम्भनं निव-
पति ९ एवं सर्वान्करोति १० एतावन्नाना । पूर्वेणपूर्वेण मन्त्रेण बाहुमु-
पावहृत्योत्तरेणोत्तरेण छन्दसावबाधते ११ गायत्रं त्रैष्टुभं जागतमानुष्टुभं पा-
ङ्क्तमित्याम्नातानि भवन्ति १२

इत्येकादशी कण्डिका

प्रथमं वा सर्वेषु १ विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभि-
मातिहा विश्वाराडसि विश्वासां नाष्ट्राणां हन्तेति बाहू उपावहरतोऽध्वर्युर्यज-
मानश्च २ संमृश इमानायुषे वर्चसे च देवानां निधिरसि द्वेषोयवनः । यु-
योध्यस्मद्द्वेषांसि यानि कानि च यकृम । देवानामिदं निहितं यदस्तथा-
भाहि प्रदिशश्चतस्रः । कृण्वानो अन्याँ अधरान्सपत्नानित्युपरवान्संमृश्य
दक्षिणपूर्वं यजमानोऽवमृशति । उत्तरापरमध्वर्युः ३ अथ यजमानः पृ-
च्छत्यध्वर्यो किमत्रेति । भद्रमितीतरः प्रत्याह । तन्नौ सहेत्युक्त्वोत्तरपूर्वं
यजमानोऽवमृशति । दक्षिणापरमध्वर्युः । तथैव प्रश्नः प्रतिवचनं च ।
तन्म इत्याह यजमानः ४ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति यव-

मतीभिरुपरवान्प्रोह्दयोत्तरैर्मन्त्रैरवनयामीति प्रोह्णीशेषमवटेऽवनीय यवोऽसीति यवमवास्यावस्तृणामीति बर्हिषावस्तीर्याभिजुहोमीत्याज्येनाभिजुहोति ५ एवं सर्वान्करोति ६ रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी इत्यधिषवणफलके प्रोक्षति ७

इति द्वादशी कण्डिका

औदुम्बरे कार्ष्मर्यमये पालाशे वा शुष्के तष्टे प्रधिमुखे पुरस्तात्समाविकर्ते पश्चात् १ न संतृणत्त्येकाहे । तत ऊर्ध्वं संतृद्ये २ उक्थ्यादिषु वा संतृणत्ति ३ अथैने उपरवेषूपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति ४ द्वौ दक्षिणेनापिदधाति । द्वावुत्तरेण ५ संहिते पुरस्ताद्द्व्यङ्गुलेन पश्चादसंहिते भवतः ६ अथैने उत्तरैर्मन्त्रैः पर्यूहामीति प्रदक्षिणमुपरवपांसुभिः पर्युह्य परिस्तृणामीति बर्हिषा परिस्तीर्योत्तमेनाभिमन्त्रयते ७ एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमुपरवपांसुभिश्चतुरश्रं खरं करोति सोमपात्रेभ्य आप्तम् ८ पुरस्तात्संचरं शिनष्टि ९ अन्तरा चात्वालोत्करावाग्नीध्रचात्वालौ वाध्वर्युर्दृशीकवश्च संचरेयुः १० सर्वतः ह्प्रसुते दृशीकवः संचरेयुरित्येके ११

इति त्रयोदशी कण्डिका इति पञ्चमः पटलः

चात्वालाद्धिष्ण्यानुपवपति १ अन्तराग्नीध्र आग्नीध्रीयमुत्तरे वेद्यन्त उत्तरतः संचरं शिष्ट्वा २ सदसीतरान्पूर्वार्धे पुरस्तात्संचरं शिष्ट्वा ३ पृष्ठ्यायां होत्रीयम् । तं दक्षिणेन प्रशास्त्रीयम् ४ उत्तरेण होत्रीयमितरानुदीच आयातयति । ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्येति ५ बहिः सदसो मार्जालीयं दक्षिणे वेद्यन्ते दक्षिणतः संचरं शिष्ट्वा सममाग्नीध्रीयेण ६ विभूरसीत्यष्टाभिः प्रतिमन्त्रम् ७ एतानेवोपस्थानान्व्याघारणांश्चैके समामनन्ति ८ अनुदिशतीतरानध्वनामध्वपते नमस्ते अस्तु मा मा हिंसीरिति तंतमभिक्रामम् ९ सम्राडसि कृशानुरित्याहवनीयम् । परिषद्योऽसि पवमान इति बहिष्पवमानास्तावम् । प्रतक्वासि नभस्वानिति चात्वालम् । असंमृष्टोऽसि हव्यसूद इति शामित्रम् । समूह्योऽसि विश्वभरा इत्युत्करम् । ऋतधामासि सुवर्ज्योतिरित्यौदुम्बरीम् १०

इति चतुर्दशी कण्डिका

ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्माणम् । सदस्योऽसि मलिम्लुच इति सदस्यम् । समुद्रोऽसि विश्वभरा इति सदः । अजोऽस्येकपादिति शालामुखीयम् । अहिरसि बुध्निय इति प्राजहितम् । कव्योऽसि कव्यवाहन इति दक्षिणाग्निम् । आयुर्बृहत्तदशीय तन्मावतु तस्य नाम्ना वृश्चामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । विश्वायुर्वामदेव्यं तदशीय तन्मावतु तस्य नाम्ना वृश्चामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । आयुःपति रथंतरं तदशीय तन्मावतु तस्य नाम्ना वृश्चामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येतैश्च प्रतिमन्त्रं हविर्धानाग्नीध्रसदांसीति १ रौद्रेणानीकेनेति सर्वत्रानुषजति २ स्तृणीत बर्हिः प्र व्रतं यच्छतेति संप्रेष्यति ३ पूर्वस्मिन्वा स्तरण एतं संप्रैषं ब्रूयात् ४ अत्र स्तृणन्नुत्तरवेदिखरोपरवधिष्ण्यान्नाभिस्तृणीयात् ५ अत्रैकस्तनं व्रतं यजमानाय प्रयच्छति ६ अर्धव्रतमत्र वाजसनेयिनः समामनन्ति । अर्धमन्तरेणोत्तमे प्रवर्ग्योपसदौ ७

इति पञ्चदशी कण्डिका इति षष्ठः पटलः

अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति १ तस्य निरूढपशुबन्धवत्कल्पः २ षड्ढोता पश्विष्टिश्चाङ्गभूतेषु न विद्यते ३ आतिथ्याबर्हिस्तूष्णीमुपसंनह्यति ४ तांश्च परिधीन्पाशुक इध्मे ५ पात्रसंसादनकाले प्रचरणीं स्रुचं सप्तमीं प्रयुनक्ति ६ तस्या जुहूवत्कल्पः ७ आज्यग्रहणकाले प्रचरण्यामादितस्तूष्णीं चतुर्गृहीतं गृहीत्वा पाशुकान्याज्यानि गृह्णाति ८ प्रैतु ब्रह्मणस्पत्नीति प्रतिप्रस्थाता पत्नीमुदानयति ९ अथाहमनुकामिनीति पत्नी शालामुखीयमुपोपविश्य सुप्रजसस्त्वा वयमिति जपति १० उपस्थे ब्रह्मा राजानं कुरुते ११ समपिव्रतान्ह्वयध्वमिति संप्रेष्यति १२ यजमानस्यामात्यान्संह्वयन्ति १३ अध्वर्युं यजमानोऽन्वारभते । यजमानं पत्नी । पत्नीमितरे पुत्रभ्रातरः १४ अहतेन वाससामात्यान्संप्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहोति १५ त्वं सोम तनूकृद्भ्यो जुषाण इत्येताभ्यामर्धं गार्हपत्ये १६ आ सोमं ददते १७

इति षोडशी कण्डिका

आ ग्राव्ण आ वायव्यान्या द्रोणकलशम् । उत्पत्नीमानयन्ति । अन्वनांसि प्रवर्तयन्ति यायावरस्य यान्यपरस्मिन्गार्हपत्ये भवन्ति । अजमनुनयन्ति । इध्माबर्हिराज्यानि प्रोक्षणीरित्यनुहरन्ति १ शालामुखीये प्रणयनीयमिध्म-मादीप्य सिकताभिरुपयम्याग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति । प्रणीयमानाभ्यामनुब्रूहीति वा २ प्रथमायां त्रिरनूक्तायामयं नो अग्निर्व-रिवः कृणोत्वित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभिप्रव्रजन्ति ३ आग्नी-ध्रीयेऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्धमाज्यशेषस्य जुहोति ४ ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उपवासयति ५ उत्तरेणाग्नीध्रीयमाहवनीयं गत्वोरु वि-ष्णो विक्रमस्वेति सर्वमाज्यशेषं जुहोति ६ हुतेऽमात्याः प्रदक्षिणमावृत्य यथेतमुपावर्तन्ते ७ सोमा जिगाति गातुविदित्यपरया द्वारा हविर्धानं रा-जानं प्रपादयति । पूर्वया गतश्रियः ८ पूर्वया यजमानः प्रपद्यते ९ द-क्षिणस्य हविर्धानस्य नीडे पूर्ववत्कृष्णाजिनास्तरणं राज्ञश्चासादनम् १०

इति सप्तदशी कण्डिका

अथैनं यजमानो देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोम इति १ ए-तत्त्वं सोम देवो देवानुपागा इत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षि-णमावृत्य नमो देवेभ्य इति प्राचीनमञ्जलिं कृत्वा स्वधा पितृभ्य इति दक्षि-णेदमहं निर्वरुणस्य पाशादित्युपनिष्क्रम्य स्वरभिव्यख्यमिति प्राङ् प्रेक्षते । सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते । वैश्वानरं ज्योतिरित्याहव-नीयम् २ अत्र यजमानोऽवान्तरदीक्षां विसृजते ३ अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसीत्याहवनीयमुपतिष्ठते । एतेनैवास्मिन्समिधमादधातीति वाज-सनेयकम् ४ वितरां मेखलां विस्त्रंसते । वितरां मुष्टी कर्षते ५ अत्र दण्डप्रदानमेके समामनन्ति ६ स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्यां स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति मुष्टी विसृजते ७ स्वाहा वा विवाते विसृज इति वाचम् ८ निवर्तते व्रतम् ९ सोमान्हविःशेषानिति सुत्येऽहनि भक्षयति १० उत्तरेणाहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति । दक्षिणमिध्ममुत्तरं बर्हिः ११

इत्यष्टादशी कण्डिका

प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते १ स्तरणकालेऽपरेणोत्तरवेदिं बर्हिः स्तृणाति २ स्तरणमन्त्रोऽभ्यावर्तते ३ आज्यानां सादनादि पाशुकं कर्म प्रतिपद्यते समानमा प्रवरात् ४ दैवं च मानुषं च होतारौ वृत्वाश्रावमाश्रावमृतुप्रैषादिभिः सौमिकानृत्विजो वृणीते ५ अपिसृज्य तृणमस्फ्य उत्तरान् ७ अग्निमाग्नीध्रादित्याग्नीध्रम् । अश्विनाध्वर्यू आध्वर्यवादित्यध्वर्यू । मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति मैत्रावरुणम् । इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् । मरुतः पोत्रादिति पोतारम् । ग्नावो नेष्ट्रादिति नेष्टारम् । अग्निर्दैवीनां विशां पुरएतायं यजमानो मनुष्याणां तयोर्नावस्थूरि गार्हपत्यं दीदयच्छतं हिमा द्वा यू राधांसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति यजमानम् ८ अयं सुन्वन्यजमानो मनुष्याणामिति वा ९ सवनीये वरणमेके समामनन्ति । तत्र सुन्वन्निति ब्रूयात् १० सर्वत्रोपांशु नामग्रहणम् । मानुष इत्युच्चैः ११

इत्येकोनविंशी कण्डिका इति सप्तमः पटलः

प्रवृतःप्रवृतः प्रवृतहोमौ जुहोति जुष्टो वाचो भूयासमृचा स्तोमं समर्धयेत्येताभ्याम् १ दिवा प्रयाजैः प्रचर्यास्तंयन्तमनूयाजैरुपासते २ हुतायां वपायां मार्जयित्वा सुब्रह्मण्य पितापुत्रीयां सुब्रह्मण्यामाह्वयेति संप्रेष्यति ३ पितापुत्रीयैवात ऊर्ध्वं सुब्रह्मण्या भवति ४ आहूतायां वसतीवरीः कुम्भेन गिरिभिदां वहन्तीनां प्रत्यङ्तिष्ठन्गृह्णाति ५ नान्तमा वहन्तीरतीयात् ६ छायायै चातपतश्च संधौ गृह्णाति ७ यद्यभिच्छायां न विन्देदात्मनो वृक्षस्य कूलस्य वा छायायाम् ८ प्रतीपमुपमारयन्हविष्मतीरिमा आप इति गृह्णाति ९ यस्यागृहीता अभिनिम्रोचेत्सुवर्न घर्मः स्वाहेति पञ्चार्काहुतीर्हुत्वा वरे दत्त उल्कामुपरिष्टाद्धारयमाणो गृह्णीयात् । हिरण्यं वावधाय १० यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् ११ सोमयाजी बहुयाजी भवतीति विज्ञायते १२ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीत्यपरेण शालामुखीयमुपसादयति । सुम्नाय सुम्निनीः सुम्ने मा धत्तेति सर्वेषु वसतीवरीणां सादनेषु यजमानो जपति । अग्नीषोमीयस्य पशुपुरोडाशस्य पात्रसंसादनादि कर्म प्रतिपद्यते १३ न यजमानोऽग्नीषोमीयस्याश्नाति । अश्नीयाद्वा

१४ न स्वरुं जुहोति । न हृदयशूलमुद्वासयति । एवं सवनीये १५ पत्नीसंयाजान्तोऽग्नीषोमीयः संतिष्ठते १६

इति विंशी कण्डिका

निशायां वसतीवरीः परिहरत्यन्तर्वेद्यासीने यजमाने पत्न्यां च १ नादीक्षितमभिपरिहरेत् २ सव्येंऽसेऽत्याधायापरेण प्राजहितं परिक्रम्य पूर्वया द्वारोपनिर्हृत्य दक्षिणेन वेदिं गत्वा दक्षिणेन मार्जालीयं धिष्णियं परीत्य दक्षिणस्यामुत्तरवेदिश्रोण्यां सादयतीन्द्राग्नियोर्भागधेयी स्थेति ३ दक्षिणेऽंसेऽत्याधाय यथेतं गत्वा पूर्वया द्वारोपनिर्हृत्योत्तरेण वेदिं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्योत्तरस्यामुत्तरवेदिश्रोण्यां सादयति मित्रावरुणयोर्भागधेयी स्थेति ४ सव्ये ऽंसे त्याधाय यथेतं गत्वापरेणाग्नीध्रीयं धिष्णियमुपसादयति विश्वेषां देवानां भागधेयी स्थेति ५ यज्ञे जागृतेति सन्ना अभिमन्त्रयते ६ अत्र प्रतिप्रस्थाता पयस्यार्थं सायंदोहं दोहयति ७ अध्वर्युः संप्रेष्यति या यजमानस्य व्रतधुक्तस्या आशिरं कुरुत या पत्नियै तस्यै दधिग्रहाय या घर्मधुक्तस्यै दधिघर्माय तप्तमनातक्तं मैत्रावरुणाय शृतातङ्क्यं दधि कुरुतादित्यग्रहाय सुब्रह्मण्य सुब्रह्मण्यामाह्वय न सदस्युपवस्तवा इति ८ संप्रैषवत्कुर्वन्ति ९ अत्र सवनीयस्य सवनीयानामितीध्माबर्हिः संनह्यति १० न वा बर्हिः । प्रस्तरमेव ११ आग्नीध्रे हविर्धाने वा यजमानं जागरयन्ति । प्राग्वंशे पत्नीम् १२ आग्नीध्र एतां रात्रिमृत्विजो वसन्ति १३ यजमानो राजानं गोपयति गोपयति १४

इत्येकविंशी कण्डिका इत्यष्टमः पटलः

इत्येकादशः प्रश्नः

महारात्रे बुद्ध्वाग्ने नयेत्याग्नीध्रमभिमृशति १ इदं विष्णुर्विचक्रम इति हविर्धानम् । अग्न आयूंषि पवस इति स्रुचः । आ वायो भूष शुचिपा इति वायव्यानि । आ घा ये अग्निमिन्धत इति सदः २ प्रजापतिर्मनसान्धोऽच्छेत इति त्रयस्त्रिंशतमाग्नीध्रे यज्ञतनूर्जुहोति । प्रथमेन मन्त्रेण हुत्वा पूर्वंपूर्वमनुद्रुत्योत्तरेणोत्तरेण जुहोति ३ प्रादेशमात्राण्यूर्ध्वसानून्युपरिष्टादासेचनवन्ति मध्ये संनतानि वायव्यानि भवन्ति ४ तेषां यान्यनादिष्टवृक्षाणि

वैकङ्कतानि स्युः । यो वा यज्ञियो वृक्षः फलग्रहिः ५ को वो युनक्ति स वो युनक्त्विति खरे पात्राणि प्रयुनक्ति यान्यनाम्नातमन्त्राणि भवन्ति ६ अ- ग्निर्देवतेति दक्षिणे ऽंसे उपांशुपात्रम् ७ सोमो देवतेत्युत्तरमन्तर्यामस्य ८ बृहन्नसीति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम् ९ तमपरेण प्रत्यञ्चि द्विदेवत्यपात्राणि १० इन्द्रो देवतेति परिस्रगैन्द्रवायव- स्य । बृहस्पतिर्देवतेत्यजगावं मैत्रावरुणस्य । अश्विनौ देवतेति द्विस्र- क्त्याश्विनस्य ११ तान्यपरेण प्रबाहुक्शुक्रामन्तिनोः पात्रे । सूर्यो देवतेति दक्षिणं बैल्वं शुक्रस्य । चन्द्रमा देवतेत्युत्तरं वैकङ्कतं मन्थिनः १२ ते अपरेण प्रबाहुगृतुपात्रे आश्वत्थे अश्वशफबुध्ने उभयतोमुखे । दक्षिणमध्वर्योः । उत्तरम् प्रतिप्रस्थातुः १३ विश्वे देवा देवतेति दक्षिणस्यां श्रोण्यामाग्रयण- स्थालीम् । इन्द्रो देवतेत्युत्तरस्यामुक्थ्यस्थालीम् । उक्थ्यपात्रं च तस्या उत्तरम् १४ स्थाल्यावन्तरेण त्रीण्युदञ्चयतिग्राह्यपात्राणि । आग्नेयमैन्द्रं सौर्यमिति १५

इति प्रथमा कण्डिका

उत्तरेऽंसे दधिग्रहपात्रमौदुम्बरं चतुःस्रक्ति १ एवरुपमेवांश्वदाभ्ययोः २ यदि सोमग्रहं गृह्णीयादेतदेव विभवेत् ३ एतस्यैव हविर्धानस्याग्रेणोपस्त- म्भनमादित्यस्थालीम् । आदित्यपात्रं च तस्या उत्तरम् ४ पृथिवी देव- तेत्युत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीम् ५ खरे षोड- शिपात्रं खादिरं चतुःस्रक्ति यदि षोडशी ६ मध्ये परिप्लवां यथा स्रुगद- ण्डैवम् ७ यथावकाशं दश चमसान्नैय्यग्रोधान्रौहीतकान्वा त्सरुमतोऽत्स- रुकान्वा ८ दशैव चमसाध्वर्यवः ९ युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्याधस्तात्पश्चादक्षं द्रोणकलशं सदशापवित्रम् १० त- स्य वायव्यैर्वृक्षनियोगः ११ युनज्मि वायुमन्तरिक्षेण ते सहेत्युत्तरस्य ह- विर्धानस्योपरिष्टान्नीड आधवनीयम् । युनज्मि वाचं सह सूर्येण त इति प्रधुर पूतभृतम् १२ एतस्यैव हविर्धानस्याधस्तात्पश्चादक्षं त्रीनेकधनान्घटान् । पञ्च सप्त नवैकादश वा १३ यस्मिन्मिमीते तस्याधिषवणचर्म खरं परिकृत्तं चतुष्पुटमुपरिष्टादासेचनवत् १४ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवमि- त्यधिषवणचर्म प्रोक्ष्य रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवानिति ग्राव्णो रक्षो-

हा त्वा वलगहा वैष्णवमास्तृणामीत्यधिषवणफलकयोरुत्तरलोमास्तीर्य रक्षोघ्नो वो वलगघ्नः संसादयामि वैष्णवानिति तस्मिंश्चतुरो ग्राव्णः प्रादेशमात्रानूर्ध्वसानूनाहननप्रकारानश्मनः संसादयति । उपरं प्रथिष्ठं मध्ये पञ्चमम् १५ तमभिसंमुखा भवन्ति १६

इति द्वितीया कण्डिका

स्थवीयांसि मुखानि १ अपां क्षया ऋतस्य गर्भा भुवनस्य गोपाः श्येना अतिथयः पर्वतानां ककुभः प्रयुतो न पातारः । वग्नुनेन्द्रं ह्वयत घोषेणामीवांश्चातयत । युक्ता स्थ वहत स्वर्गं लोकं यजमानमभिवहतेति सन्नानभिमन्त्र्याग्नीषोमीयवत्सवनीयपात्राणि प्रयुनक्ति । अग्नीषोमीय-वदाज्यानि गृह्णाति २ अथैकेषाम् । प्राग्वंशेऽग्नीषोमीयस्याज्यानि गृह्णाति । आग्नीध्रे सवनीयस्य । उत्तरवेद्यामनूबन्ध्यायाः ३ अपरेणोत्तरवेदिं सवनीयस्यानूबन्ध्यायाश्चाज्यानि गृह्णातीत्येके ४ यानि काष्ठानि तदहरभ्याधास्यन्स्यात्तानि सहेध्मेन प्रोक्षेत् ५ समानमा स्रुचां सादनात् ६ युनज्मि तिस्रो विपृचः सूर्यस्य त इति स्रुचः सन्ना अभिमन्त्रयते ७ अत्र सौमिकानां पात्राणां संसादनमेके समामनन्ति ८ आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयात् ९ पञ्चहोतारं चाग्नीध्रे स्वर्गकामस्य १० नित्यवदेके समामनन्ति ११ मध्येऽग्नेराज्याहुतीः पश्वाहुतीः पुरोडाशाहुतीरिति जुहोति । अभितः सोमाहुतीः १२ अत्र राजानमन्तरेषे ग्रावसूपावहरति हृदे त्वा सोम राजन्नित्येताभ्याम् १३ पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाकमुपाकरोति १४ प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि ब्रह्मन्वाचं यच्छ प्रतिप्रस्थातः सवनीयान्निर्वप सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति १५ सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेत्येके समामनन्ति १६ मनसा ते वाचं प्रतिगृणामीत्यध्वर्युर्होतारमाह १७ अत्र प्रतिप्रस्थाता सवनीयानां पाणिप्रक्षालनादि कर्म प्रतिपद्यते १८ यथार्थं पात्राणि प्रयुनक्ति १९

इति तृतीया कण्डिका

द्वे भर्जनार्थे कपाले अष्टौ पुरोडाशकपालानि । एकादश माध्यंदिने । द्वादश तृतीयसवने १ सर्वानैन्द्रानेकादशकपालाननुसवनमेके समामनन्ति

२ प्रातर्दोहपात्राणीति ३ प्राग्वंशे प्रतिप्रस्थाता सवनीयान्निर्वपति ४ सर्वे यवा भवन्ति लाजार्थान्परिहाप्य ५ इन्द्राय हरिवते धाना इन्द्राय पूषण्वते करम्भं सरस्वत्यै भारत्यै परिवापमिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्यामिति ६ निरुप्तेष्वन्वोप्येदं देवानामित्येतदादि कर्म प्रतिपद्यते ७ अवहननकाले लाजार्थान्परिहाप्येतरानवहन्ति ८ कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण धानार्थं लाजार्थं च कपाले अधिश्रयति ९ अधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानोप्य धानाः करोति । व्रीहीनोप्य लाजान्करोति १० पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोति ११ उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति । अर्धाः पिष्टानामावृता सक्तून्करोति १२ मन्थं संयुतं करम्भ इत्याचक्षते । लाजान्परिवाप इति १३ नखैर्लाजेभ्यस्तुषान्संहरति १४ नखेषूलूखलधर्मान्मुसलधर्मांश्च करोति १५

इति चतुर्थी कण्डिका इति प्रथमः पटलः

यत्राभिजानात्यभूदुषा रुशत्पशुरिति तत्प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं म इति १ अपरं चतुर्गृहीतं गृहीत्वा संप्रेष्यत्यप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्वेति २ प्रेह्युदेहीति नेष्टा पत्नीमुदानयति । एह्युदेहीति वा । पान्नेजनीं स्थालीं धारयमाणाम् ३ तीर्थेनाभिप्रव्रजन्ति ४ यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयुस्तदपोऽध्वर्युर्वहन्तीनां गृह्णाति ५ यदि न शृणोति बधिरो ह भवति वाचो ह छिद्यते ६ यदि दूरे स्युः प्रत्युदूह्य गृह्णीयात् ७ देवीराप इति तृणमन्तर्धायाभिजुहोति ८ यदि वा पुरा तृणं स्यात्तस्मिञ्जुहुयात् ९ कार्षिरसीति दर्भैराहुतिमपप्लाव्य समुद्रस्य वोऽक्षित्या उन्नय इत्यभिहुतानां मैत्रावरुणचमसेन गृह्णाति १० सोमस्य त्वा मूजवतो रसं गृह्णामीत्येकधनाः ११ पत्नी पन्नेजनीर्गृह्णाति प्रत्यङ्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति १२ प्रेह्युदेहीति नेष्टा पत्नीमुदानयति । एह्युदेहीति वा १३ अपरेण नेष्ट्रीयं पत्नी पन्नेजनीः सादयति प्रत्यङ्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्य इति १४ ता एवमेवाच्छावाकं सीदन्तमनूपसादयति १५

इति पञ्चमी कण्डिका

होतृचमसेन वसतीवरीभ्यो निषिच्योपरि चात्वाले होतृचमसं मैत्रावरुणच-मसं च संस्पर्श्य वसतीवरीर्व्यानयति १ समन्या यन्तीत्यभिज्ञाय होतृचम-सान्मैत्रावरुणचमस आनयति । मैत्रावरुणचमसाद्धोतृचमसे । एतद्वा विपरीतम् २ उपरि चात्वाले धार्यमाणा उभयीः प्रचरण्या समनक्ति सं वोऽनक्तु वरुणः समिन्द्रः सं पूषा सं धाता सं बृहस्पतिः । त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधात्विति । यथायथं धुरो धुर्भिः क-ल्पन्तामिति ३ अध्वर्योऽवेरपा इति होताध्वर्युं पृच्छति ४ उतेमनन्नमुरिति प्रत्युक्त्वा प्रचरणीशेषात्क्रतुकरणं जुहोति यमग्ने पृत्सु मर्त्यमिति ५ तदभावे चतुर्गृहीतेन ६ यद्यग्निष्टोमो जुहोतीत्युक्तम् ७ अथैकेषाम् । यद्यग्निष्टोमो जुहोति । यद्युक्थ्यः परिधौ निमार्ष्टि । यदि षोडशी हुत्वा परिधौ लेपं निमृज्य द्रोणकलशं रराटीं चोपस्पृशति । न जुहोति नोपस्पृशति वाजपेये ऽतिरात्रे च । एतद्यजुर्वदन्समुद्यैव प्रपद्यते ८ अपरया द्वारा हविर्धानमपः प्रपादयति । पूर्वया गतश्रियः ९ पूर्वया यजमानः प्रपद्यते १० दक्षिणस्य हविर्धानस्य प्रधुरे प्रचरणीं सादयति ११

इति षष्ठी कण्डिका

यं कामयेत पराङकः स्यादिति तं प्रचरण्योपस्पृशेत् १ एतस्यैव हविर्धान-स्याधस्तात्पुरोऽक्षं मैत्रावरुणचमसम् । उत्तरस्यां वर्तन्यां पुरश्चक्रं होतृचम-सम् । उत्तरस्य हविर्धानस्याधस्तात्पुरोऽक्षं वसतीवरीः । पश्चादक्षमेक-धनाः २ एतद्वा विपरीतम् ३ अपो यजमानोऽनुप्रपद्यते । यश एवैनमृ-च्छतीति विज्ञायते ४ अत्र दधिग्रहेण चरति ५ औदुम्बरेण गृह्णाति ६ उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति दधि गृहीत्वापेन्द्र द्विषतो मन इति हरति । प्राणाय त्वापानाय त्वेति जुहोति ७ दधिग्रहो नित्यः काम्यश्च । काम्यावितरौ ८ आज्यग्रहं गृह्णीयात्तेजस्का-मस्येत्युक्तम् ९ यदि सोमग्रहं गृह्णीयादेकग्रहायाप्तं राजानमुपरे न्युप्य वस-तीवरीभिरुपसृज्यावीवृधं वो मनसा सुजाता इत्यभिमन्त्रय तिस्रो यह्वस्य समिधः परिज्मनो देवा अकृण्वन्नुशिजो अमर्त्यवे । तासामेकामदधुर्मर्त्ये

भुजं लोकमिद्द्वे उप जामी ईयतुरिति सोमकरण्याभिषुणोति १० ग्रा मा-
स्कानिति प्रथमप्लुतमंशुमभिमन्त्रयते । द्रप्सश्चस्कन्देति विप्रुषः ११ हिर-
ण्यपाणिरभिषुणोति गृह्णाति जुहोतीत्यत्यन्तप्रदेशः १२ तिस्रो यह्वस्येत्येत-
द्वर्जं च १३ तं हुत्वा सदसि प्रत्यङ्मुखो भक्षयति भक्षेहीति यथालिङ्गम् १४
ग्रनधिकृतो वा सोमधर्मैर्दधिग्रहविकारत्वात् १५ यदन्यत्सोमकरण्यास्ते
सोमधर्माः १६ ग्रंशुमदाभ्यं वा प्रथमं गृह्णाति १७ शुक्रं ते शुक्रेण गृह्णा-
मीति दध्नः पयसो निग्राभ्याणां वा १८ उपनद्धस्य राज्ञस्त्रीनंशून्प्रवृहति १९

इति सप्तमी कण्डिका

वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम् १ तैरेनं चतुराधूनोति ।
पञ्चकृत्वः सप्तकृत्वो वा । मान्दासु त इत्येतान्प्रतिविभज्य २ ग्रास्मिन्नुग्रा
ग्रचुच्यवुरित्यादाय ककुहं रूपमिति हरति । यत्ते सोमादाभ्यं नाम जागृ-
वीति जुहोति ३ ग्राधवनानंशून्प्रज्ञातान्निधायोशिक्त्वं देव सोम गायत्रेण
छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपिसृजति ४ ग्रंशुं गृह्ण-
न्नेकग्रहायाप्तं राजानमुपरे न्युप्य सकृदभिषुत्य वामदेव्यं मनसा गायमानो
ऽनवानं गृह्णाति । वामदेव्यस्य वर्चा कया नश्चित्र ग्राभुवदिति ५ परा-
चीनेन ग्राह्यः प्राणतापानता वा प्राण्यापान्य व्यनता वा ६ यदि व्यवानेदा
नः प्राण एतु परावत इति शतमानं हिरण्यमभिव्यनेयातामध्वर्युर्यजमानश्च
७ ग्रथैनौ प्रतिप्रस्थाता हिरण्येन संस्पर्शयत्यद्भिश्च प्रत्युक्षति ८ इन्द्राग्नी
मे वर्चः कृणुतामित्यध्वर्युरप उपस्पृश्य दधन्वे वा यदीमन्वित्यनिरुक्तयाप्रा-
जापत्यया प्राण्यापान्य व्यनञ्जुहोति ९ यदि न शक्नुयाद्ग्रहीतुं होतुं वा वरे
दत्ते गृह्णीयाज्जुहुयाद्वा १० ग्रंशौ द्वादश प्रथमगर्भाः पष्ठौहीर्ददाति कृत्त्यधी-
वासं च । एवमदाभ्ये ११ भ्रातृव्यवतादाभ्यो ग्रहीतव्यः । बुभूषतांशुः
१२ तौ न सर्वत्र ग्रहीतव्यौ । वाजपेये राजसूये सत्त्रे सर्ववेदसे वा १३
योऽस्य सुप्रियः सुविचित इव स्यात्तस्य ग्रहीतव्यौ १४

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

उत्तरस्यां वर्तन्यां होतृचमसं वसतीवरीभिरभिपूर्य निग्राभ्यासु यजमानं वा-
चयति निग्राभ्या स्थ देवश्रुत इति १ देवस्य त्वा सवितुः प्रसव इति ग्रा-

वाणमुपांशुसवनमादाय ग्रावास्यध्वरकृदित्यभिमन्त्रयते । तमाददानो वाचं यत्वाग्रयणं गृहीत्वा विसृजते २ अथैनमुपरे निधायांशुभिरभिमिमीते क्रयवत् ३ एतावन्नाना । इन्द्राय त्वा वृत्रघ्न इत्येतैः प्रतिमन्त्रम् ४ पञ्चकृत्वो यजुषा मिमीते । पञ्चकृत्वस्तूष्णीम् ५ नांशूनुपसमूहति ६ भूयांसं प्रातःसवनाय राजानं प्रकल्पयति । अल्पीयांसं माध्यंदिनाय ७ उपनह्य प्रत्यारोप्यैकग्रहायाप्तं राजानमुपरे न्युप्य होतृचमसेऽंशूनवधाय तस्मिन्ग्रावाणमुपांशुसवनमुपरि धारयंस्त्रिः प्रदक्षिणं परिप्लावयन्निग्राभमुपैति प्रागपागुदगधरागिति ८ यां भार्यां कामयेत तां मनसा ध्यायेदम्ब निष्वरेति । सा हैनं कामयते ९ श्वात्रा स्थ वृत्रतुर इति तासामेकदेशेनोपसृज्योपस्पृष्टस्य राज्ञः षडंशूनार्द्रान्संश्लिष्टानादाय चर्मणि निधाय यत्ते सोम दिवि ज्योतिरिति राजानमभिमन्त्रयते १०

इति नवमी कण्डिका

धिषणे वीडू इत्यधिषवणफलके १ अवीवृधं वो मनसा सुजाता इति राजानमेवाभिमन्त्र्य मा भेर्मा संविक्था इति ग्रावाणमुद्यम्यानागसस्त्वा वयमिन्द्रेण प्रेषिता उप वायुष्टे अस्त्वंशभूर्मित्रस्ते अस्त्वंशभूर्वरुणस्ते अस्त्वंशभूरहतः सोमो राजेति तृणमन्तर्धायाभिषुणोति २ यदि वा पुरा तृणं काष्ठं मूलं वा स्यात्तस्मिन्प्रहरेत् ३ अष्टौकृत्वोऽग्रेऽभिषुणोति ४ अथ प्रतिप्रस्थातोपांशुपात्रं धारयन्नपात्तानामुपरि द्वावंशू अन्तर्दधाति ५ तस्मिन्नभिषुतमध्वर्युरञ्जलिना गृह्णाति वाचस्पतये पवस्व वाजिन्निति ६ पवित्रमुपयामः सादनं च न विद्यते ७ एष प्रथमः पर्यायः । एवं विहितो द्वितीयस्तृतीयश्च ८ अपि वैकादशकृत्वो द्वितीयमभिषुणोति । द्वादशकृत्वस्तृतीयम् ९ द्विरादितोऽन्ततो वा निग्राभोपायनमुपसर्गश्च १० होतृचमसीयानंशूनुत्तमे पर्यायेऽभिषुणोति ११ अवशिष्टानां प्रतिप्रस्थाता द्वौद्वावंशू अन्तर्दधाति १२ स्वांकृतोऽसीत्यध्वर्युर्ग्रहमादायोर्वन्तरिक्षमन्विहीति दक्षिणेन होतारमतिक्रामति १३ येन वा होता प्रतिपादयेत् १४ मनस्त्वाष्ट्विति दक्षिणतोऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्य १५

इति दशमी कण्डिका

स्वाहा त्वा सुभवः सूर्यायेति दक्षिणतः प्राञ्चमृजुं संततं दीर्घं हुत्वा देवेभ्य-स्त्वा मरीचिपेभ्य इति मध्यमे परिधौ लेपं निमार्ष्टि १ यं द्विष्यात्तस्य प्रह्वो जुहुयात् २ यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यभ्यन्तरं पात्रस्यावमृ-ज्याभ्यन्तरं परिधेर्नीचा हस्तेन निमृज्यात् ३ यदि कामयेतावर्षुकः स्यादि-ति बाह्यतः पात्रस्योर्ध्वमुन्मृज्य बाह्यतः परिधेरुत्तानेन हस्तेनोर्ध्वमुन्मृज्यात् ४ सर्वमाग्रयणस्थाल्यां संपातमवनीयैष ते योनिः प्राणाय त्वेति रिक्तं पात्र-मायतने सादयित्वा तस्मिन्नंशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात् ५ अथैतान्यभिचरतः ६ उपांशुं गृहीत्वामुष्य त्वा प्राणे सादयामीति सादयि-त्वा देवस्य त्वा सवितुः प्रसव इत्यादायामुष्य त्वा प्राणमपिदधामीति ह-स्तेनापिधायामुं जह्यथ त्वा होष्यामीति ब्रूयात् ७ यदि दूरे स्यादा तमि-तोस्तिष्ठेत् ८ प्रहर्षिणो मदिरस्य मदे मृषासावस्त्विति जिह्मस्तिष्ठन्हुत्वा-मुष्य त्वा प्राणे सादयामीति सादयेत् ९ यो वस्त्रे बाहावुरसि वांशुरा-श्लिष्टस्तमभिचरतो जुहोतीत्येके देवांशो यस्मै त्वेडे तत्सत्यमपरिप्लुता भ-ङ्ग्येन हतोऽसौ फडिति १० यत्ते सोमादाभ्यं नाम जागृवीत्युपांशुपावना-नामनुसवनं द्वौद्वावंशू महाभिषवेष्वपिसृजति ११

इत्येकादशी कण्डिका इति तृतीयः पटलः

अदाभ्यांशुमुपांशुपावनौ चापिसृज्य सर्वेऽध्वर्यवो दिग्भ्यो महाभिषवमभि-षुण्वन्ति १ पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थाता पश्चान्नेष्टोत्तरत उन्नेता । पश्चादध्वर्युः पुरस्तान्नेष्टेत्येके २ उपरे राजानं न्युप्य होतृचमसेंऽशूनवधाये-त्येतदाद्योपसर्गादुपांशुसवनवर्जम् । तूष्णीमितरैर्ग्रावभिरभिषुण्वन्ति ३ एवं द्वितीयं तृतीयं चोपसृज्याभिषुण्वन्ति ४ अभिषुतमध्वर्युरञ्जलिना सं-सिञ्चति ५ तमुन्नेतान्तरेषेणोद्धृत्योत्तरत आधवनीयेऽवनयति ६ एष एवापां सोमस्य च पन्थाः ७ एष प्रथमः पर्यायः ८ त्रिपर्यायः १० संभृत्य रा-जानमुपरे ग्राव्णः संमुखान्कृत्वा प्रपीड्यर्जीषं मुखेषूपोहति । घासमेभ्यः प्रयच्छतीति विज्ञायते ११ तेषूद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीची-नदशं पवित्रं वितन्वन्ति १२ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशतेति वित-त्यमानमभिमन्त्रयते यजमानः १३

इति द्वादशी कण्डिका

पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन्होतृचमसेन धारां स्रावयति १ उदचनेनोन्नेताधवनीयाद्धोतृचमस आनयति २ संतता धारा स्रावयितव्या । कामो हास्य समर्धुको भवतीति विज्ञायते ३ यं द्विष्यात्तस्य विच्छिन्द्यात् ४ धाराया अन्तर्यामं गृह्णाति । सर्वांश्चातो ग्रहाना ध्रुवात् ५ समानब्राह्मणावुपांश्वन्तर्यामौ साभिचरणिकौ ६ एतावन्नाना । उपयामगृहीतोऽस्यन्तर्यच्छेति गृहीत्वोत्तरेण होतारमतिक्रामति । येन वा होता प्रतिपादयेदुत्तरतोऽवस्थायोत्तरं परिधिसंधिमन्ववहृत्योत्तरार्धे जुहोति ७ विपरीतौ देशावेके समामनन्ति ८ असर्वमाग्रयणस्थाल्यां संपातमवनीयैष ते योनिरपानाय त्वेत्यरिक्तं पात्रमायतने सादयित्वा व्यानाय त्वेति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम् ९ यं कामयेत प्रमायुकः स्यादित्यसंस्पृष्टौ तस्येत्युक्तम् १० नानुदिते सूर्य उपांश्वन्तर्यामौ जुहुयात् ११ यदि त्वरेतानुदित उपांशुं जुहुयादुदितेऽन्तर्यामम् १२ उभावनुदिते होतव्यावित्येके १३

इति त्रयोदशी कण्डिका इति चतुर्थः पटलः

यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामाग्रयणाग्रान् १ यद्युभयसामा याथाकामी २ अपि वैन्द्रवायवाग्रानेव ३ ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति । काम्यानि ग्रहाग्राणि ४ यान्प्राचीनमाग्रयणादित्युक्तम् ५ यं काम्यमैन्द्रवायवात्पूर्वं गृह्णीयान्न सादयेत् ६ ऐन्द्रवायवस्य सादनमनु साद्यते ७ ऐन्द्रवायवं गृह्णाति ८ आ वायो भूष शुचिपा इत्यनुद्रुत्योपयामगृहीतोऽसि वायवे त्वेति गृहीत्वापयम्येन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति गृहीत्वा पवित्रदशाभिः परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति सादयति ९ सर्वान्ग्रहान्पवित्रदशाभिः परिमृज्यैष ते योनिरिति यथादेवतं यथायतनं सादयति १० एतदर्थं वा द्वितीयं पवित्रं दशावत्स्यात् ११ अयं वां मित्रावरुणेति मैत्रावरुणं गृहीत्वा राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो

विश्वाहा धत्तमनपस्फुरन्तीमिति शृतशीतेन पयसा श्रीत्वैष ते योनिर्ऋतायुभ्यां त्वेति सादयति १२ अयं वेनश्चोदयदिति शुक्रं गृहीत्वा हिरण्येन श्रीत्वैष ते योनिर्वीरतां पाहीति सादयति १३ शण्डाय त्वेति द्वेष्यस्य १४ तं प्रत्न-थेति मन्थिनं गृहीत्वा मनो न येषु हवनेषु जुह्वद्विपः शच्या वनुथो द्रवन्ता । आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्ताविति सक्तुभिः श्रीणा-त्यनभिध्वंसयन्नात्मानम् । इतरांश्च ग्रहान् १५ एष ते योनिः प्रजाः पाहीति सादयति १६

इति चतुर्दशी कण्डिका

मर्काय त्वेति द्वेष्यस्य १ यदि कामयेत यो ग्रामे तं ग्रामान्निरूहेयं यो ब-हिर्ग्रामात्तं ग्रामे कुर्यामितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उ-दूहामीति शुक्रमुदूह्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादया-मीति तस्मिन्मन्थिनं सादयेत् २ ये देवा दिवीत्युपरिष्टादुपयामया पुरस्ता-दुपयामेन वा यजुषा द्वाभ्यां धाराभ्यां स्थाल्याग्रयणं गृह्णाति ३ य आग्रय-णस्थाल्यां सोमस्तमन्यस्मिन्पात्र आनीय तां द्वितीयां धारां करोति ४ त्रिं-शत्त्रयश्चेति रुग्णवत्यर्चा भ्रातृव्यवतोऽभिचरतो वा गृह्णीयात् ५ विदद्यती सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्रियक्कः । अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गादिति वाभिचरतः ६ आग्रयणं गृहीत्वा त्रिर्हिङ्कृत्य वाचं विसृजते ७ सोमः पवते सोमः पवते सोमः पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्यै विशे पवतेऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवतेऽस्मै सु-न्वते यजमानाय पवते मह्यं ज्यैष्ठ्याय पवते । यथा देवेभ्योऽपवथा एवं मह्यं पवस्वेति त्रिरुद्वदति शनैरुच्चैरथ सूच्चैः ८ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा त्रीनग्निष्टोमेऽतिग्राह्यान्गृह्णाति । आग्नेयमैन्द्रं सौर्य-मिति ९ अग्न आयूंष्युत्तिष्ठंस्तरणिरिति ग्रहणसादनाः १० स्थाल्योक्थ्यं गृह्णाति । उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत इति ग्रहणसादनौ ११

इति पञ्चदशी कण्डिका

मूर्धानं दिवो अरतिं पृथिव्या इति स्थाल्या ध्रुवं पूर्णं गृह्णाति १ अल्पं गृह्णीयाद्यं कामयेत प्रमायुकः स्यादिति । उपर्यर्धं यं कामयेतोत्तरमायुरियादिति २ एष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्ये सादयेदायुष्कामस्य ३ तं राजपुत्रो गोपायत्यावनयनात् ४ यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छेदितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उत्खिदामीति ध्रुवमुत्खिद्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति तत्रैव पुनः सादयेत् ५ यदेवं कुर्यादायुः प्रजानां विचालयेत् । तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेत् ६ यधभिचरेइदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामीति ध्रुवं प्रवर्तयेत् ७ ध्रुवं त्वा ध्रुवक्षितिममुमा स्थानाच्च्यावयामीति वा व्यङ्गयेत् ८ अत्र धारा विरमति ९ प्रपीड्य पवित्रं निदधाति १० एकधनानां यथार्थं सर्वाश्च मैत्रावरुणचमसीया आधवनीयेऽवनीय पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तमसर्वं पूतभृत्यवनीयोपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेत् । इन्द्राय त्वेत्याधवनीयम् । विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतम् ११ ते पवमानग्रहाः १२ पुरस्तादुपयामाः सर्वे १३ पञ्चहोत्रा यजमानः सर्वान्ग्रहानभिमृशति १४ द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इत्येतैः प्रतिमन्त्रं वैप्रुषान्होमाञ्जुहोति १५ प्रथमं सर्वत्रानुषक्तमुत्तरांस्त्रीन्वहृताननुसवनमेके समामनन्ति १६ सप्तहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वोदञ्चः प्रह्वा बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति १७

इति षोडशी कण्डिका

अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः १ यद्यु वै स्वयं होता यजमानः स्यात्सर्पेदेव । औपगात्रं ह्यस्येति बृह्वचब्राह्मणं भवति २ त्सरन्त इव रेहाणा इव न्यङ्ङिव शीर्षाणि कृत्वा सर्पन्ति ३ मृग इव हि यज्ञः । पूर्वोऽध्वर्युर्बर्हिर्मुष्टिं धून्वन्सर्पति वागग्रेगा अग्र एत्विति गायत्रः पन्था वसवो देवतावृकेणापरिपरेण पथा स्वस्ति वसूनशीयेत् ४ चात्वालमवेक्षमाणाः स्तुवते । उत्तरे वा वेद्यंसे ५ अथाध्वर्युः स्तोत्रमुपाकरोति ६ सर्वेषु पवमानेष्वेवमुपाकरणः ८ असर्ज्यसर्जि वागसर्ज्यैन्द्रं सहोऽसर्ज्युपावर्तध्वमिति बर्हिर्भ्यामन्यानि पवमा-

नेभ्यः स्तोत्राण्युपाकरोति ९ तस्माद्ब्राह्मणेन बहिष्पवमान उपसद्यः । पवित्रं हि । यं द्विष्यात्तं बहिष्पवमानात्परिबाधेतेति विज्ञायते १० स्तूयमानं यजमान उपगायति । चत्वारोऽवरार्ध्या उपगातारः ११ नाध्वर्युः १२ वस्व्यै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्ताद्बहिष्पवमानाद्यजमानो जपति १३ दशहोतारं च व्याचष्टे । स्तूयमाने च दशहोतारं जपति १४ श्येनोऽसि गायत्रच्छन्दा इति मध्यमायां च स्तोत्रीयायामन्वारोहम् १५ द्वितीये पवमाने द्वितीयेन मन्त्रेण । तृतीये तृतीयेन १६ अथात्यन्तप्रदेशः । स्तुतस्य स्तुतमसीति स्तोत्रमनुमन्त्रयते । शस्त्रस्य शस्त्रमसीति शस्त्रम् १७ इन्द्रियावन्तो वनामह इत्युभयत्रानुषजति १८ स्तुतेऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोडाशाँ अलंकुर्विति १९ अथैकेषाम् । स्तुत उत्तिष्ठन्नाहाग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशुनेहीति २० संप्रैषवत्कुर्वन्ति २१

इति सप्तदशी कण्डिका इति पञ्चमः पटलः

आग्नीध्राद्धिष्ण्यान्विहरति १ अङ्गारैर्द्वे सवने । शलाकाभिस्तृतीयम् २ पांसुधिष्ण्येषु निवपति ३ तेनानुपूर्व्येण यथान्युप्ता भवन्ति ४ प्रचरण्यां पञ्चगृहीतं गृहीत्वा द्रोणकलशाच्च परिप्लवया राजानं पुरस्तात्प्रत्यङ्ङासीनो धिष्ण्यान्व्याघारयति तैरेव मन्त्रैः । तूष्णीं वा ५ आहवनीयमाग्नीध्रीयं होत्रीयं मार्जालीयमिति सोमेन । आज्येनेतरान् ६ यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततमनुपृष्ठ्यं बर्हिः स्तृणात्याहवनीयात् ७ वैष्णव्यर्चा पुनरेत्य यजमानो राजानमुपतिष्ठते विष्णो त्वं नो अन्तम इति ८ एतयैवाध्वर्युः पात्राणि संमृश्याश्विनं गृह्णाति ९ या वां कशेति ग्रहणसादनौ १० द्रोणकलशादधाराग्रहाः परिप्लवया गृह्यन्ते । वचनादन्यतः ११ त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति १२ ऐन्द्राग्नमुक्थ्ये । ऐन्द्रं षोडशिनि । सारस्वतमतिरात्रे १३ समभ्युच्चयवदेके समामनन्ति । आग्नेयमग्निष्टोम आलभते । ऐन्द्राग्नमुक्थ्ये द्वितीयम् । ऐन्द्रं वृष्णिं षोडशिनि तृतीयम् । सारस्वतीं मेषीं चतुर्थीमतिरात्रे १४ आ वपायाः कृत्वा हुतायां वपायां मार्जयित्वा प्रातःसवनाय संप्रसर्पन्ति म् १५ प्रस्रप्स्यन्तो ग्रहानवेक्षन्ते १६

द्वौ समुद्राविति पूतभृदाधवनीयौ १७ द्वे द्रधसी इति द्रोणकलशम् १८ परिभूरग्निमिति सर्वं राजानम् १९ प्राणाय म इत्युपांशुम् । अपानाय म इत्यन्तर्याममम् । व्यानाय म इत्युपांशुसवनम् । वाचे म इत्यैन्द्रवायवम् । दक्षक्रतुभ्यां म इति मैत्रावरुणम् । चक्षुर्भ्यां म इति शुक्रामन्थिनौ । श्रोत्राय म इत्याशिनम् । आत्मने म इत्याग्रयणम् । अङ्गेभ्यो म इत्युक्थ्यम् । आयुषे म इति ध्रुवम् । तेजसे मे वर्चोदा वर्चसे पवस्वेत्त्याज्यानि । पशुभ्यो मे वर्चोदा वर्चसे पवस्वेति पृषदाज्यम् । पुष्टचै मे वर्चोदाः पवध्वमिति सर्वान्ग्रहान् । स्तनाभ्यां मे वर्चोदौ वर्चसे मे पवेथामित्यृतुपात्रे । तेजसे म ओजसे म वर्चसे मे वीर्याय मे वर्चोदा वर्चसे पवस्वेत्येतैः प्रतिमन्त्रमतिग्राह्यान्षोडशिनमिति । विष्णोर्जठरमसीति द्रोणकलशम् । इन्द्रस्येत्याधवनीयम् । विश्वेषां देवानामिति पूतभृतम् २०

इत्यष्टादशी कण्डिका

कोऽसि को नामेत्याहवनीयम् १ सोम त्वां वृणीमह उद्गातारं नृचक्षसं पारया ण स्वस्तये । विश्वेभ्यो मे रूपेभ्य इति सर्वं राजानम् २ बुभूषन्नवेक्षेत । ब्रह्मवर्चसकाम आमयाव्यभिचरन्वा ३ शृतंकारैर्यजमानः सर्वान्ग्रहानुपतिष्ठते ४ शृतौ स्थः प्राणापानौ मे श्रीणीतमित्युपांश्वन्तर्यामौ । शृतोऽसि व्यानं मे श्रीणाहीत्युपांशुसवनम् । शृतोऽसि वाचं मे श्रीणाहीत्यैन्द्रवायवम् । शृतोऽसि दक्षक्रतू मे श्रीणाहीति मैत्रावरुणम् । शृतौ स्थश्चक्षुषी मे श्रीणीतमिति शुक्रामन्थिनौ । शृतोऽसि श्रोत्रं मे श्रीणाहीत्याश्विनम् । शृतोऽस्यात्मानं मे श्रीणाहीत्याग्रयणम् । शृतोऽस्यङ्गानि मे श्रीणाहीत्युक्थ्यम् । शृतोऽस्यायुर्मे श्रीणाहीति ध्रुवम् । शृतमसि तेजो म श्रीणाहीत्याज्यानि । शृतमसि पशून्मे श्रीणाहीति पृषदाज्यम् । शृता स्थ पुष्टिं मे श्रीणीतेति सर्वान्ग्रहान् । प्रजापतेर्जठरमसि शृतोऽसि स मा श्रीणाहीति द्रोणकलशम् । इन्द्रस्य जठरमसि शृतोऽसि स मा श्रीणाहीत्याधवनीयम् । विश्वेषां देवानां जठरमसि शृतोऽसि स मा श्रीणाहीति पूतभृतम् । शृतस्त्वं शृतोऽहं शृतो मे प्राणः शृतो मेऽपानः शृतो मे व्यानः शृतं मे चक्षुः शृतं मे श्रोतं शृता मे वाक् शृतो म आत्मा शृतं मे हविः शृतो मे सोमः शृता मे ग्रहाः । इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य

त्वाभ्यक्षरन्धारा ऋतस्य सादने । वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे । वृष्णस्ते वृष्ण्यं शवो वृषा वने वृषा मदे । स त्वं वृषन्वृषेदसि । अश्वो न चक्रदो वृषा सं गा इन्द्रो समर्वतः । वि नो राये दुरो वृधीति सर्वं राजानम् ५ अग्निः पवित्रं स मा पुनातु । सोमः पवित्रं स मा पुनातु । सूर्यः पवित्रं स मा पुनातु । उपहूता गाव उपहूतोऽहं ग-वामित्येतैर्यथालिङ्गमुपस्थाय स्फ्यः स्वस्तिरित्युत्करे वेदिकरणानि परास्यो-पतिष्ठते ६ उप मा द्यावापृथिवी इति द्यावापृथिवी । उपास्ताव इति वहिष्पवमानास्तावम् ७

इत्येकोनविंशी कण्डिका

कलश इति कलशम् । सोम इति सोमम् । अग्निरित्यग्निम् । उप देवा इति देवान् । उप यज्ञ इति यज्ञम् । उप मा होत्रा इति होत्रकान् १ ह्व-येतां ह्वयतां ह्वयन्तामिति यथालिङ्गं सर्वत्रानुषजति २ नमोऽग्नये मखघ्न इ-त्याहवनीयम् । नमो रुद्राय मखघ्न इत्याग्नीध्रीयम् । नम इन्द्राय मखघ्न इति होत्रीयम् ३ दृढे स्थः शिथिरे समीची इति द्यावापृथिवी उपतिष्ठते । सूर्यं वायुमग्निं यमं सरस्वतीं सदसो द्वाराविति ४ पातं पात्विति यथालि-ङ्गं सर्वत्रानुषजति ५ द्रष्ट्रे नम इति प्रस्त्रप्स्यञ्जपति । उपद्रष्ट्रे नम इति प्र-सृप्य ६ अग्रेण ब्रह्मसदनं यजमानायतनम् । पूर्वेण वा ७ नमः सदस इति सदो नमः सदसस्पतय इति ब्रह्माणं नमः सखीनां पुरोगाणामित्यृत्विजो नमो दिवे नमः पृथिव्या इति द्यावापृथिवी उपस्थायाहे दैधिषव्येत्यायत-नात्तृणं निरस्योन्निवत उदुद्वतश्च गेषमित्युपविशति ८ पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति ९ आगन्त पितरः पितृमानिति दक्षिणार्धं परे-क्षते १० उभावेतानि जपतोऽध्वर्युर्यजमानश्च । अपि वा यजमान एव ११ अत्र प्रतिप्रस्थाता सवनीयानासादयति १२ तैरध्वर्युः प्रचरति १३ सर्वेषां पुरोडाशानां जुह्वां दैवतानि समवद्यति । उपभृति सौविष्टकृतानि १४ प्रातः प्रातः सावस्येन्द्राय पुरोडाशानामनुब्रूहि प्रातः प्रातःसावस्येन्द्राय पुरो-डाशानां प्रेष्येति संप्रैषौ । प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामवदीय-मानानामनुब्रूहि प्रातः प्रातः सावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति वा १५ अग्नयेऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतः संपरिषो १६ प्राशित्रमवदायेडां न य-

जमानभागम् १७ होत्र इडां हृत्वा हविर्धानं गच्छन्संप्रेष्यति वायव इन्द्र-वायुभ्यामनुब्रूहीति १८ उपयामगृहीतोऽसि वाक्षसदसीत्यादित्यपात्रेण प्र-तिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयति १९ ऐन्द्रवायवमादाथाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य द-क्षिणतोऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्याध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवयाघारमाघारयति यथोपांशुर्हुतो भवति २० अत्र सर्वाः सोमाहु-तीर्जुहोति २१ यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्स्रुचं वायव्यं च-मसं वान्वारभ्याश्रावयेत् । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाक-र्यादित्यत्यन्तप्रदेशः २२ आश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवा-युभ्यां प्रेष्येति २३ वषट्कृते जुहोति । पुनर्वषट्कृते जुहुतः २४ यदि मन्येत यजमानः पूर्वो मातिक्रान्तो भ्रातृव्य इति २५

इति विंशी कण्डिका

प्राग्घोमादङ्गुष्ठेनाङ्गुलिमवगृह्णीयाद्यो न इन्द्रवायू अभिदासतीति । यदि वापरोऽङ्गुल्याङ्गुष्ठम् १ हुते चादित्यमुपतिष्ठते भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहीति २ अथाध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवनयति । अ-ध्वर्युः प्रतिप्रस्थातः । एतद्वा विपरीतम् ३ देवेभ्यस्त्वेत्यादित्यपात्रेण प्र-तिप्रस्थातादित्यस्थाल्यां संपातमवनयति ४ ग्रहमध्वर्युरादाय क्षिप्रं होता-रमभिद्रुत्य मयि वसुरिति ग्रहं होत्रे प्रयच्छति ५ एतेनैव होता प्रतिगृह्य द-क्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते ६ एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः ७ आघारपुनर्वषट्कारौ न भवतः ८ यथादेवतं संप्रैषाः ९ ग्रहणं प्रति-निग्राह्याणामवग्रहणादित्योपस्थानावनयनप्रदानान्युत्तरोत्तरैर्मन्त्रैः १० विभू-रसि श्रेष्ठो रश्मीनां व्यानपा व्यानं मे पाहीति तृतीय आदित्योपस्थानः ११ विष्णवुरुक्रमैष ते सोमस्तं रक्षस्वेत्यादित्यपात्रेण प्रतिप्रस्थातादित्यस्थाली-मपिदधाति १२ आश्विनं होत्रे प्रदाय हविर्धानं गच्छन्संप्रेष्यत्युन्नीयमानेभ्यो ऽनुब्रूहीति १३ होतृचमसमुख्यान्नव चमसानुन्नयति १४ द्रोणकलशादुप-स्तीर्य पूतभृत उन्नीय द्रोणकलशादभिघारयति १५ सर्वचमसानामेष कल्पः १६ धाराग्रहणकाले द्विदेवत्यानां काम्याः कल्पाः १७ यदि मन्येत यज-मानः पूर्वो मातिक्रान्तो भ्रातृव्य इति प्रतिप्रस्थानेन पूर्वो गृहीत्वा पूर्वो हुत्वा

पूर्वः सादयेत् १८ यदि कामयेत समावद्वीर्यमेनम् भ्रातृव्येण कुर्यामिति प्र-
बाहुग्गृहीत्वा प्रबाहुक्तिष्ठद्भ्यां होतव्यम् । प्रबाहुग्घुत्वा प्रबाहुक्सादयेया-
ताम् १९ सममित्यर्थः २० यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छे-
दितीदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश उदूहामीत्यध्वर्युपात्रमुदू-
ह्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति तस्मिन्प्रतिप्र-
स्थानं सादयेत् २१ काम्याश्चेत्पृथक्पात्रैः प्रतिनिग्राह्या गृह्येरन् २२

इत्येकविंशी कण्डिका इति षष्ठः पटलः

ततः शुक्रामन्थिभ्यां प्रचरतः । स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रण-
यन्त्विति शुक्रमध्वर्युरादत्ते । स्तुतोऽसि जनधा देवास्त्वा मन्थिपाः प्रण-
यन्त्विति मन्थिनं प्रतिप्रस्थाता । चमसांश्चमसाध्वर्यवः १ तौ प्रोक्षिता-
भ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयतोऽपनुत्तौ श-
ण्डामर्कौ सहामुनेति । अपनुत्तः शण्ड इति वाध्वर्युर्द्वेष्यं मनसा ध्यायन् ।
अपनुत्तो मर्क इति प्रतिप्रस्थाता २ तावपिगृह्य प्राञ्चौ निष्क्रामतः ३ उर्व-
न्तरिक्षमन्विहीत्यभिप्रव्रजतः ४ इन्द्रेण मन्युना युजावबाधे पृतन्यता ।
घ्नता वृत्राण्यप्रतीति शुक्रं यजमानोऽन्वारभत होमात् ५ अपरेणोत्तरवेदिं
ग्रहावरत्नी वा संधत्तो ब्रह्म संधत्तं तन्मे जिन्वतं क्षत्रं संधत्तं तन्मे
जिन्वतमिषं संधत्तं तां मे जिन्वतमूर्जं संधत्तं तां मे जिन्वतं रयिं संधत्तं तां मे
जिन्वतं पु-ष्टिं संधत्तं तां मे जिन्वतं प्रजां संधत्तं तां मे जिन्वतं पशून्संधत्तं
तान्मे जिन्व-तमिति ६ अनाधृष्टासीत्यङ्गुष्ठाभ्यामुत्तरवेदिमवगृह्य
व्यपरिफन्ताविवोत्तर-वेदिं परिक्रामतः ७ सुवीराः प्रजाः प्रजनयन्परीहि
शुक्रः शुक्रशोचिषेति
दक्षिणेनाध्वर्युः प्रतिपद्यते । सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थीमन्थिशो-
चिषेत्युत्तरेण प्रतिप्रस्थाता । अग्रेणोत्तरवेदिं ग्रहावरत्नी वा संधत्तः संज-
ग्मानौ दिव आ पृथिव्या आयुः संधत्तं तन्मे जिन्वतं प्राणं संधत्तं तं मे जि-
न्वतमपानं संधत्तं तं मे जिन्वतं व्यानं संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे
जिन्वतं श्रोत्रं संधत्तं तन्मे जिन्वतं मनः संधत्तं तन्मे जिन्वतं वाचं संधत्तं तां
मे जिन्वतमिति ८ अथैनावध्वर्युरभिमन्त्रयत आयु स्थ आयुर्मे धत्तमायुर्य-
ज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं

यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तम् चक्षुर्यज्ञय धत्तं चक्षुर्यज्ञपतये धत्तं श्रोत्रं स्थः श्रोत्रं मे धत्तं श्रोत्रं यज्ञाय धत्तं श्रोत्रं यज्ञपतये धत्तम् ९

इति द्वाविंशी कण्डिका

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेति १ अप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तौ शण्डामर्कौ सहामुनेति । निरस्तः शण्ड इति वाध्वर्युर्द्विष्यं मनसा ध्यायन् । विरस्तो मर्क इति प्रतिप्रस्थाता २ प्रोक्षितावाधत्तः । शुक्रस्य समिदसीत्यध्वर्युः । मन्थिनः समिदसीति प्रतिप्रस्थाता ३ आश्राव्य प्रत्याश्राविते संप्रेष्यति प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति ४ संप्रैषवत्कुर्वन्ति ५ पुरस्तात्प्रत्यञ्चावध्वर्यू जुहुतः । पश्चात्प्राञ्चश्चमसैश्चमसाध्वर्यवो जुह्वति ६ शुक्रामन्थिनोः प्रतिनिगद्य होमः ७ स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेत्यध्वर्युर्जुहोति । तस्मै सूर्याय सुतमाजुहोमि स्वाहेति प्रतिप्रस्थाता ८ सानुवषट्कारावननुवषट्कारौ वा ९ सर्वहुतौ १० अपि वा सूदवच्छुक्रपात्रमायतने सादयित्वोत्तरार्धात्प्रतिप्रस्थाता बहिःपरिध्यङ्गारं निर्वर्त्य तस्मिन्मन्थिनः संस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथा इति ११ आर्तपात्रमेतद्यन्मन्थिपात्रम् । यमृत्विजां द्विष्यात्तस्मै हरेत् । आर्छतीहैवेति विज्ञायते १२ ततः संप्रेष्यति प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य । प्रोद्गातृणामित्येके समामनन्ति । प्र सदस्यस्य । प्रयन्तु सदस्यानामिति वा १३ अथ होत्राः संयाजयन्ति १४ तस्मै चमसाध्वर्यवः स्वंस्वं चमसम् द्रोणकलशादभ्युन्नीय हरन्ति १५ मैत्रावरुणचमसमादायाहवनीयं गत्वाश्राव्य प्रत्याश्राविते संप्रेष्यति होतर्यज प्रशास्तरिति वा १६ वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् १७ एवमुत्तरैः प्रचरति । एतावन्नाना १८

इति त्रयोविंशी कण्डिका

ब्रह्मन्यजेति द्वितीये संप्रेष्यति । पोतर्यजेति तृतीये । नेष्टर्यजेति चतुर्थे । अग्नीद्यजेति पञ्चमे १ सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम् २ आग्नीध्रचमसमादाय सद एत्यायाडग्नीदित्याचष्टे ३ स भद्रमकर्यो नः सोमं पाययिष्यतीतीतरे प्रत्याहुः ४ यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्नयग्रोधस्तिभिनीराहृत्य संपिष्य दधन्युन्मृज्य चमसेषु हूयमानेष्वन्तःपरिध्यङ्गारं निर्वर्त्यैतस्य चमसस्य दर्भतरुणेनोपहत्याहं त्वदस्मि मदसि त्वमित्यङ्गारे हुत्वा तमस्मै भक्षं प्रयच्छेत् ५ पात्रे समवेतानां वषट्कर्ता पूर्वो भक्षयति ६ भक्षेहीति भक्षमाह्रियमाणं प्रतीक्ष्याश्विनोस्त्वा बाहुभ्यां सघ्यासमिति प्रतिगृह्य नृचक्षसं त्वा देव सोमेत्यवेक्ष्य मन्द्राभिभूतिरिति प्रातःसवने सर्वानैन्द्रान्भक्षयति । नराशंसपीतस्येति नाराशंसान् । रुद्रवद्गणस्येति माध्यंदिने सवने सर्वानैन्द्रान्भक्षयति । नराशंसपीतस्येति नाराशंसान् । आदित्यवद्गणस्येति तृतीयसवने सर्वानैन्द्रान्भक्षयति । नराशंसपीतस्येति नाराशंसान् ७ यत्प्राग्वसुमद्गणात्तत्सर्वत्रानुषजति ८ अप्यन्यदेवतानिन्द्रपीतस्येति ९ यथादेवतं वा १० वाग्जुषाणा सोमस्य तृप्यत्विति सर्वसोमानां भक्षणमेके समामनन्ति ११ वाग्देवी सोमस्य तृप्यत्विति वा १२ हिन्व मे गात्रा हरिव इति भक्षयित्वा नाभिदेशानभिमृशन्ते १३ नानुपहूतेन सोमः पातवै । सोमपीथेन ह व्युर्धुको भवति १४ असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते । उपहूत इति प्रतिवचनः १५ ये समाने प्राये भक्षयन्ति तेषूपहवमिच्छते १६ ये वैकपात्रम् १७

इति चतुर्विंशी कण्डिका

पुरस्तादैन्द्रवायवं भक्षयति प्राणेषूपनिग्राहम् । पुरस्तान्मैत्रावरुणं चक्षुषोरुपनिग्राहम् । सर्वतः परिहारमाश्विनं श्रोत्रयोरुपनिग्राहम् १ अव्युत्सृजन्तौ पात्रं द्विरैन्द्रवायवं भक्षयतो भक्षयन्ति भक्षयति वा । सकृत्सकृदितरौ २ तद्येषां भक्षयत इत्यध्वर्युर्होता वेत्यर्थः । भक्षयन्तीत्यध्वर्यू होता चेत्यर्थः । भक्षयतीति सस इत्यर्थह् ३ भक्षयित्वा होतृचमसे सम्पातानवनयतो भक्षितानभक्षिते ४ अत्र पात्रं व्युत्सृजतः ५ पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति । पयस्यां मैत्रावरुणस्य । धाना आश्विनस्य ६ तानि द-

च्चिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयति । आ तृतीयसवनात्परिशेरे यज्ञस्य संतत्या इति विज्ञायते ७ अत्रेडाया निरवदानमेके समामनन्ति ८ अत्र होतेडामुपह्वयते । उपोद्यच्छन्ते चमसांश्चमसिनः । होतृचमसमिडा-यामास्पृष्टम् ९ उपहूतां प्राश्नन्ति ये प्रकृतौ १० पुरोडाशशकलमच्छावा-काय निदधाति ११ आग्नीध्रे हविःशेषान्भक्षयन्ति १२ अत्र सवनीयानां शाखाप्रहरणं वाजिनचर्यान्तर्वेदि यजमानस्य वेदाभिमर्शनं पिष्टलेपफली-करणहोमौ पत्न्या वेदप्रासनं प्रणीतासु मार्जनमुपवेषोदसनं कपालविमोच-नमिति क्रियन्ते १३ नह्येतेषां प्रासङ्गिकं वैशेषिकमुत्कर्षति १४ उत्कर्षे-दित्यपरम् १५ वषट्कारेण होता भक्षं लभते १६ होमाभिषवाभ्यामध्वर्युः । नान्यतरेण १७ समाख्यानेनापि भक्षं लभन्ते १८ सर्वांश्चमसान्सकृद्धोता भक्षयति १९ द्विः स्वं चमसम् २० होत्रकाः स्वंस्वं चमसं द्विर्भक्षयन्ति २१ तानध्वर्युः सकृद्भक्षितान्यथापूर्वं प्रतिभक्षयति २२ अन्तत इतरे २३ भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति २४ ते नाराशंसाः २५ द्वि-नाराशंसे पूर्वे सवने भवतः । एकनाराशंसं तृतीयसवनम् २६ भक्षिता-प्यायितान्सादयन्ति दक्षिणस्य हविर्धानस्याधस्तादवालम्बे २७

इति पञ्चविंशी कण्डिका इति सप्तमः पटलः

उपविशत्यच्छावाको बहिः सदसोऽग्रेण स्वं धिष्णियम् १ तस्मै पुरोडाश-शकलमादधदाहाच्छावाक वदस्व यत्ते वाद्यमिति २ यदास्य विजाना-त्युपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमित्यथैनं होत्र आवेदयत्यच्छावाको वा अयमुपहवमिच्छते तं होतरुपह्वयस्वेति ३ उत नो गाव उपहूता उपहूतेति होतुरभिज्ञायोन्नीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्यो उन्नयस्वोभयतः शुक्रं कुरुष्वेति ४ तमादायाहवनीयं गत्वाश्राव्य प्रत्याश्राविते संप्रेष्यत्य-च्छावाक यजेत् ५ वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् ६ तेन न संभक्षयति । नास्मिन्नुपहवमिच्छते । यद्यस्मिन्नुपहवमिच्छेत भक्षयेत्येनं ब्रूयात् ७ भक्षिताप्यायितमन्तरा नेष्टुराग्नीध्रस्य च चमसौ सादयित्वर्तुग्रहैः प्रचरतः ८ द्रोणकलशादृह्यन्ते । न साद्यन्ते ९ पूर्वेषां शेषेषूत्तरानभिगृ-ह्णीतः १० पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातोपयामगृहीतोऽसि मधुश्चे-त्येतैः प्रतिमन्त्रम् ११ मधवे त्वा माधवाय त्वेत्येके समामनन्ति १२ पुर-

स्तादुपयामाः सर्वे १३ नान्योऽन्यमनुप्रपद्येत । प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते । प्रसिद्धं प्रतिप्रस्थातोत्तरेण १४ द्वार्येव व्यतीतः १५ प्रविशन्तमेवाध्वर्युं प्रतिप्रस्थाता ग्रहेण परिप्रगृह्णाति । निष्क्रामन्तं पात्रेण १६ ऋतुना प्रेष्येति त्रिष्वाद्येष्वध्वर्युः संप्रेष्यति । एवं प्रतिप्रस्थाता १७ पात्रयोर्मुखे पर्यावृत्यर्तुभिः प्रेष्येति द्वयोरध्वर्युः । एवं प्रतिप्रस्थाता १८ पुनः पर्यावृत्यर्तुना प्रेष्येति सकृदध्वर्युः । एवं प्रतिप्रस्थाता १९

इति षड्विंशी कण्डिका

द्वादश त्रयोदश चतुर्दश वा गृह्यन्ते १ द्वादशसु सह प्रथमौ गृह्येते । सहोत्तमौ २ त्रयोदशसूत्तमयोः सह ग्रहणप्रदाने ३ तथा चतुर्दशसु प्रथमोत्तमयोः ४ संसर्पोऽस्यंहस्पत्याय त्वेति त्रयोदशचतुर्दशौ वावगृह्येते ५ अध्वर्यू यजतं गृहपते यजेत्यभिज्ञायोभयत्रातिप्रेष्यति होतरेतद्यजेति ६ एवं गृहपतिः स्वे प्रैषान्ते ७ द्विदेवत्यवत्संपातौ व्यवनीयाभक्षितेन पात्रेणाध्वर्युरैन्द्राग्नं गृह्णाति । इन्द्राग्नी आगतं सुतमिति ग्रहणसादनौ । प्रतिप्रस्थाता हरति भक्षम् ८ उभावध्वर्यू यथावषट्कृतं प्रतिभक्षयतः ९ सर्वेषां सोमपात्राणां भक्षितानां मार्जालीये प्रक्षालनम् १० एतत्पात्रमादायाध्वर्युः सदोबिले प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रं प्रतिगरिष्यञ्जपति ११ ते शोंसावोमिति होतुरभिज्ञाय प्रदक्षिणमावर्तमानः शोंसा मोद इवेति प्रत्याह्वयते । शंसा मोद इवेति वा १२ ऋतुपात्रं धारयमाणः सदोबिले प्रत्यङ्तिष्ठन्प्रतिगृणाति । प्रह्वो वा १३ ओथा मोद इवेत्यर्धर्चेषु । ओमोथा मोद इवेत्यवसानेषु । प्रणव एवान्तः १४ ओथा मोद इवं होतर्मोद इवमोथा मोद इवोमिति विकल्पन्ते १५ नार्धर्चाल्लुप्यते । नाभिप्रतिगृणाति १६ शोंसा मोद इवौथा मोद इवेति व्याहावेषूभयं करोति १७ शस्त्रं प्रतिगीर्य इमध्वयुरादत्ते । चमसांश्चमसाध्वर्यवः १८ आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सोमस्येति । वषट्कृते जुहोति १९

इति सप्तविंशी कण्डिका

अनुप्रकम्पयन्ति नाराशंसान्वषट्कारानुवषट्कारौ १ भक्षान्हरन्ति २ व्याख्यातो ग्रहस्य भक्षः । तथा नाराशंसानां भक्षणाप्यायनसादनानि ३

वैश्वदेवं शुक्रपात्रेण गृह्णाति । ओमासश्चर्षणीधृत इति ग्रहणसादनौ ४ अ-सर्ज्यसर्जीति बर्हिर्भ्यां स्तोत्रमुपाकरोति ५ इडायै हिङ्कुरु तस्यै प्रस्तुहि त-स्यै स्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्तादाज्यानां यजमानो जपति चतुर्हो-तारं च व्याचष्टे ६ स्तूयमाने च चतुर्होतारं जपति ७ चतुर्होतॄन्व्याख्या-याज्यैरुद्गायतीति विज्ञायते ८ स्तुत ऋतुपात्रवर्जमैन्द्राग्नवच्छस्त्रप्रतिगरो ग्र-हनाराशंसाश्च ९ सर्वभक्षाश्चमसा भवन्ति १० उपयामगृहीतोऽसि मित्रा-वरुणाभ्यां त्वा जुष्टं गृह्णामि देवेभ्यो देवा युवमुक्थ्येभ्य उक्थ्या उवमित्यु-क्थ्यपात्रेणोक्थ्यतृतीयं गृहीत्वैष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयित्वा पुनर्हविरसीति स्थालीमभिमृशति ११ यन्मुख्याश्चमसा भवन्ति तस्य प्रति-गृणाति तं च प्रतिभक्षयति १२ मैत्रावरुणचमसमुख्यांश्चमसानुन्नीय पूर्वव-त्स्तोत्रमुपाकरोति १३ स्तुते पूर्ववच्छस्त्रं प्रतिगीर्य ग्रहमध्वर्युरादत्ते । च-मसांश्चमसाध्वर्यवः । आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सोमा-नामिति । वषट्कृतानुवषट्कृते जुह्वति । भक्षान्हरन्ति १४ एवमत ऊ-र्ध्वं नाराशंसवर्जं गणेषु चर्या १५ देवेभ्यस्त्वा देवा युवं पृणज्मि यज्ञस्या-युष इति मुख्ये संपातमवनयति १६

इत्यष्टाविंशी कण्डिका

यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्युक्तम् १ एवं विहितावु-त्तरौ पर्यायौ २ ताभ्यां प्रतिप्रस्थाता चरति । एतावन्नाना ३ इन्द्राय त्वे-ति द्वितीये ग्रहणसादनौ संनमत्यर्धं चोक्थ्यशेषस्य गृह्णाति । पूर्ववत्स्था-लीमभिमृशति । ब्राह्मणाच्छंसिचमसमुख्यांश्चमसानुन्नयति ४ नाभक्षितं चमसं स्तोत्रेणाभ्युपाकरोति ५ न प्रतिप्रस्थातोर्ध्वपात्रस्य भक्षयति ६ मु-ख्ये संपातमवनयति ७ इन्द्राग्निभ्यां त्वेति तृतीये ग्रहणसादनौ संनमति सर्वं चोक्थ्यशेषम् गृह्णाति । न स्थालीमभिमृशति ८ पूतभृतो बिल उ-दीचीनदशं पवित्रं वितत्य य आधवनीये राजा तं सर्वं पूतभृत्यवनीयाच्छा-वाकचमसमुख्यांश्चमसानुन्नयन्सर्वं राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्यु-ब्जति ९ मुख्ये संपातमवनयति १० उक्थशा इत्याह प्रातःसवनं प्रति-गीर्य शस्त्रंशस्त्रं वा ११ असंत्वरमाणाः पूर्वाभ्यां सवनाभ्यां चरन्ति । सं-त्वरमाणास्तृतीयसवनेन १२ अग्निः प्रातःसवने पात्वस्मानिति संस्थिते

सवन आहुतिं जुहोति १३ प्रशास्तः प्रसुव प्रसुहीति वा संप्रेष्यति १४ सर्पतेति प्रत्याह १५ येन प्रसर्पन्ति तेन निःसर्पन्ति १६ संतिष्ठते प्रातःसवनं प्रातःसवनम् १७

इत्येकोनत्रिंशी कण्डिका इत्यष्टमः पटलः

इति द्वादशः प्रश्नः

अभिषवादि माध्यंदिनं सवनं तायते १ तस्य प्रातःसवनेन कल्पो व्याख्यातः २ होतृचमसेन वसतीवरीभ्यो निःषिच्य निग्राभ्याः करोति ३ द्विदेवत्यर्तुग्रहा दर्विहोमाश्च न विद्यन्ते ४ विस्रस्य राजानं ग्रावस्तुते सोमोष्णीषं प्रयच्छति ५ असंप्रेषितो ग्रावस्तोत्रीया अन्वाह ६ तथैव महाभिषवः ७ घोषवांस्तु ८ संराधयन्तश्चाभिषुण्वन्तीहा३ इहेति ९ उत्तमस्याभिषवस्य मध्यमे पर्याये बृहद्द्धाति बृहद्बृहदिति १० उत्तमेऽभिषवेऽभिषुते राजन्यसंभृते देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः । एन्द्रमचुच्यवुः परमस्याः पराबतः । आस्मात्सधस्तादोरोरन्तरिक्षात् । आ सुभूतमसुषवुर्ब्रह्मवर्चसं म आसुषवुः समरे रक्षांस्यवधिषुरपहतं ब्रह्मज्यस्येति प्रतिप्रस्थाता ग्राव्णोऽनुमोदते ११ पशुपुरोडाशं निरुप्य पयस्यावर्जं सवनीयाः १२ तेन प्रचर्य सवनीयैः प्रचरति १३ समानं तु स्विष्टकृदिडम् १४ स कृताकृतः १५ संभरणाद्या धारायाः कृतेऽध्वर्युर्ग्रहान्गृह्णाति १६

इति प्रथमा कण्डिका

शुक्रामन्थिनावथाग्रयणं तिसृभ्यो धाराभ्यः १ आग्रयणादुत्सिच्य द्वितीयां धारां करोति । उदचनात्तृतीयाम् २ उक्थ्यं गृहीत्वा मरुत्वतीयौ । एतद्वा विपरीतम् । मध्य उक्थ्यमभितो मरुत्वतीयावित्येके ३ मरुत्वन्तमिति स्वेनर्तुपात्रेणाध्वर्युः पूर्वं मरुत्वतीयं गृह्णाति । इन्द्र मरुत्व इति स्वेन प्रतिप्रस्थातोत्तरम् ४ तयोरन्यदेवतानि ग्रहणानि द्वैष्यस्यैके समामनन्ति ५ विरमति धारैकधनानां यथार्थमित्येतदाद्या पञ्चहोतुः ६ ग्रहावकाशैः शृतंकारैश्चोपस्थाय वैप्रुषान्सप्तहोतारं च हुत्वा बहिष्पवमानवन्माध्यंदिने पवमानं सर्पन्ति ७ त्रैष्टुभः पन्था रुद्रा देवतावृकेणापरिपरेण पथा स्वस्ति रुद्रानशीयेति सर्पणे विकारः ८ उत्तरेण हविर्धानं गत्वा दक्षिणेन मार्जालीयं

धिष्णियं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण होतारमध्वर्युर्यजमानश्चाव-तिष्ठेते । दक्षिणेनोत्तरेण वा प्रशास्तुर्धिष्णियं परीत्योद्गातारो माध्यंदिनेन पवमानेन स्तुवते ९

इति द्वितीया कण्डिका

ज्योतिषे हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्तान्मा-ध्यंदिनात्पवमानाद्यजमानो जपति । चतुर्होतारं पञ्चहोतारं वा व्याचष्टे । ज्योक्त्यै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुद्ध्या इति च । स्तू-यमाने च चतुर्होतारं पञ्चहोतारं वा जपति । मध्यमायां च स्तोत्रीयायां द्वि-तीयमन्वारोहम् । स्तुतेऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरो-डाशाँ अलंकुरु प्रतिप्रस्थातर्दधिघर्मेणानूदेहीति १ आग्नीध्रे प्रतिप्रस्थाता द-धिघर्मं गृह्णाति २ औदुम्बर्यां स्रुच्युपस्तीर्य यावती द्यावापृथिवी इति दधि गृहीत्वाभिघार्य वाक्च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणी-तामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीतां शृतोऽसि शृतं-कृतः शृताय त्वा शृतेभ्यस्त्वेत्याग्नीध्रीयेऽधिश्रित्याह होतर्वदस्व यत्ते वाद्य-मिति ३ यदास्य विजानाति यदि श्रातो जुहोतन यद्यश्रातो ममत्तनेत्येत-स्मिन्काले श्रातं हविरिति प्रत्युक्त्वा तमादायाहवनीयं गत्वाश्राव्य प्रत्या-श्राविते संप्रेष्यति ४

इति तृतीया कण्डिका

दधिघर्मस्य यजेति १ यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति वषट्कृते जुहोति । स्वाहा वडिन्द्रायेत्यनुवषट्कृते हुत्वा हरति भक्षम् २ तं भक्ष-यन्ति ये प्रवर्ग्यम् ३ तस्यारण्येऽनुवाक्यो भक्षमन्त्रः ४ नाप्रवर्ग्ये स्यादि-त्यपरम् ५ मित्रो जनान्प्र स मित्रेति भक्षयित्वा नाभिदेशानभिमृशन्ते ६ व्याख्याता सवनीयचर्या ७ एतावन्नाना । माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामिति संप्रैषादी नमति ८ होत्र इडां हृत्वा हविर्धानं गच्छन्सं-प्रेष्यत्युन्नीयमानेभ्योऽनुब्रूहीति ९ उन्नयनाद्या नाराशंसानां सादनात् १०

तत्र विकारः ११ अच्छावाकचमसं दशममुन्नयति १२ आश्राव्य प्रत्याश्राविते संप्रेष्यति १३ माध्यंदिनस्य सवनस्य विष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमानिति संप्रैषादिः १४ षड्ढोत्रा भवन्ति १५ पुरस्ताद्दाग्नीध्रचमसादच्छावाकचमसेन चरन्ति १६ एता एव होत्रास्तृतीयसवने भवन्ति १७

इति चतुर्थी कण्डिका इति प्रथमः पटलः

सन्नेषु नाराशंसेषु दक्षिणा ददाति । बह्वपरिमितं सप्तैकविंशतिः षष्टिः शतम् द्वादशशतं सहस्रं सर्ववेदसं वा १ ज्येष्ठं वा पुत्रमपभज्य सर्ववेदसं ददाति २ अश्वतरं साहस्रे सर्ववेदसे च ददाति ३ अविं ददात्यजां गामश्वं पुरुषं हस्तिनं वासोऽनो रथमोदनं मन्थं माषांस्तिलान्व्रीहियवान्गर्दभमित्यधिकान्यनियतानि ४ गवां संख्या भवति ५ दक्षिणेन वेदिमवस्थितासु दक्षिणासूत्तरेण हविर्धानं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्यात्र यजमानस्यामात्यानां संह्वयनाद्या स्रुग्दण्डोपनियमनात्कृत्वा प्रचरण्या दक्षिणानि जुहोति ६ हिरण्यं प्रबध्य घृतेऽवधायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति ७ दिवं गच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति ८ उभयं धारयमाणो रूपेण वो रूपमभ्यैमीति दक्षिणा अभ्यैति ९ अतिनीय विभागमेके समामनन्ति १० तुथो वो विश्ववेदा विभजत्विति ता यजमानश्चतुर्धा कृष्णाजिनेन व्युत्त्रास्य चतुर्थमध्वर्युभ्यो विभजति ११ यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे १२ एतेनेतरेषां दानमुक्तम् १३

इति पञ्चमी कण्डिका

हिरण्यं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधेऽग्रे ददाति १ प्रतिहर्त्रेऽन्ततः २ तथा ब्रह्मणे दद्याद्यथान्यां दक्षिणां नानुध्यायेत् ३ अङ्गानि दत्त्वा तेनतेन यथालिङ्गं निष्क्रीणीते यद्यास्यन्स्यात् ४ होतर्वाचं ते ददामि तां तेऽनेन निष्क्रीणामीति ५ एवं ब्रह्मणे मनः । अध्वर्यवे प्राणम् । उद्गात्रे चक्षुः । होत्रकेभ्यः श्रोत्रम् । चमसाध्वर्युभ्योऽङ्गानि । प्रसर्पकेभ्यो लोमानि सदस्यायात्मानम् ६ अन्यत्र दक्षिणाभ्यश्चमसाध्वर्युप्रसर्पकसदस्येभ्यः ७ हि-

रगयपाणिरग्रेण गार्हपत्यं नयति जघनेन सदः । अन्तराग्नीध्रं च सदश्च ता उदीचीस्तीर्थेनोत्सृजति ८ एतत्ते अग्ने राध इति दक्षिणातिनयनः ९ तथैव समन्वारब्धेष्वसमन्वारब्धेषु वाग्ने नयेत्याग्नीध्रीये जुहोति १० वनेषु व्यन्तरिक्षं ततानेति द्वितीयां यद्यनो रथो वासोऽधीवासो वा दीयते यदि वा दास्यन्स्यात् । प्रजापते न त्वदेतानीति तृतीयां यदि पुरुषो हस्ती वा दीयते यदि वा दास्यन्स्यात् ११ ब्राह्मणमद्य राध्यासमित्यात्रेयाय प्रथमाय हिरगयं ददाति । द्वितीयाय तृतीयाय वा १२ तदभावे य आर्षेयः संहितस्तस्मै दद्यात् १३ अस्मद्दात्रा देवत्रा गच्छतेति नीता अनुमन्त्र्य सद एत्य वि सुवः पश्येत्यनुवीक्षते यद्यतिनीय विभजेत् १४ अन्तः सदस्यासीनेभ्य ऋत्विग्भ्यो दद्यात् । हविर्धानेऽध्वर्युभ्यः १५ ऋत्विग्भ्यो नमस्करोति १६ यं यज्ञमागच्छेत्तं प्रसर्पेदिति प्रसर्पकाणां विज्ञायते १७

इति षष्ठी कण्डिका

दक्षिणतः सदस्यासीनेभ्यः प्रसर्पकेभ्यो ददाति १ न बहिर्वेदि २ न याचितः ३ न भीतः ४ न कगवकश्यपेभ्यः ५ नाब्राह्मणाय ६ ब्राह्मणायाप्यविदुषे न देयम् । अप्यब्राह्मणाय विद्याविदे दद्यात् । यां स विद्यां वेद तां तयावरुन्द्धे ७ यां श्रोत्रियाय ज्ञातये वानृत्विजे प्रसृप्ताय यां स विद्यां वेद तां तयावरुन्द्धे ८ यां ज्येष्ठाय यया स देवतया ज्यैष्ठ्यं गच्छति तां तयावरुन्द्धे ९ यामार्षेयाय विदुषे स्वर्गं तया लोकमाप्नोति १० यामन्यो दीयमानां न कामयेत यं द्विष्यात्तस्मै दद्यात्सहान्येन धनेन ११ यत्प्रतिनुत्तां दक्षिणां गोषु चारयेत्प्रति वा गृह्णीयात्सलावृक्येनं भूत्वा प्रव्लिनीयात् १२ यामदानीयाय दक्षिणां ददाति तामस्य पशवोऽन्वपक्रामन्ति । यदि मन्येतादानीयायादामिति न म इदमुपदम्भिषगित्येतद्यजुर्जपेद्गां वा दद्याद्ब्राह्मणाय १३ यदा मरुत्वतेऽनूक्तमथ न देयं न प्रतिगृह्यम् १४ अनूबन्ध्यावपायां हुतायां दद्यात्प्रति च गृह्णीयुः १५ नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति हरिणस्य रघुष्यतोऽधि शीर्षणि भेषजम् । स क्षेत्रियं विषाणया विषूचीनमनीनशत् । अनु त्वा हरिणो मृगः पड्भिश्चतुर्भिरक्रमीत् । विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं हृदि मनो यदस्य गुल्फितमित्येताभ्याम् १६ यज्ञपतिमृषय एनसाहुरित्याग्नीध्रीये पञ्च वैश्वकर्मणानि

हुत्वा १७

इति सप्तमी कण्डिका

मरुत्वतीयाभ्यां प्रचरतः १ इन्द्राय मरुत्वतेऽनुब्रूहीन्द्राय मरुत्वते प्रेष्येति संप्रैषौ सानुवषट्कारावननुवषट्कारौ वा । अन्यतरो वा सानुवषट्कारः । द्विदेवत्यवत्संपातौ व्यवनीयाभक्षितेन पात्रेणाध्वर्युस्तृतीयं मरुत्वतीयं गृह्णाति । मरुत्वाँ इन्द्रेति ग्रहणसादनौ । प्रतिप्रस्थाता हरति भक्षम् । उभावध्वर्यू प्रतिभक्षयतः २ एतत्पात्रमादायैन्द्राग्नवच्छस्त्रप्रतिगरो ग्रहनाराशंसाश्च ३ माहेन्द्रं शुक्रपात्रेण गृह्णाति । महाँ इन्द्रो य ओजसेति ग्रहणसादनौ ४ माहेन्द्रस्य स्तोत्रमुपाकरोति ५ स्तुते वैश्वदेववच्छस्त्रप्रतिगरो ग्रहनाराशंसाश्च ६ माहेन्द्रं त्वतिग्राह्या अनुहूयन्ते ७ सहैवाध्वर्युणाग्नेयं प्रतिप्रस्थातादत्ते । ऐन्द्रं नेष्टा । सौर्यमुन्नेता ८ अग्ने तेजस्विन्नित्याग्नेयं प्रतिप्रस्थाता हुत्वा तेजोविदसीत्यनुमन्त्रयते । इन्द्रौजस्विन्नित्यैन्द्रं नेष्टा हुत्वौजोविदसीत्यनुमन्त्रयते । सूर्य भ्राजस्विन्निति सौर्यमुन्नेता हुत्वा सुवर्विदसीत्यनुमन्त्रयते ९ तान्हुत्वा सदसि प्रत्यङ्मुखा भक्षयन्ति मयि मेधामित्येतैः स्वंस्वं यथालिङ्गम् १० तथैवोक्थ्यविग्रहाः ११ एतावन्नाना । इन्द्राय त्वेन्द्राय त्वेति सर्वत्र ग्रहणसादनौ संनमति १२ उक्थं वाचीत्याह माध्यंदिनं सवनं प्रतिगीर्य शस्त्रंशस्त्रं वा । विश्वे देवा मरुत इति संस्थिते सवन आहुतिं जुहोति १३ तथैव संप्रैषः सर्पणं च १४ संतिष्ठते माध्यंदिनं सवनम् १५

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

आदित्यारम्भणं तृतीयसवनम् १ हविर्धानस्योभे द्वारौ संवृत्य वेद्यां बहुजनायाम् २ यदि वास्य भ्रातृव्यः प्रसृप्तः स्यादन्तर्वेदि सति गृह्णीयात् ३ भ्रातृव्ययज्ञे तु गृह्यमाण आदित्ये बहिर्वेदि तिष्ठेत् ४ आदित्यपात्रेण य आदित्यस्थाल्यां द्विदेवत्यग्रहसंपातास्तेभ्यः सोमं गृह्णाति कदा चन स्तरीरसीति ५ कदा चन प्रयुच्छसीति शृतातङ्क्यं दधि ६ यज्ञो देवानामिति पुनः सोमं गृहीत्वा विवस्व आदित्येति तस्मिन्ग्रावाणमुपांशुसवनमवधाय तेनैनं मेक्षयित्वा ७ या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृतातङ्क्येन दध्ना प-

यसा वा वृष्टिकामस्य श्रीत्वा ग्रावाणमुद्गृह्णाति ८ यद्युद्गृहीतस्य ताजग्बि-न्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्यात् । यदि चिरमवर्षुकः ९ न सादयति १० यदि कामयेत गर्भान्पशवः स्त्रीव्येयुरित्युद्गृह्यादित्यमवेक्षेत ११ दर्भैर्ह-स्तेन वापिधायोत्तिष्ठति सूर्यो मा देवो देवेभ्यः पात्विति १२ अहं परस्ता-दित्यादित्यं यजमानोऽन्वारभत आ होमात् १३ कविर्यज्ञस्य वितनोति प-न्थामिति हरति १४ आ समुद्रादिति दर्भैराच्यावयति १५

इति नवमी कण्डिका

आदित्येभ्योऽनुब्रूहि प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पति-भ्य उरोरन्तरिक्षस्याध्यक्षेभ्य आदित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रिय-व्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति संप्रैषौ । आ-दित्येभ्योऽनुब्रूह्यादित्येभ्यः प्रेष्येति वा १ यास्ते विश्वाः समिधः सन्त्यग्न इति दर्भानाहवनीये प्रास्यान्यत्रेक्षमाण आदित्यं जुहोति २ उन्नम्भय पृथि-वीमिति वृष्टिकामस्य जुहुयात् ३ न हुत्वान्वीक्षेत ४ सूदवदादित्यपात्र-मायतने सादयित्वादाभ्यांशुमुपांशुपावनौ यश्चोपांशुपात्रेऽंशुस्तानृजीषेऽपिसृ-ज्य प्रातःसवनवन्महाभिषवः ५ ऋजीषं त्वेवाभिषुण्वन्ति ६ पयस्यावर्जं सवनीयाः ७ आग्नीध्रे पत्न्याशिरं मथित्वापरया द्वारा हविर्धानं प्रपादयति । पूर्वया गतश्रियः ८ पूर्वया यजमानः प्रपद्यते ९ पूतभृतो बिल उदीचीन-दशं पवित्रं वितत्य तस्मिन्यजमानः पुरस्तात्प्रत्यङ्तिष्ठन्सह पत्न्याशिरमव-नयत्यस्मे देवासो वपुषे चिकित्सतेति चतसृभिः १० ग्रहकाल आग्रयणमे-व चतसृभ्यो धाराभ्यः ११ आग्रयणादुत्सिच्य द्वितीयां धारां करोति । आदित्यस्थाल्यास्तृतीयाम् । आदित्यग्रहसंपाताच्चतुर्थीम् १२ उक्थ्यश्चेद-त्रोक्थ्यं गृह्णाति १३ विरमति धारैकधनानां यथार्थमित्येतदादि माध्यंदिन-वत् १४

इति दशमी कण्डिका

जागतः पन्था आदित्या देवतावृकेणापरिपरेण पथा स्वस्त्यादित्यानशीयेति सर्पणे विकारः । आयुषे हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरु-द्ध्या इति पुरस्तादार्भवात्पवमानाद्यजमानो जपति । पञ्चहोतारं सप्तहोतारं वा व्याचष्टे । आयुर्वै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुद्ध्या

इति च । स्तूयमाने च पञ्चहोतारं सप्तहोतारं वा जपति । मध्यमायां च स्तोत्रीयायां तृतीयमन्वारोहम् । स्तुतेऽध्वर्युः संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति १ अत्र शलाकाभिर्ज्वलतो धिष्णियान्विहृतान्न व्याघारयेत् । उपरिष्टाद्व्याघारणम् २ शृतं हवी३ शमितरित्येतदादि पाशुकं कर्म प्रतिपद्यत एडायाः ३ दक्षिणेन हविर्धानं समवत्तं हरति । उत्तरेण वा ४ प्राशितायामिडायां सवनीयाद्या नाराशंसानां सादनात् ५ तत्र विकारः । तृतीयस्य सवनस्येन्द्राय पुरोडाशानामिति संप्रैषादी नमति ६

इत्येकादशी कण्डिका

प्रचरणकाले होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः १ आश्राव्य प्रत्याश्राविते संप्रेष्यति । तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमानिति संप्रैषादिः २ अथ चमसाञ्जुहोति ३ श्येनाय पत्वने स्वाहेति वषट्कृते जुहोति । वट् स्वयमभिगूर्ताय नमः स्वाहेत्यनुवषट्कृते ४ हुत्वा हरति भक्षम् ५ एवमुत्तरैः प्रचरति ६ एतावन्नाना । पूर्वेणपूर्वेण मन्त्रेण वषट्कृतेवषट्कृते जुहोति । उत्तरेणोत्तरेणानुवषट्कृते ७ तृम्पन्तां होत्रा इति सर्वान्हुत्वा जपति ८ सन्नेषु नाराशंसेषु चमसिनः स्वंस्वं चमसमनू न्यन्ते त्रींस्त्रीन्पुरोडाशशकलानुपवपन्त एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ९ नमो वः पितरो रसायेति नमस्काराञ्जपन्ति १० षड्ढोतारं यजमानो व्याचष्टे ११ प्रजापते न त्वदेतानीति प्राजापत्ययावतिष्ठन्ते १२

इति द्वादशी कण्डिका इति तृतीयः पटलः

वाममद्य सवितरित्यन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहीत्वा न सादयति १ देवाय सवित्रेऽनुब्रूहि देवाय सवित्रे प्रेष्येति संप्रैषौ २ नानुवषट्करोति ३ एतेनैव सशेषेण वैश्वदेवं पूतभृतो गृह्णाति ४ उपयामगृहीतोऽसि सुशर्मासीति ग्रहणसादनौ ५ न स्तोत्रं भवति ६ वैश्वदेवं प्रतिगृणाति ७ प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्यभिज्ञायोभयतो मोदं प्रतिगृणाति मदा मोद इव मोदा मोद इवेति ८ अन्यतरतो मोदं वा मदा मोद इव ओथा मोद इ-

वेति ९ व्यवहितमेके समामनन्ति मदा मोद इव आेथा मोद इव मोदा मोद इवेति १० आ व्याहावात् ११ नियुद्भिर्वायविह ता विमुञ्चेत्यभिज्ञाय प्रतिप्रस्थाता द्विदेवत्यपात्राणि वायुर्वो विमुञ्चत्विति विमुच्यापरया द्वारा निर्हृत्य मार्जालीये प्रक्षाल्य पूर्वयातिहृत्य यथायतनं सादयति १२ वैश्वदेववद्ग्रहनाराशंसाः १३ सौम्यस्य चरोस्तन्त्रं प्रक्रमयति १४ व्याख्यातश्चरुकल्पः १५ श्रपयित्वा प्राचीनावीती सौम्येन प्रचरति १६ हस्तेन प्रथममवदानमवद्यति । मेक्षणेनोत्तरम् । एतद्वा विपरीतम् १७ दक्षिणतो ऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्नाश्राव्य प्रत्याश्राविते संप्रेष्यति सौम्यस्य यजेति १८ वषट्कृते दक्षिणार्धे जुहोति १९ आज्येनोपांशूभयतः सौम्यं परियजति । अन्यतरतो वा २० आश्राव्य प्रत्याश्राविते संप्रेष्यति घृतस्य यजेति २१ वषट्कृते हुत्वा प्रत्याक्रम्याज्येन चरुमभिपूर्य २२

इति त्रयोदशी कण्डिका

उद्गातृभ्यो हरन्ति १ तमुद्गातारोऽवक्षन्ते सत्रो त एतद्यदु त इहेति २ य आत्मानं न परिपश्येदाज्येनाभिददिं कृत्वावेक्षेत ३ यो गतमनाः स्यात्सो ऽवेक्षेत यन्मे मनः परागतमिति ४ अत्र पुनः शलाकाभिर्ज्वलतो धिष्णियान्विहृतानाज्येनैवाष्टगृहीतेन व्याघारयति ५ यद्येनं ब्रूयादाग्नीध्रीयं मे पुनर्व्याघारयेति नवगृहीतं गृहीत्वाग्नीध्रीयमादितोऽन्ततश्च व्याघार्य धारयति धिष्णियानाज्यशेषं च ६ उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इत्युपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहीत्वा न सादयति ७ व्याघारणशेषेण श्रीत्वाश्राव्य प्रत्याश्राविते संप्रेष्यत्यग्नीत्पात्नीवतस्य यजेति । अग्ना३इ पत्नीवा३ इति वषट्कृते जुहोति ८ नानुवषट्करोति ९ अपि वोपांश्वनुवषट्कुर्यात् १० ततः संप्रेष्यत्यग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतुश्चमसमनून्नय होतृचमसे ध्रुवायावकाशं कुरूद्गात्रा पत्नीं संख्यापयाप उपप्रवर्तयेति ११ संप्रैषवत्कुर्वन्ति १२ अन्तरा हेष्टारं धिष्णियं चाग्नीध्रो व्यवसृप्य भक्षयति १३ अग्निपीतस्येति भक्षमन्त्रं संनमति १४

इति चतुर्दशी कण्डिका

नोपस्थ आसीत । यदुपस्थ आसीत पराङकः स्यात् १ होतृचमसमुख्यां-श्चमसानुन्नयन्सर्वं राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्युब्जति २ यज्ञाय-ज्ञियस्य स्तोत्रमुपाकरोति ३ ज्वलयन्ति धिष्णियान् ४ सकर्णप्रावृता अ-वकर्णप्रावृता वा यज्ञायज्ञियेन स्तुवते ५ ये प्रसृप्ताः स्युस्ते सर्वेऽग्निष्टोम-मुपगायेयुः ६ सप्तहोतारं यजमानो व्याचष्टे ७ विश्वस्य ते विश्वावत इति हिङ्कारमनूद्गात्रा पत्नीं संख्यापयति । आ तिसृभ्यः स्तोत्रियाभ्योऽगन्देवा-निति च ८ पत्न्यप उपप्रवर्तयति दक्षिणेनोरुणा नग्नेन प्राचीरुदीचीर्वोरु-भ्यामन्तरतः ९ ऊर्वोरुपप्रवर्तयेदित्येके १० उपरि दूरमुदूहेदा वक्षणाना-माविष्कर्तोः । अह्नीतमुख्यस्या जायत इति विज्ञायते ११ अभ्यग्र आग्नि-मारुतं प्रतिगृणाति १२ आपो हि ष्ठा मयोभुव इत्यभिज्ञायापो विषिञ्चन्प्रति-गृणाति १३ स्वादुष्किलायं मधुमाँ उतायमित्यभिज्ञायोभयतो मोदं प्रतिगृ-णाति मदा मोद इव मोदा मोद इवेत्या व्याहावात् १४ सादनादि ध्रुवस्य न यजमानो मूत्रं करोत्यावनयनात् १५

इति पञ्चदशी कण्डिका

भूतमसि भूते मा धा इति प्रतिप्रस्थाता ध्रुवमवेक्ष्य द्यावापृथिवीभ्यां त्वा प-रिगृह्णामीत्यञ्जलिना परिगृह्य विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्विति हृ-त्वा ध्रुवं ध्रुवेणेति पुरस्तात्प्रत्यङ्ङासीनो होतृचमसे ध्रुवमवनयति १ पु-रस्तादुक्थ्यस्यावनीयः । मध्यतोऽन्ततो वा २ उत नोऽहिर्बुध्न्यः शृणोत्वज एकपादिति वा वैश्वदेव्यामृचि शस्यमानायाम् ३ परिधानीयायां वा सकृ-च्छास्तायाम् ४ मध्यमायामुत्तमायां वा ५ उक्थं वाचीन्द्रायेत्याह तृती-यसवनं प्रतिगीर्य । शस्त्रंशस्त्रं वा ६ प्रचरणकाले होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । आश्राव्य प्रत्याश्राविते संप्रेष्यत्युक्थशा यज सो-मानामिति । वषट्कृतानुवषट्कृते जुह्वति । भक्षान्हरन्ति ७ होतृचम-समध्वर्युः प्रतिभक्षयति सुभूरसि श्रेष्ठो रश्मीनां प्रियो देवानां संसदनीयः । तं त्वा सुभव देवा अभिसंविशन्त्विषोऽसि त्वेषोऽसि नृम्णोऽसि यह्वोऽसि व्रतोऽसि स्वोऽसि वारणोऽसि तस्य त इषस्य त्वेषस्य नृम्णस्य यह्वस्य व्रत-स्य स्वस्य वारणस्य शूद्रस्य चार्यस्य च भुक्षिषीयेति ८ यथा त्वं सूर्यासि विश्वदर्शत एवमहं विश्वदर्शतो भूयासमित्यादित्यं यजमान उपतिष्ठते ९

आयुर्म इन्द्रियं धेह्यदो म आगच्छत्वित्याहवनीयम् १० यत्कामयते तस्य नाम गृह्णाति ११ अग्नीदौपयजानङ्गारानाहरेत्येतदादि पाशुकं कर्म प्रतिपद्यते १२

इति षोडशी कण्डिका इति चतुर्थः पटलः

परिधिषु प्रहृतेषून्नेता हारियोजनं गृह्णाति १ उपयामगृहीतोऽसि हरिरसीति द्रोणकलशेन सर्वमाग्रयणं गृहीत्वा न सादयति । बह्वीभिर्धानाभिः श्रीत्वा शीर्षन्नधिनिधायोपनिष्क्रम्येन्द्राय हरिवतेऽनुब्रूहीन्द्राय हरिवते प्रेष्येति संप्रैषौ । धानासोमेभ्योऽनुब्रूहि धानासोमान्प्रस्थितान्प्रेष्येति वा २ हरी स्थ हर्योर्धाना इति विक्रम्य वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् ३ अपरेणोत्तरवेदिं द्रोणकलशं प्रतिष्ठाप्योन्नेतर्युपहवमिष्ट्वा सर्वे हारियोजनं भक्षयन्तीष्टयजुषस्ते देव सोमेति ४ असंभिन्दन्तो धाना निम्नानि कुर्वते । निम्नानि कृत्वा निरिव धयन्ति ५ चिश्चिषाकारं भक्षयन्ति ६ कृष्यै क्षेमाय रय्यै पोषायेति भक्षयित्वा जपन्ति ७ आपूर्या स्थामा पूरयतेत्युत्तरवेद्यां शेषा न्युप्य यन्म आत्मनो मिन्दाभूदिति मिन्दयाहवनीयमुपतिष्ठन्ते ८ देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमस्यन्यकृतस्यैनसोऽवयजनमस्येनसएनसो ऽवयजनमसीत्याहवनीये शकलानभ्याधायैकधनपरिशेषेषु हरिणीर्दूर्वाः प्रास्य संप्लोम्नाय तीव्रीकृत्य यथाचमसं व्यानीयापरेण चात्वालमास्तावे वा प्रत्यञ्चश्चमसिनः स्वंस्वं चमसरसमवघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव इति ९

इति सप्तदशी कण्डिका

समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत । अरिष्टा अस्माकं वीराः सन्तु मा परासेचि नः स्वम् । अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः । उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा न इत्यन्तर्वेदि शेषान्निनीय दधिक्राव्णो अकारिषमित्याग्नीध्रे दधिद्रप्सान्भक्षयन्ति १ उभा कवी युवाना सत्या ता धर्मणस्पती । सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इति तानूनप्त्रिणः सख्यानि विसृजन्ते २ पशुवत्प-

त्नीसंयाजाः ३ स्तीर्णे वेदे जुह्वां नवगृहीतं गृहीत्वा धाता रातिरित्यन्तर्वेद्यू-
र्ध्वस्तिष्ठन्संततं समशो नव समिष्टयजूंषि जुहोति ४ यं कामयेत पापीया-
न्स्यादित्येकैकं तस्य जुहुयाज्जिह्मस्तिष्ठन् । स्त्रुवेण वा विग्राहम् ५ इदं
तृतीयं सवनं कवीनामिति संस्थिते सवन आहुतिं जुहोति ६ अत्र मेख-
लायाः कृष्णविषाणायाश्च चात्वाले प्रासनं वाजसनेयिनः समामनन्ति मा-
हिर्भूर्मा पृदाकुरिति ७ अग्निना देवेन पृतना जयामीति यजमानो जागता-
न्विष्णुक्रमान्क्रामति ८ सर्वैभिर्देवेभिः पृतना यजाम्यानुष्टुभेन छन्दसैक-
विंशेन स्तोमेन वैराजेन साम्ना वषट्कारेण वज्रेण सर्वजान्भ्रातृव्यानधरान्पा-
दयाम्यवैनान्बाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च
वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामीति चतुर्थमेके समामनन्ति ९ इ-
न्द्रेण सयुजो वयमित्याहवनीयं यजमान उपतिष्ठते १०

इत्यष्टादशी कण्डिका इति पञ्चमः पटलः

अवभृथस्य तन्त्रं प्रक्रमयति १ वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि
कर्म प्रतिपद्यते । यथार्थं पात्रयोगः २ निर्वपणकाले वारुणमेककपालं
निर्वपति ३ चतुर्गृहीतान्याज्यानि वारुणं चालंकृत्योत्तरवेद्यंस आसादयति
४ अत्र यजमान औदुम्बरीमुत्खिदत्युपसृजन्धरुणं मात्रे मातरा धरुणो धय-
न्निह पुष्टिं पुष्टिपतिर्नियच्छतु रायस्पोषमिषमूर्जमस्मासु दीधरदिति ५ ता-
मधिषवणचर्मफलके सर्वाणि च सोमलिप्तान्यन्तरा चात्वालोत्करावुत्तरे वा
वेद्यंस औदुम्बर्यामासन्द्यां सादयति । अन्यत्र चतसृभ्यः सोमस्थालीभ्यः
६ अव ते हेडो वरुण नमोभिरिति यजमानश्चात्वाले कृष्णाशिनं प्रास्यति ७
पुनर्वैनेन दीक्षेत वसीत वैनद्भ्रस्तां वैनत्स्त्रुचामवधानार्थां कारयेत् । हवि-
रवहननार्थं वा स्यात् ८ अवभृथादुदेत्य पुत्राय ब्रह्मचारिणे वा दद्यादित्येके
९ आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयात् । अवभृथ निच-
ङ्कुणेति च १०

इत्येकोनविंशी कण्डिका

नमो रुद्राय वास्तोष्पतय आयने विद्रवण उद्याने यत्परायण आवर्तने विव-
र्तने यो गोपायति तं हुव इति च १ उरुं हि राजा वरुणश्चकारेति वेद्या भि-

प्रयान्तो वदन्ति । चात्वालाद्वा २ प्रस्तोतः साम गायेति ३ सर्वे सह-पत्नीकास्त्रिः साम्नो निधनमुपयन्ति । अर्धाध्वे द्वितीयम् । प्राप्य तृतीयम् ४ सर्वत्र संप्रेष्यति ५ सर्वा दिशोऽवभृथगमनमाम्नातमित्येतदाद्या चर्यायाः ६ निष्कासवद्वारुणेन प्रचर्यापबर्हिषावनूयाजौ यजति । न वा ७ यत्ते ग्राव्णाप्यायस्व सं त इति सौमीभिर्द्रप्सवतीभिः पञ्चभिः सप्तभिस्त्रयोदशभिर्वा दध्नौदुम्बरशाखयर्जीषं प्रोक्षति ८ प्रहृत्य वाभिजुहुयात् ९ ऋजीषस्य स्रुचं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति १० ततो यो भिन्दुरुत्स्रवते तमुपस्पृशेद्भक्षयेद्वाप्सु धौतस्य सोम देव त इति ११ समुद्रं वः प्रहिणोमीति सर्वाणि च सोमलिप्तान्यवभृथे प्रविध्यति १२ विचृत्तो वरुणस्य पाश इति यजमानो मेखलां विचचृते । इमं विष्यामीति पत्नी योक्त्रम् १३ अत्र योक्तमेखले वाससी जालं कृष्णाजिनं चावभृथे प्रविध्य १४

इति विंशी कण्डिका

देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्च १ अन्योऽन्यस्य पृष्ठे प्रधावतः २ यद्दिदीक्षे मनसा यच्च वाचा यद्वा प्राणैश्चक्षुषा यच्च श्रोत्रेण । यद्रेतसा मिथुनेनाप्यात्मनाद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीरापो बिमोक्त्रीर्मयि तेज इन्द्रियम् । यदृचा साम्ना यजुषा पशूनां चर्मन्हविषा दिदीक्षे । यच्छन्दोभिरोषधीभिर्वनस्पतावद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीरापो विमोक्त्रीर्मयि तेज इन्द्रियम् । येन ब्रह्म येन क्षत्रं येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा । विश्वे देवा ऋषयो येन प्राणा अद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीरापो विमोक्त्रीर्मयि तेज इन्द्रियमिति त्रिरञ्जलिना विषिच्योन्नेतर्वसीयो न उन्नयाभि । उदित्ते वसुवित्तमा गिरः स्तोमास ईरते । सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव । कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुरिति यजमानः संप्रेष्यति ३

इत्येकविंशी कण्डिका

उदेत प्रजामायुर्वर्चो दधाना अध स्यामसुरुभयोर्गृहेषु । गायत्रीं छन्दांस्य-नुसंरभन्तामस्मान्राय उत यज्ञाः सचन्ताम् । सुप्रीतः सुवरप आविवेशेत्यु-न्नेतोन्नयति १ अहते वसानावुदितः २ सोमोष्णीषं यजमानः परिधत्ते । सोमोपनहनं पत्नी सोमपरिश्रयणं वा ३ ते उदवसानीयायामध्वर्यवे दत्तः ४ उद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यसित्वा समित्पाणय उन्नेतारं पुरस्कृत्याप्रतीक्षमायन्त्यपाम सोममिति म-हीयां वदन्तो यान्यपामित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि । इ-हैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत् । अनृणा अ-स्मिन्ननृणाः परस्मिंस्तृतीये लोके अनृणाः स्याम । ये देवयाना उत पितृ-याणाः सर्वान्पथो अनृणा आ क्षीयेमेति च ५ एधोऽस्येधिषीमहीत्याहव-नीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते ६

इति द्वाविंशी कण्डिका इति षष्ठः पटलः

प्रायणीयावदुदयनीया १ तस्यामेव स्थाल्यामनिष्कसितायां श्रपयति । तद्बर्हिः । तन्मेक्षणम् २ शालामुखीये प्रचरन्ति ३ तेष्वेव देशेष्वग्निमा-ज्यभागानां प्रथमं यजति । पथ्यां स्वस्तिमुत्तमाम् ४ याः प्रायणीयस्य याज्या इत्युक्तम् ५ मैत्रावरुणीं गां वशामनूबन्ध्यामालभते ६ तस्या नि-रूढपशुबन्धवत्कल्पः ७ इम्त्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि मित्रा-वरुणाभ्यां गोर्वपाया मेदसः प्रेष्येति संप्रैषौ ८ एवमवदानेषु हविष इत्य-न्तौ नमति ९ तिस्रुऽनूबन्ध्या एके समामनन्ति १० मैत्रावरुणीं वैश्वदेवीं बार्हस्पत्यामिति ११ द्विरूपा मैत्रावरुणी । बहुरूपा वैश्वदेवी । रोहिणी बार्हस्पत्या १२ उपांशु वैश्वदेव्या मध्यतश्चरन्ति १३ ता न सर्वत्रालभेत वाजपेये राजसूये सत्रे सहस्रे सर्ववेदसे वा १४ यः कामयेत सर्वो मे य-ज्ञः स्यात्सरस इति स एतास्तिस्रोऽनूबन्ध्या आलभेत १५ अनूबन्ध्यावपा-यां हुतायां दक्षिणे वेद्यन्ते यजमानः केशश्मश्रु वापयते १६ अनूबन्ध्यायाः पशुपुरोडाशम् १७

इति त्रयोविंशी कण्डिका

देविकाहवींषि निर्वपति १ धात्रे पुरोडाशं द्वादशकपालमिति पञ्च २ या-

सु स्थालीषु सोमा भवन्ति तासूत्तराणि चत्वारि हवींषि श्रपयति ३ समानं तु स्विष्टकृदिडम् ४ देविका निर्वपेत्प्रजाकाम इति काम्याः ५ अनूबन्ध्यायां स्वरुं जुहोति । हृदयशूलमुद्वासयति ६ विष्णुक्रमान्क्रामति ७ राज्ञो राजंभव्यस्य वानूबन्ध्यायाः पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपत्यग्नये गृहपतय इति ८ समानं तु स्विष्टकृदिडम् ९ मैत्रावरुणीमामिक्षामनूबन्ध्यायाः स्थाने बह्वृचाः समामनन्ति । तस्या अग्रेण हविर्धानमासीनोऽनवानः होता यजति । हविराहुतिप्रभृतीडान्ता संतिष्ठते । प्रयाजप्रभृत्याज्यभागप्रभृति वा । इडान्तामेके समामनन्ति १० कृत्स्नसंस्थामेके ११ तामनु देविकाहवींषि निर्वपति १२ समानं तु स्विष्टकृदिडम् १३ सदसो हविर्धानस्य हविर्धानयोरिति प्रथमग्रथितान्ग्रन्थीन्विस्रस्योदीची हविर्धाने बहिर्वेदि निर्वर्तयति १४ आहवनीयादुल्मुकमादाय यजमानो वेदिमुपोषति यत्कुसीदमप्रतीत्तमिति १५ यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयाद्विश्वलोप विश्वदावस्य त्वेति १६ यदाकूतादिति तिसृभिर्धूममनुमन्त्रयते १७ अह्नां विधान्यामित्युक्तम् १८ अयं नो नभसा पुर इत्येतैर्यथाब्राह्मणमुपस्थाय १९

इति चतुर्विंशी कण्डिका

वेदमुपस्थ आधायान्तर्वेद्यासीनोऽतीमोक्षाञ्जपति १ अत्र विष्णुक्रमानेके समामनन्ति २ प्राजहितं समारोप्य शालामुखीयं द्वितीयं गतश्रियः प्राङुदङ्वोदवसायेदमू नु श्रेयोऽवसानमागन्म शिवे नो द्यावापृथिवी उभे इमे । गोमद्धनवदश्ववदूर्जस्वत्सुवीरा वीरैरनुसंचरेमेति देवयजनमध्यवसाय निर्मन्थ्योदवसानीयायास्तन्त्रं प्रक्रमयति ३ अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते । यथार्थं पात्रयोगः ४ निर्वपणकाल आग्नेयं पञ्चकपालं निर्वपति । अष्टाकपालं वा । यदि पञ्चकपालो गायत्र्यौ संयाज्ये । यद्यष्टाकपालः पङ्क्त्यौ ५ अनड्वान्दक्षिणा । अनडुदर्हं वा हिरण्यम् ६ सिद्धमिष्टिः संतिष्ठते । वैष्णवीं पूर्णाहुतिमुदवसानीयायाः स्थाने वाजसनेयिनः समामनन्ति ७ द्वादशगृहीतेन स्रुचं पूरयित्वेदं विष्णुर्विचक्रम इत्यन्तर्वेद्यूर्ध्वस्तिष्ठञ्जुहोति ८ सा यावद्रात्रेष्टिः संतिष्ठतेऽथ सायमग्निहोत्रं जुहोति । काले प्रातर्होमम् ९ संतिष्ठतेऽग्निष्टो-

मोऽग्निष्टोमः १०

इति पञ्चविंशी कण्डिका इति सप्तमः पटलः

इति त्रयोदशः प्रश्नः

उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकाराः १ उक्थ्येन पशुकामो यजेत । षोडशिना वीर्यकामः । अतिरात्रेण प्रजाकामः पशुकामो वा । अप्तोर्यामेणातिरात्रेण सर्वान्कामानवाप्नोति २ तेषामग्निष्टोमवत्कल्पः ३ उक्ताश्च विकाराः ४ यथा सदः क्रतुकरणं क्रतुपशवः षोडशिनः सोमक्रयणी पात्रमिति ५ उक्थ्यश्चेदग्निष्टोमचमसानुन्नयंस्त्रिभ्यश्चमसगणेभ्यो राजानमतिरेचयति ६ अग्नीन्नेष्टरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतुश्चमसमनून्नय होतृचमसे ध्रुवायावकाशं कुरूद्गात्रा पत्नीं संख्यापयाप उपप्रवर्तयेति संप्रैषः ७ अग्निष्टोमचमसैः प्रचर्य प्रातःसवनवदुक्थ्यं विगृह्णाति ८ एतावन्नाना । इन्द्रावरुणाभ्यां त्वेति प्रथमे ग्रहणसादनौ संनमति । इन्द्राबृहस्पतिभ्यां त्वेति द्वितीये । इन्द्राविष्णुभ्यां त्वेति तृतीये ९ उन्नेतः सर्वं राजानमुन्नय मातिरीरिचो दशाभिः कलशौ मृष्ट्वा न्युब्जेति सर्वसंस्थासूत्तमे गण एतत्संप्रेष्यति १०

इति प्रथमा कण्डिका

अग्नीदौपयजानङ्गारानाहरेत्येतदाद्याग्निष्टोमिकं कर्म सर्वसंस्थासु समानम् १ यद्यु वै षोडश्युक्थ्यचमसानामुत्तमं गणमुन्नयन्नेकस्मै चमसगणाय राजानमतिरेचयति २ षोडशिनो ग्रहणम् ३ प्रातःसवन उत्तमो धाराग्रहाणाम् ४ सवनेसवने वा ५ अथैकेषाम् । पूर्वयोः सवनयोः पुरस्तादुत्तमादुक्थ्यपर्यायादुक्थ्याद्गृह्णीयात्सर्वैः प्रचरिते । तृतीयसवन आग्रयणात् ६ अपि वा तृतीयसवन एवाग्रयणात्पशुकामस्य ७ नोक्थ्ये गृह्णीयात् । गृह्णीयाद्वा ८ अतिरात्रे पशुकामस्य । अतिरात्रे ब्रह्मवर्चसकामस्य ९ अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् १० सस्तुतशस्त्रो भवति ११ आतिष्ठ वृत्रहन्निति ग्रहणसादनौ १२ यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी । एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे । प्र ते महे विदथे शंसिषं

हरी । य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् । इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिर इत्येताभिश्चतसृभिः सन्नमभिमन्त्र्य १३

इति द्वितीया कण्डिका

समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोत्रमुपाकरोति १ बर्हिःस्थाने भवति २ श्वेतमश्वं पुरस्ताद्धारयन्ति । अरुणपिशङ्गं वा ३ ओथा मोद इव मदे मदा मोद इवोमथेति व्यतिषक्त उभयतोमोदः प्रतिगर आनुष्टुग्भ्यः ४ इन्द्राधिपतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति हुत्वेन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति षोडशिनं भक्षयति । आदित्यवद्गणेन चमसान् ५ अनुष्टुप् छन्दस इति भक्षमन्त्रं नमति ६ अरुणपिशङ्गोऽश्वो दक्षिणा । अश्वतरी वा ७ अतिरात्रश्चेत्षोडशिचमसानुन्नयंस्त्रयोदशभ्यश्चमसगणेभ्यो राजानमतिरेचयति ८ षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति ९ होतृचमसमुख्यः प्रथमो गणः । मैत्रावरुणचममुख्यो द्वितीयः । ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयः । अच्छावाकचमसमुख्यश्चतुर्थः १० इन्द्राय त्वापिशर्वरायेति मुख्यंमुख्यं चमसमनून्नयति ११ सर्वैन्द्री रात्रिः १२ अनुष्टुप् छन्दस इति सर्वत्र भक्षमन्त्रं नमति १३ प्रथमाभ्यां गणाभ्यामध्वर्युश्चरति । उत्तराभ्यां प्रतिप्रस्थाता १४ एष प्रथमः पर्यायः १५ एवं विहितो द्वितीयस्तृतीयश्च १६

इति तृतीया कण्डिका

अथ प्रतिप्रस्थाताश्विनं द्विकपालं निर्वपति १ होतृचमसमुख्यान्संधिचमसानुन्नयति २ त्रिवृद्राथंतरः संधिः ३ आश्विनं परःसहस्त्रं शस्त्रं भवति ४ तदुदित आदित्ये परिधीयते ५ तस्मिन्परिधिते होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । पुरोडाशं प्रतिप्रस्थाता ६ अश्विभ्यां तिरोअह्नियानां सोमानामनुब्रूह्यश्विभ्यां तिरोअह्नियानां सोमानां प्रेष्येति संप्रैषौ ७ तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति वा ८ न वा प्रस्थापयेत् ९ सह सोमैः पुरोडाशं प्रतिप्रस्थाता सर्वहुतं जुहोति १० पङ्क्तिश्छन्दस इति भक्षमन्त्रं नमति

११ अप्तोर्यामश्चेत्संधिचमसानुन्नयंश्चतुर्भ्यश्चमसगरोभ्यो राजानमतिरेचयति १२ यथा प्रथमे रात्रिपर्याये तथा मुख्या भवन्ति १३ आग्नेयान्प्रथमानुन्नयति । ऐन्द्रान्द्वितीयान् । वैश्वदेवांस्तृतीयान् । वैष्णवांश्चतुर्थान् १४ तेषां संधिचमसवत्प्रचरणकल्प इत्येके १५ अतिच्छन्दाश्छन्दस इति सर्वत्र भन्नमन्त्रं नमति १६

इति चतुर्थी कण्डिका इति प्रथमः पटलः

क्रतुपशव ऐकादशिनाश्च विकल्पन्ते १ तेषां समवाये यथाचोदितं संस्काराः २ तन्त्रमङ्गानि विभवन्ति ३ प्रत्यन्नार्थानि प्रतिसंस्कारमध्यावर्तन्ते ४ यथार्थमूहः ५ यूपाहुतिं हुत्वाग्निष्ठप्रथमांस्त्रयोदश यूपान्मन्त्रेण छिनत्ति ६ सर्वेषां शकलाहरणाव्रश्चनहोमाः ७ सर्वमुपशयं तन्नति ८ तथा पात्नीवतं छिनत्ति यथाधो नाभिसंमितो भविष्यतीति ९ यत्प्राग्वेदिसंमानात्तत्कृत्वा दशरथान्नामेकादशोपरां रज्जुं मीत्वा तस्याश्चतुर्विंशेन भागेन वेदिं मिमीते १० प्रक्रमस्थानीया भवति ११ अग्निष्ठं द्वाभ्यां रशनाभ्यां परिवीयैकादशिनी रशनाः परिवीयाग्निष्ठे वासयति १२ द्विरशना यूपाः १३ श्वोभूत आश्विनं गृहीत्वा यूपान्संमिनोति १४ सह वाग्निष्ठेन १५ तन्त्रमभ्रेरादानं परिलेखनोऽभ्यावर्तते १६ रथान्नमात्राणि यूपान्तरालानि १७ अग्निष्ठाद्दन्निणं परिलिख्योत्तरमग्निष्ठात्परिलिखति १८ एवं व्यत्यासमुदगपवर्गान्यूपान्संमिनोति १९ प्रतियूपं स्वरवः २० दन्निणत उन्नता भवति २१ उत्तरत उन्नतां मिनुयात्पितृलोककामस्य २२

इति पञ्चमी कण्डिका

सर्वान्समान्प्रतिष्ठाकामस्य १ ये त्रयो मध्यमास्तान्समान्पशुकामस्य । व्यतिषजेदितरान् २ आराग्रामभिचरतः ३ मध्य उन्नतो भवति । अनुपूर्वमन्तौ निनतौ ४ समवस्त्राविर्णीं वृष्टिकामस्य । मध्ये निनता भवति । अनुपूर्वमन्तावुन्नतौ ५ व्यतिषक्तां भ्रातृव्यतः ६ गर्तमितमित्युक्तम् ७ यदि कामयेत न्नत्रं विश ओजीयः स्यादित्यग्निष्ठाद्दन्निणान्वर्षीयसो मिनुयात् ८ विट् न्नत्रादित्येतद्वा विपरीतम् ९ उपरसंमितां मिनुयात्पितृलोककामस्य । मध्येन संमितां रशनसंमितां च मनुष्यलोककामस्य । चषालसं-

मितामिन्द्रियकामस्येति १० आयामत उपराणि समानि स्युः । तिर्यक्तो मध्यानि रशनाश्च । प्रथिम्नश्चषालानि ११ उपशयं द्वाभ्यां रशनाभ्यां परिवीयाग्रेण दक्षिणं यूपं प्राञ्चं निदधाति । दक्षिणेन वा । इदमहममुमामुष्यायणमिन्द्रस्य वज्रेणाभिनिदधामीति द्वेष्यं मनसा ध्यायन् १२ आग्नेयं कृष्णग्रीवमग्निष्ठ उपाकरोति । उत्तरे सारस्वतीं मेषीम् । दक्षिणे सौम्यं बभ्रुम् १३ एवं व्यत्यासं दक्षिणापवर्गान्पशूनुपाकरोति १४ वारुणमन्ततो दक्षिणत उदञ्चम् १५ यदि कामयेत योऽवगतः सोऽपरुध्यतामित्युक्तम् १६

इति षष्ठी कण्डिका

आरण्यं पशुमाखुं वोपशये निर्दिशेत् १ असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन् २ यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात् ३ प्रतिपशु बर्हींषि वपाश्रपण्यः कुम्भ्यो हृदयशूलाश्च ४ तन्त्रमग्नेर्हरणं तथाध्रिगुः संज्ञप्तहोमो रशनानामुदसनं परिवप्यौ वपाश्रपणीनामनुप्रहरणमभिहोमो मार्जनं च ५ अभ्यावर्तते मनोता ६ तन्त्रं वा ७ सर्वेषां त्र्यङ्गानि समवत्तं च ८ उद्रेकान्समवनीय दिशः प्रति यजति ९ उत्तमे पशौ वनस्पतिं यजति । स्विष्टकृतं च १० सर्वेषां गुदकाण्डैरुपयज उपयजति । जाघनीभिश्च पत्नीः संयाजयन्ति ११ अनूबन्ध्यावपायां हुतायामग्रेण शालामुखीयं पात्नीवतं मिनोत्यधोनाभिमनवस्तीर्णोऽचषालम् १२ तस्मिंस्त्वाष्ट्रं साण्डं लोमशं पिङ्गलं पशुमुपाकृत्य पर्यग्निकृतमुत्सृज्याज्येन शेषं संस्थापयेत् १३ यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आज्यस्यावद्येत् १४ पशुधर्माज्यं भवति १५ शालामुखीये प्रचरन्तीति विज्ञायते १६ अपि वा अर्यग्निकृतमेवोत्सृजेत् । न संस्थापयेत् १७ पशुपुरोडाशाद्यनूबन्ध्यायाः शेषं संस्थापयेत् १८ यदि कापेयी पश्वेकादशिनी स्यादाग्नेयमभित ऐन्द्रौ पशू भवतः । उत्तरतः सारस्वतं सौम्यं पौष्णं बार्हस्पत्यमिति । दक्षिणतः सावित्रं वैश्वदेवं मारुतं वारुणमिति १९ तामेतां कापेया विदुः । तामतिरात्रचरम आलभेत २० साहीनेषु शब्दसंयोगात् २१ सत्त्रीयेतरा भवति २२

इति सप्तमी कण्डिका इति द्वितीयः पटलः

वासिष्ठो ब्रह्मा ज्योतिष्टोमे १ यो वा कश्चित्स्तोमभागान्विद्यात् २ आध्व-

र्यवेषु कर्मसु स्तुतशस्त्रयोश्च वाचं यच्छति । अन्तर्धौ च ३ यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् ४ राजनि मीयमाने महावेद्यामुत्तरवेद्यां च क्रियमाणायामग्नौ मीयमाने कृष्यमाण ओप्यमाने चितेश्चितेरुपधीयमानायाः संचितकर्मसूखाकर्मसु च क्रियमाणेषु दक्षिणत आस्ते ५ राजन्योह्यमानेऽग्नौ प्रणीयमान उखामच्छ गच्छतामोह्यमानायां वसतीवरीः सवनीयाश्चाच्छ गच्छतामाह्रियमाणासु नैर्ऋतीरुपधास्यतां चित्यग्नीनां च प्रणीयमानानां दक्षिणत एति ६ सदोहविर्धानेषु संमीयमानेष्वन्तरा चात्वालोत्करावन्ववेत्यापरेणोत्तरवेदिं दक्षिणातिक्रम्योपविशति ७ होष्यमाणेषु प्रत्यतिक्रम्योत्तरेण हविर्धानं गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्यापरेण शालामुखीयं दक्षिणातिक्रम्योपविशति ८

इत्यष्टमी कण्डिका

एवावन्दस्वेत्युपस्थे राजानं कुरुते १ हुते पूर्वो निष्क्रम्यान्वङ्ङग्नेरेति २ आग्नीध्रीयं प्राप्य प्रतिप्रस्थात्रे राजानं प्रदायोत्तरेणाग्नीध्रीयं दक्षिणातिक्रम्योपविशति । पूर्ववदुपस्थे राजानं कुरुते । हुते पूर्वो निष्क्रम्यापरया द्वारा हविर्धानं राजानं प्रपाद्याध्वर्यवे प्रदायोत्तरेण हविर्धानं गत्वापरेणोत्तरवेदिं दक्षिणातिक्रम्योपविशति । अग्नीषोमीयस्या वपाया होमादास्ते । हुतायां मार्जयते । वसतीवरीषु परिह्रियमाणासु दक्षिणत आस्ते । महारात्रे बुध्यमानेषु बुध्यते । उपाकृते प्रातरनुवाके वाचं यच्छत्या परिधानीयायाः । सवनीयासु प्रपाद्यमानासु पूर्वया द्वारा हविर्धानं प्रविश्याग्रेण खरं दक्षिणातिक्रम्योपविशति ३ राजनि मीयमानेऽभिषूयमाणे ग्रहेषु च गृह्यमाणेषु वाचं यच्छत्याग्रयणस्य ग्रहणात् ४ वैप्रुषाञ्जुह्वत्सु जुहोति ५ पवमानेषु समन्वारब्धः सर्पति ६ ब्रह्मन्स्तोष्यामः प्रशास्तरित्युच्यमाने देव सवितरेतत्ते प्राहेत्यनुद्रुत्य ७

इति नवमी कण्डिका

रश्मिरसि क्षयाय त्वा क्षयं जिन्वों स्तुतेति प्रसौति १ सर्वस्तोत्राणामेष कल्पः २ उत्तरमुत्तरं स्तोमभागानां दधाति ३ द्वादशाग्निष्टोमे । पञ्चदशो-

क्थ्ये । षोडश षोडशिनि । सप्तदश वाजपेये । एकान्नत्रिंशतमतिरात्रे । त्रयस्त्रिंशतमप्तोर्यामे ४ स्तुते पवमाने यथेतं गत्वापरेणोत्तरवेदिं दक्षिणाति-क्रम्योपविशति । सवनीयस्या वपाया होमादास्ते ५ हुतायां मार्जयित्वा प्रातःसवनायसं प्रसर्पत्सु ग्रहावकाशैः शृतंकारैश्चोपस्थायोत्तरेण हविर्धानं ग-त्वा दक्षिणेन मार्जालीयं धिष्णियं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण प्रशास्तुर्धिष्णियं दक्षिणातिक्रम्योपविशति ६ यत्रास्मै ब्रह्मचमसमाहरति तं प्रतिगृह्य भक्षयति यथेतरे चमसान् ७ उपाकृते स्तोत्रे वाचं यच्छत्या श-स्त्रयाज्यायाः ८ संस्थिते सवने यथेतं प्रतिनिष्क्रामति ९ एवं विहित उ-त्तरयोः सवनयोः संचरो ब्रह्मत्वं च १० आध्वर्यव एवातोऽन्यानि कर्माणि ब्रह्मण आम्नातानि भवन्ति ११ अवभृथं गच्छतां दक्षिणतो गच्छति १२ एवं विहितं सर्वसोमानां ब्रह्मत्वम् १३

इति दशमी कण्डिका इति तृतीयः पटलः

दक्षिणां प्रतिग्रहीष्यन्सप्तदशकृत्वोऽपान्य व्यावृत्य प्रतिगृह्णीयात् १ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणे । अग्नये हिरण्यं तेनामृतत्वमश्याम् । वयो दात्रे मयो मह्यमास्तु प्रतिग्रहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता कामः प्रतिग्रहीता । कामं समुद्रमाविश कामेन त्वा प्रतिगृ-ह्णामि । कामैतत्ते । एषा ते काम दक्षिणा उत्तानस्त्वाङ्गीरसः प्रतिगृह्णा-त्विति २ सोमाय वासः । रुद्राय गाम् । वरुणायाश्वम् । प्रजापतये पुरुषम् । मनवे तल्पम् । त्वष्ट्रेऽजाम् । अग्नये वा । पूष्णोऽविम् । निर्ऋत्या अश्वतरगर्दभौ हिमवतो हस्तिनम् । गन्धर्वाप्सराभ्यः स्रगलंकरणे । विश्वेभ्यो देवेभ्यो धान्यम् । वाचेऽन्नम् । ऊर्जे वा । ब्रह्मण ओदनम् । समुद्रायापः । उत्तानायाङ्गीरसायानः । वैश्वानराय रथम् ३ वैश्वानर्यर्चा रथं प्रतिगृह्णीयाद्वैश्वानरः प्रत्नथा नाकमारुहद्दिवः पृष्ठं भन्दमानः सुमन्मभिः ४

इत्येकादशी कण्डिका

स पूर्ववज्जनयज्जन्तवे धनं समानमज्मा परियाति जागृविरिति १ यत्किं-चाप्राणत्तत्सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णा त्वित्येव प्रतिगृह्णीयात् । यद्वा-

नाम्नातमन्त्रम् २ सर्वत्र पुरस्तात्सावित्र उपरिष्टादन्वाधिः ३ ग्नास्त्वाकृन्तन्नपसस्त्वातन्वत वरूत्रयस्त्वावयन्नित्येतद्वासस्यनुषजति पुरस्ताद्दैवतात् ४ त इमे तान्त्रीणां दक्षिणानां प्रतिग्रहणाः स्युः ५ विज्ञायते च । देवा वै वरुणमयाजयन् । स यस्यैयस्यै देवतायै दक्षिणामनयत्तामव्लीनात् । तेऽब्रुवन्व्यावृत्य प्रतिगृह्णाम तथा नो दक्षिणा न व्लेष्यतीति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तान्दक्षिणा नाव्लीनात् । य एवंविद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनातीति । तान्त्रीरेवाधिकुरुते ६ बर्हिषा प्रतीयाद्गां वाश्वं वा ७ अन्नेन पुरुषं हस्तिनं वा ८ गन्धैः प्रियवद्येन च तल्पम् ९

इति द्वादशी कण्डिका इति चतुर्थः पटलः

संवत्सरं चतुर्णामेको नाश्नीयात् । तद्व्रतमिति विज्ञायते चतुर्होतॄणामनुब्रुवाणस्य १ एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः २ यः प्रजया पशुभिर्न प्रजायेत स द्वादशाहानि तप्तमुदकं पिबन्बरासीं वसानोऽधः शयीत ३ द्वादश्याः प्रातः प्राङुत्क्रम्य प्राण्यापान्येन्द्रं गच्छ स्वाहेत्यपान्य दशहोतारं व्याख्याय चतुर्होतारं जुहुयाच्चतुर्गृहीतेनाज्येन ४ अर्धं वा पूर्वेण ग्रहेण । अर्धमुत्तरेण ५ यः कामयेत प्रजायेयेति स द्वादशगृहीतेन स्रुचं पूरयित्वा दशहोतारं मनसानुद्रुत्य दर्भस्तम्बे सग्रहं जुहुयात् । अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण ६ यं ब्राह्मणं विद्यां विद्वांसं यशो नर्छेत्सोऽरण्यं परेत्य दर्भस्तम्बमुद्ग्रथ्य ब्राह्मणं दक्षिणतो निषाद्य चतुर्होतॄन्व्याचक्षीत ७ सर्वान्ससंभारयजुष्कानित्याश्मरथ्यः । होतॄनित्यालेखनः ८ यो दक्षिणत आस्ते तस्मै वरं ददाति ९ अथैता देवानां पत्नयः । ताभिः प्रजाकामं पशुकामं वा याजयेत् १० अन्तरा त्वष्टारं देवानां च पत्नीश्चत्वारिचत्वारि पदानि प्रतिसंख्याय यजेत ११ यदि संवत्सरं न जायेत तत्परो न सूर्क्षेत् १२ दशहोत्राभिचरन्यजेत् १३ स्वकृत इरिणे प्रदरे वा जुहुयात् १४

इति त्रयोदशी कण्डिका

यद्वाचः क्रूरं तेन वषट्करोति । वाच एवैनं क्रूरेण प्रवृश्चति । ताजगार्तिमार्छतीति विज्ञायते १ यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जु-

हुयाच्चतुर्गृहीतेनाज्येन । अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण । अस्य वीरो जायते २ न त्वेनमपरोऽनुजायते ३ वरो दक्षिणा ४ एतेनैव चतुर्होत्रा राजानं संग्रामे संयत्ते याजयेत् ५ यत्तत्र विन्देरंस्ततो द्वादशशतं दक्षिणाः ६ पञ्चहोत्रा पशुकामं याजयेत् ७ चतुर्गृहीतेनाज्येन । अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण । चतस्रो दक्षिणा ददात्यश्वं हिरण्यं गां वास इति ८ एतेनैव दक्षिणावर्जमामयाविनं स्वर्गकामं वा याजयेत् ९ मनसा स्वर्गकामस्य जुहुयात् १० सप्तहोत्रा यज्ञविभ्रष्टं याजयेच्चतुर्गृहीतेनाज्येन । अर्धं वा पूर्वेण ग्रहेणार्धमुत्तरेण ११ यः कामयेत बहोर्भूयान्स्यामिति स दशहोतारं प्रयुञ्जीत । यः कामयेत वीरो म आजायेतेति स चतुर्होतारम् । यः कामयेत पशुमान्स्यामिति स पञ्चहोतारम् । यः कामयेतर्तवो मे कल्पेरन्निति स षड्ढोतारम् । यः कामयेत सोमपः सोमयाजी स्यामा मे सोमपः सोमयाजी जायेतेति स सप्तहोतारम् १२ अथैष ऋतुमुखीयः पड्ढोता वाग्घोतेति । तस्य वदत्यृतुमुखऋतुमुखे जुहुयादिति । स सार्वकामः १३

इति चतुर्दशी कण्डिका

यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन पुरस्तात्प्रत्यङ्तिष्ठन्प्रतिलोमं विग्राहम् । प्राणानेवास्योपदासयति । यद्येनं पुनरुपशिक्षेयुराग्नीध्र एव जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन पश्चात्प्राङासीनोऽनुलोममविग्राहम् । प्राणानेवास्मै कल्पयतीति विज्ञायते १ स यः कामयेत प्रियः स्यामिति यं वा कामयेत प्रियः स्यादिति तस्मा एतं स्थागरमलंकारं कल्पयित्वा दशहोतारं पुरस्ताद्व्याख्याय चतुर्होतारं दक्षिणतः पञ्चहोतारं पश्चात्षड्ढोतारमुत्तरतः सप्तहोतारमुपरिष्टात्संभारैश्च पत्निभिश्च मुखेऽलंकृत्यास्यार्धं व्रजेत् । प्रियो हैव भवतीति विज्ञायते २ त इमे चतुर्होतारो यत्र होमार्थाः सग्रहाः सस्वाहाकारास्तत्र प्रयुज्येरन् । यत्राहोमार्था अग्रहा अस्वाहाकाराः ३ यत्र जपा याजमानाः ४ तेषां ये विहारसंयुक्ता आहिताग्नेस्तान्प्रतीयात् । उभयोरितरान् ५

इति पञ्चदशी कण्डिका इति पञ्चमः पटलः

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहप-

तिमथर्युम् । अग्निनाग्निः समिध्यते । सप्त ते अग्ने । मनो ज्योतिर्जुषताम् । त्रयस्त्रिंशत् । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । अयं देवो बृहस्पतिः सं तत्सिञ्चतु राधसा । विश्वकर्मा हविरिदं जुषाणः संतानैर्यज्ञं समिमं तनोतु । या व्युष्टा उषसो याश्च निम्रुचस्ता संदधामि हविषा घृतेन । अयाश्चाग्नेऽसि । त्वं नो अग्ने । स त्वं नो अग्ने । भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषुन् जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह । शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः । प्रेद्धो अग्ने दीदिहीत्येषा १

इति षोडशी कण्डिका

श्रुत्कर्णाय कवये वेद्याय नमोभिर्नाकमुपयामि शंसन् । यतो भयमभयं तत्कृधी नोऽग्ने देवानामव हेड इयक्षव । अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् । यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः । घृतप्रतीको घृतपृष्ठो अग्निर्घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन्यजताद्देव देवान् । आयुर्दा अग्ने । इमो अग्ने । सप्त ते अग्ने । मनो ज्योतिर्जुषताम् । त्रयस्त्रिंशत् । यन्मे मनसः । विश्वकर्मा । अग्निं युनज्मि । इन्धानास्त्वा । अग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु । वायुर्न ईडित ईडितव्यैर्देवैरान्तरिक्षैः पातु । सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु । विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पातु । अग्निर्यजुर्भिः पूषा स्वगाकारैस्त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभेऽनु मारभध्वं स्वाहेत्येतैस्त्रिभिरनुवाकैरविज्ञातप्रायश्चित्ते सोमे त्रयस्त्रिंशतमाहुतीर्जुहोति १ त्रयस्त्रिंशतं चाग्नीध्रे यज्ञतनूः २ पृथिवि भूवरि सिनीवाल्युरन्ध्र आचित्ते मनस्ते भुवो विवस्त इति वसतीवरीषु सवनीयासु वा विषिक्तासु सप्ताहुतीर्हुत्वा ३

इति सप्तदशी कण्डिका

य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं व ऋध्यासम् । सोमस्याज्यमसि हविषो हविर्ज्योतिषां ज्योतिः । विश्वेषां वो देवानां देवताभिर्गृह्णामीत्य-भिमन्त्र्य सं वः सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं वोऽयमग्निः सिञ्चत्वायुषा च धनेन च । सर्वमायुर्दधातु मे । मान्दा वाशाः । आपो भद्राः । आदित्पश्यामि । आपो हि ष्ठा मयोभुव इत्येताभिः सप्तभिः सं-सिञ्चेदभि वा मन्त्रयेत १ यदि प्रातःसवने प्राग्घोमात्सोममतिरिक्तं पश्येत्तं चमसेष्वभ्युन्नयेदुपजुहुयाद्वा २ हुते दृष्ट्वा स्तुतशस्त्रवन्तं कुयात् ३ होतृ-चमसमुख्यांश्चमसानुन्नीय बृहतः स्तोत्रमुपाकरोति ४ गौर्धयति मरुतामिति धयद्वतीषु स्तुवीरन् ५ अस्ति सोमो अयं सुत इति वैतासु बृहता गौरिवी-तेन वा स्तुवीरन् ६ ऐन्द्रावैष्णवं होतानुशंसति ७ इन्द्राविष्णुभ्यां पीत-स्येति भक्षमन्त्रं नमति ८ यदि माध्यंदिन एतदेव ९ स्तोत्रे विकारः । बरामहाँ असि सूर्येति सौरीषु बृहता गौरिवीतेन वा स्तुवीरन् १० तथैव होतानुशंसति । तथा भक्षमन्त्रः ११ यदि तृतीयसवनेऽतिरिच्येतोक्थ्यं कुर्वीत १२ यद्युक्थ्ये षोडशिनम् । यदि षोडशिन्यतिरात्रम् । यद्यतिरात्रे द्विरात्रम् । यदि द्विरात्र एकस्तोत्रमेव १३ तत्र वैष्णवीषु शिपिविष्टवतीषु बृहता गौरिवीतेन वा स्तुवीरन् १४ तथैव होतानुशंसति । तथा भक्षम-न्त्रः १५

इत्यष्टादशी कण्डिका इति षष्ठः पटलः

यदि सोमौ संसुतौ स्यातामादितश्चतुर्भिः संभारयजुर्भिर्हुत्वा महारात्रे प्रातरनु-वाकमुपाकृत्यान्वारब्धे यजमाने जुहोति संवेशायोपवेशाय गायत्रियास्त्रिष्टु-भो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहेति १ एवं सवनादौसवनादा-वुत्तरैरुत्तरैश्चतुर्भिः संभारयजुर्भिश्छन्दसा चोत्तरेणोत्तरेण पाङ्क्तात् २ पञ्चसव-नो यज्ञः । त्रीणि सवनान्यवभृथोऽनूबन्ध्येति । पञ्च समिद्धेऽग्नौ हूयन्त प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टमिति ३ पुरस्तात्पाशु-कात्स्विष्टकृतोऽध्वर्युर्जपत्येतिवन्ति प्रेतिवन्ति वाज्यानि ४ मरुत्वतीवृष-ण्वतीर्वा प्रतिपदः ५ अभीवर्तो ब्रह्मसाम ६ उभे बृहद्रथंतरे भवतः ७ यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत । यद्युक्थ्यः षोडशिनम् ।

यदि षोडश्यतिरात्रम् । यद्यतिरात्रो द्विरात्रम् । यदि द्विरात्रस्त्रिरात्रम् । यदि त्रिरात्र एकस्तोत्रमेव ८ अभिजित्कार्योऽभिजित्यै । विश्वजित्कार्यो विश्वजित्यै । सर्वपृष्ठः सर्वस्तोमोऽतिरात्रो भवति सर्वस्याप्त्यै सर्वस्याव-रुद्ध्या इति विज्ञायते ९ सजनीयं शस्यं विहव्यं शस्यमगस्त्यस्य कयाशु-भीयं निष्केवल्यम् । तानि शंसेत् १० सजनीयं प्रातःसवनिके वैश्वदेवे ऽनुप्रोहेत् । विहव्यं माध्यंदिनीये मरुत्वतीये । अगस्त्यस्य कयाशुभीयं निष्केवल्यं तार्तीयसवनिके वैश्वदेवेऽनुप्रोहेत् ११

इत्येकोनविंशी कण्डिका

तत्रेमाः सामचोदना भवन्ति । तौरश्रवसं कार्यम् । वसिष्ठस्य निहवः कार्यः । अभीवर्तं ब्रह्मसाम कुरुतात् । उभे बृहद्रथंतरे कुरुतात् । अभि-जितं विश्वजितं वा यज्ञक्रतुं कुरुतात् । क्रोशानुक्रोशे कुरुतादिति १ पुर-स्तात्प्रातःसवनात्संप्रेष्यति २ पूर्वः संस्थाप्यः । अत्यभिषुत्यं वा । द-क्षिणाभिर्वा वर्षीयांसं यज्ञक्रतुं कुर्वीत ३ यावद्रथाह्नमन्तरा गिरिर्गिरिभिद्वा नदी व्यवेयात्पर्वतान्तरये वा नानाराज्ययोर्वा संसवो नाविद्विषाणयोः संस-वो विद्यत इति कङ्कतिब्राह्मणं भवति ४ यत्र दीक्षितानामुपतापः स्याद्य-जमानायतने शयीत ५ तंपरिगृह्याग्नीध्रं नयेत् ६ परीमं परि ते ब्रह्मणे द-दामि ब्रह्म परिददातु देवताभ्यः । वषट्कारस्त्वा भिषज्यतु सह विश्वैर्देवैः । वसव एतद्वः प्रातःसवनं रुद्रा एतद्वो माध्यंदिनं सवनं विश्वे देवा एतद्वस्तृ-तीयसवनम् । तद्रक्षध्वं तद्भिषज्यत तद्गोपायत तद्वो मा विगादिति सर्व-त्रानुषजति ७ आग्नीध्रीयमुपसमाधाय संपरिस्तीर्य ब्राह्मणं दक्षिणतो दर्भेषु निषाद्योत्तरत उदपात्रमुपनिधाय तस्मिन्नेकविंशतिं यवान्दर्भपुञ्जीलांश्चावधाय जीवा नाम स्थ ता इमं जीवयत जीविका नाम स्थ ता इमं जीवयत संजी-विका नाम स्थ ता इमं संजीवयतेति प्रतिब्रूयात् ८

इति विंशी कण्डिका

या जाता ओषधय इत्योषधिसूक्तेनैनमेताभिरद्भिरभिषिञ्चति १ आपः प्रजा-पतेः प्राणा यज्ञस्य भेषजमिति चैनमाचमयन्ति २ आथैनमभिमृशन्ति ३ उपांश्वन्तर्यामौ ते प्राणापानौ पातामुपांशुसवनस्ते व्यानं पातु वाचं ते ऐन्द्र-वायवः पातु दक्ष क्रतू ते मैत्रावरुणः पातु चक्षुषी ते शुक्रामन्थिनौ पातां श्रोत्रं

त आश्विनः पात्वात्मानं त आग्रयणः पात्वङ्गानि त उक्थ्यः पात्वायुष्टे ध्रुवः पात्वसावसाविति सर्वत्रानुषजति ४ अथात्मानं प्रत्यभिमृशत्युपांश्वन्तर्यामौ मे प्राणापानौ पातामिति ५ एवं क्रामत्या ध्रुवात् ६ पुष्टिपतये पुष्टिश्चक्षुषे चक्षुः प्राणाय प्राणमात्मन आत्मानं वाचे वाचमस्मै पुनर्धेहि स्वाहेत्याहुतिं हुत्वा पूर्ववदभिमर्शः ७ यदि म्रियेत प्रागवभृथादग्न्यवभृथं कुर्वीरन् ८ अवभृथं वा गमयित्वा प्रोक्ष्यैनमभ्युदाहृत्य स्वैरग्निभिर्यथालोकं दहेयुः ९ एतावदेकाहे १० अहर्गणेष्वाहर दहेत्युक्त्वा दक्षिणाग्नेरग्निमाहृत्य निर्मन्थ्येन वा दग्ध्वा दक्षिणेन मार्जालीये मृतस्य दहनम् ११ तूष्णीं तदहः परिसमाप्य पत्नीसंयाजान्ते कुम्भेऽस्थीनि संभृत्य मार्जालीये निदधाति १२ उद्गातारस्तिसृभिः सर्पराज्ञीभिरप्रतिहृताभिः स्तुवीरन् १३

इत्येकविंशी कण्डिका

ऋत्विजो होतृप्रथमाः प्राचीनावीतिनो यामीरनुब्रुवन्तः सर्पराज्ञीनां कीर्तयन्तो दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वन्तस्त्रिः प्रसव्यं परियन्त्यप नः शोशुचदघमिति १ सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वन्तस्त्रिः प्रतिपरियन्त्यप नः शोशुचदघमिति २ ते यदोदञ्चः संपद्यन्तेऽथैभ्योऽध्वर्युर्दक्षिणतोऽश्मानं परिधिं दधातीमं जीवेभ्यः परिधिं दधामि मा नो नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेनेति ३ अग्निष्टोमः सोम ऐन्द्रवायवाग्रा मैत्रावरुणाग्रा वा ४ यामीभिः स्तुवते ५ स्तोत्रेस्तोत्रे ऽस्थिकुम्भमुपनिदधाति ६ मार्जालीये भक्षान्निनयन्ते ७ अग्न आयूंषि पवस इति प्रतिपदं कुर्वीरन् ८ रथंतरसामैषां सोमः स्यात् ९ आयुरेवात्मन्दधतेऽथो पाप्मानमेव विजहतो यन्तीति विज्ञायते १० यद्यु वै नाथवान्स्याद्दग्ध्वैनं कृष्णाजिनेऽस्थीन्युपनह्य निधाय योऽस्य स्वो नेदिष्ठी स्यात्तत्स्थाने तं दीक्षयित्वा तेन सह यजमाना आसीरन् ११ संवत्सरेऽस्थीनि याजयेयुः १२ व्यापातादित्याश्मरथ्यः । ओदवसानीयादित्यालेखनः १३ अग्निष्टोमः सोम इत्येतदादि १४ पूर्ववद्द्वादशं शतं दक्षिणाः १५

इति द्वाविंशी कण्डिका इति सप्तमः पटलः

यदि सत्त्रायागूर्य न यजेत विश्वजितातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत १ त्रैधातवीयामेके सहस्रदक्षिणां समामनन्ति २ सत्रे दीक्षित्वा यदि साम्युत्तिष्ठा सेत्सोममपभज्य विश्वजितातिरात्रेण पूर्ववद्यजेत ३ यदि दीक्षासूत्तिष्ठासेदवलिख्योखायास्तैरन्यां मृदं संसृज्योखां कारयेत् ४ अवलिख्य पशुशिरसां तूष्णीकेष्वाश्लेषयेत् ५ यद्युपसत्सु या चिता चितिः स्यान्नं तामावर्तयेत् ६ तूष्णीकामावर्तयेत् ७ मन्त्रवतीमित्यपरम् ८ चितेऽग्नावुत्तिष्ठतो नाग्निचित्या विद्यते । तूष्णीं वाग्निं चिन्वीत । मन्त्रवन्तमित्यपरम् ९ प्रणीतेऽग्नौ तूष्णीमन्यं प्रणयेत् । मन्त्रवन्तमित्यपरम् १० करणेभ्योऽपाददीत महावेदेरुत्तरवेदेर्धिष्ण्योपरवखरसदोहविर्धानेभ्य इति । तानीतरेष्वप्यर्जयेत् ११ यदि सर्वैरात्रिपर्यायैरस्तुतमभिव्युच्छेत्षड्भिरैन्द्रावैष्णवीभिर्होत्रे स्तुयुः । तिसृभिस्तिसृभिरितिरेभ्यः १२ यदि द्वाभ्यां होत्रे मैत्रावरुणाय च पूर्वस्मिन्पर्याये स्तुयुः । ब्राह्मणाच्छंसिनेऽच्छावाकाय चोत्तरस्मिन् १३ यद्येकेन पञ्चदशभिर्होत्रे स्तुयुः । पञ्चभिःपञ्चभिइरितरेभ्यः १४ अग्ने विवस्वदुषस इत्याश्विनस्य प्रतिपदं दध्यात् १५

इति त्रयोविंशी कण्डिका

यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेत १ सवा अपि दाशतयीरनुब्रूयात् २ येषां दीक्षितानामाहवनीय उद्वायेदाग्नीध्रादुद्धरेत् । यदाग्नीध्रो गार्हपत्यात् । यद्गार्हपत्योऽत एव पुनर्मन्थेत् ३ यस्माद्दारोरुद्वायेत्तस्यारणी कुर्यात् ४ क्रमुक उपज्वलनः ५ महर्त्विग्भ्यश्चतुरो वरान्दद्यात् ६ यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यार्धमन्तर्धायर्जीषेण सहाभिषुणुयात् । अर्धमभ्युन्नायं ग्रहैः प्रचरेयुः ७ महर्त्विग्भ्यश्चतुरो वरान्दद्यात् ८ यस्याक्रीतं सोममपहरेयुः क्रीणीयादेव ९ यदि क्रीतं यो नेदिष्ठी स्यात्तत आहृत्याभिषुणुयात् १० मोमाहाराय सोमविक्रयिणे वा यथाश्रद्धं दद्यात् ११ सोमाभावे पूतीकानभिषुणुयात् । पूतीकाभाव आदारान्फाल्गुनानि च यानि श्वेततूलानि स्युः । तदभावे याः काश्चैषधीः क्षीरिणीररुणदूर्वाः कुशान्वा हरितानिति वाजसनेयकम् १२ अप्यन्ततो व्रीहियवान् १३ प्रतिधुषा प्रातःसवने सर्वान्सोमाञ्छ्रोणीयात् । शृतेन माध्यंदिने सवने । दध्ना तृतीयसवने नीतमिश्रेण वा १४ अथैकेषाम् । प्रति-

धुक्च प्रातःसवने पूतीकाश्च । शृतं च माध्यंदिने सवने पूतीकाश्च । दधि च तृतीयसवने पूतीकाश्चेति १५ अग्निष्टोमः सोमः स्याद्रथंतरसामा १६ य एवर्त्विजो वृताः स्युस्त एनं याजयेयुः १७ एकां गां दक्षिणां दद्यात्तभ्य एव १८ पुनः सोमं क्रीणीयात् १९ अवभृथादुदेत्य पुरस्ताद्द्वादश्यास्तस्मा एव क्रतवे पुनर्दीक्षेत २० तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात् २१

इति चतुर्विंशी कण्डिका

यदि सदोहविर्धानान्यभिदह्येरन्ग्रहानध्वर्युः स्पाशयेत् । स्तोत्राण्युद्गाता । शस्त्राणि होता १ अनभिदग्धे सोमे पार्श्वतो देवयजनमध्यवसाय कृतान्तादेव प्रक्रामेयुः २ अभिदग्धे तु तत्प्रायश्चित्तं यदपहृते ३ गोः स्थाने पञ्च गा दद्यात् । पञ्च वा वरान् ४ यदि प्रातःसवने ग्रावाणं नाधिगच्छेत्पलाशदण्डमाहृत्य तेनैवाभिषुणुयात् । एतदेवास्य प्रायश्चित्तं भवतीति विज्ञायते ५ यदि माध्यंदिने यदि तृतीयसवन एतदेव ६ यदि प्रातःसवने ग्रावा शीर्येत पुरस्ताद्बहिष्पवमानाद्द्युतानस्य मारुतस्य ब्रह्मसाम्ना स्तुवीरन् ७ ब्रह्मसाम्ना वैव ८ यदि माध्यंदिने यदि तृतीयसवन एतदेव पुरस्तात्पवमानेभ्यः स्तुवते ९ यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीष्वित्युक्तम् १० अथैकेषाम् । यदि प्रातःसवने कलशो दीर्येत वषट्कारनिधनं ब्रह्मसाम कुर्यादिति । असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा शूषाय स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा गणश्रिये स्वाहा मलिम्लुचे स्वाहा ज्योतिषे स्वाहाभिभुवे स्वाहाधिपतये स्वाहा दिवां पतये स्वाहेति त्रयोदशाज्याहुतीर्हुत्वा ११

इति पञ्चविंशी कण्डिका

इन्द्रस्य ग्रहोऽस्यगृहीतो ग्राह्यो देवानां पूरसि तं त्वा प्रपद्ये सह ग्रहैः सह प्रग्रहैः सह प्रजया सह पशुभिः सहर्त्विग्भ्यः सह सोग्यैः सह सदस्यैः सह दाक्षिणेयैः सह यज्ञेन सह यज्ञपतिना । इन्द्राग्नी परिधी मम वातो देवपुरा मम । ब्रह्म वर्म ममान्तरं तं त्वेन्द्रग्रह प्रपद्ये सगुः साश्वः । वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यः । वर्म मे ब्रह्मणस्पतिर्मा मा प्रापदतो भयम् । इन्द्राग्नी परिधी मम वातो देवपुरा मम । ब्रह्म वर्म ममान्तरं तं त्वेन्द्रग्रह

प्रविशानि सगुः साश्वः सपूरुषः । सह यन्मे अस्ति तेनेति दीर्णं यजमानो ऽनुमन्त्रयते १ अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय गायत्र्या अभिभूत्यै स्वाहा । अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय त्रिष्टुभोऽभिभूत्यै स्वाहा । अरिष्ट्या अव्यत्थ्यै संवेशायोपवेशाय जगत्या अभिभूत्यै स्वाहा । अरिष्ट्या अव्यथ्यै संवेशायोपवेशायानुष्टुभोऽभिभूत्यै स्वाहा । अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय पङ्क्त्या अभिभूत्यै स्वाहेत्येतैः प्रतिमन्त्रमनुसवनं दीर्णे पञ्चाहुतीर्जुहोतीत्येके २ यदि बहिष्पवमानं सर्पतां प्रस्तोतापच्छिद्येत यज्ञस्य शिरश्छिद्येत । ब्रह्मणे वरं दत्त्वा स एव पुनर्वर्तव्यः ३ यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत । सर्ववेदसं दद्यात् ४ यद्युद्गाता यज्ञेन यजमानो व्यृध्येत । अदक्षिणः स यज्ञः संस्थाप्यः । अथान्य आहृत्यः ५ तत्र तद्दद्याद्यन्पूर्वस्मिन्दास्यन्स्यात् ६ युगपदपच्छेदे तूद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तम् ७ पूर्वापरापच्छेदे यो जघन्योऽपच्छिद्येत तस्य प्राय श्चित्तम् ८ यदि माध्यंदिन एतदेव । यद्यार्भवे सर्वप्रायश्चित्तं जुहुयात् ९

इति षड्विंशी कण्डिका इत्यष्टमः पटलः

यत्कलश उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्याधमन्तर्धायापोऽवनीय पयोऽभ्यवनयेत् । अर्धमभ्युन्नायं ग्रहैः प्रचरेयुः १ महर्त्विग्भ्यश्चतुरो वरान्दद्यात् २ अथैकेषाम् । यत्कलश उपदस्येदाग्रयणादृह्णीयात् । यदाग्रयणः कलशात् ३ यद्ग्रहो वा कलशो वोपदस्येदाग्रयणादृह्णीयादन्याञ्छुक्राद्ध्रुवाच्च ४ द्रोणकलशादृह्यन्त इति सर्वग्रहाणां स्कन्नानामुपदस्तानां च विज्ञायते ५ यद्ध्रुवे उपदस्येत्स्कन्देद्दीर्येत वा तमभिमन्त्रयेतायुर्धा असि ध्रुवायुर्मे धेहि । वर्चोधा असि ध्रुव वर्चो मे धेहि । तनूपा असि ध्रुव तन्वं मे पाहीति । तस्मिञ्छतमानं हिरण्यमवधाय स्वाहा दिव आप्यायस्व स्वाहान्तरिक्षादाप्यायस्व स्वाहा पृथिव्या आप्यायस्वेत्याप्याययति ६ अध्वरोऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूतायाध्वरो अस्तु देवाः । स पिन्वस्व घृतवद्देव यज्ञ । इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु धारय । इन्द्र एणमदीधरद्ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मण-

स्पतिः । ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् । ध्रुवा ह पर्वता इमे ध्रुवो राजा विशामयमित्येताभिश्चतसृभिः सन्नमभिमन्त्र्य वरम् ददाति ७

इति सप्तविंशी कण्डिका

यदि नाराशंस उपदस्येद्यमध्वर्युः पूर्वं ग्रहं गृह्णीयात्तं वषट्कृतानुवषट्कृते हुत्वा चमसाध्वर्यवे प्रयच्छेत् । तेनैनं स आप्याययत्याप्यायस्व समेतु त इति १ यदि प्रातःसवने सोमो हविर्वा स्कन्देन्माध्यंदिने तृतीयसवने नक्तं तिरोअह्न्येषु वा देवां जनमगन्यज्ञ इत्येतैर्यथापूर्वमभिमन्त्र्य मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात् २ त्रयस्त्रिंशत् । द्रप्सश्चस्कन्द । यस्ते द्रप्सः । यो द्रप्सः । यस्ते द्रप्स इत्येतैः प्रतिमन्त्रमनुसवनं स्कन्ने पञ्चाहुतीर्जुहोतीत्येके ३ यदृतुग्रहैः प्रचरन्तौ मुह्येयातां विसृष्टधेनाः सरितो घृतश्चुतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः । शरद्धेमन्त ऋतवो मयोभुव उदप्रुतो मभसी संवसन्ताम् । आ नः प्रजां जनयतु प्रजापतिर्धाता ददातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाकुपानो मयि पुष्टिं पुष्टिपतिर्दधातु । आ देवानाम् । त्वमग्ने व्रतपा असि । यद्वो वयं प्रमिनाम । मधुश्चेत्येतैः प्रतिमन्त्रं जुहोति ४ त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभेऽनु मारभध्वं स्वाहेत्यृतुनामस्वनुषजति ५ यदि सोमः स्कन्देद्ब्रह्मन्सोमोऽस्कानित्युक्त्वाभूद्देवः सविता वन्द्यो नु न इत्यभिमन्त्र्य भूपतये स्वाहेति पञ्च प्रादेशान्मिमीते यथा पुरस्तात् ६ यदि चमसमभक्षितं स्तोत्रेणाभ्युपाकुर्यादारमतेत्युक्त्वोत त्या नो दिवा मतिरदितिरूत्यागमत् । सा शन्ताची मयस्करदप स्रिधः । उत त्या दैव्या भिषजा शं नस्करतो अश्विना । यूयातामस्मद्रपो अप स्रिधः । शमग्निरग्निभिस्करच्छं नस्तपतु सूर्यः । शं वातो वात्वरपा अप स्रिध इति तिस्र आग्नीध्रीये हुत्वा तं सदसि भक्षयित्वोत्तरवाससा प्रच्छाद्य दक्षिणां द्वार्बाहुमनु निर्हृत्य मार्जालीये प्रक्षाल्य पूर्वयातिहृत्य तदित्पदं न विचिकेत विद्वान्यन्मृतः पुनरप्येति जीवान् । त्रिवृद्यद्भुवनस्य रथवृज्जीवो गर्भो न मृतः स जीवादिति तंनचमसेष्वपिसृज्य हिरण्यगर्भः समवर्तताग्र इत्याहुतिं हुत्वाप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तम इत्याप्याययति १ प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरंगमाय ज-

ग्मवेऽपश्चाद्दध्वने नर इत्यववृष्टं भक्षमभिमन्त्र्येन्दुरिन्दुमवागादिन्दोरिन्द्रोऽपात् । तस्य त इन्दविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति भक्षयति २ यदि दीक्षितोऽवकिरेदप्स्वग्न इत्येषा । तपो ष्वग्ने अन्तराँ अमित्रांस्तपा शंसमररुषः परस्य । तपा वसो चिकितानो अचितान्वि ते तिष्ठन्तामजरा अयासः । यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् । तमजरेभिर्वृषभिस्तप स्वैस्तपा तपस्व तपसा तपिष्ठ । स स्मा कृणोतु केतु-मा नक्तं चिद्दूर आ सते । पावको यद्वनस्पतीन्प्रास्मा निनोत्यजरः । नहि ते अग्ने तनुवै क्रूरमानाश मर्त्यः । कपिर्बभस्ति तेजनं स्वं जरायु गौरिव । मेष इव यदुप च वि च चर्वरि यदप्सररूपरस्य खादति । शीर्ष्णा गिरौ वक्षसा वक्ष एजयन्नंशुं गभस्ति हरितेभिरासभिरिति षट् पूर्णाहुतीर्हुत्वा प्र-त्याहुति वरान्दद्यात् ३

इत्येकोनत्रिंशी कण्डिका

यद्देवा देवहेडनमिति वा दशाहुतीर्हुत्वा पवमानः सुवर्जन इत्येतेनानुवाके-नाभिषिञ्चेत् १ यदि हुताहुतौ सोमौ संसृज्येयातामन्तःपरिध्यङ्गारं निर्वर्त्य यज्ञस्य हि स्थ ऋत्वियाविन्द्राग्नी चेतनस्य च । हुताहुतस्य तृप्यतमहुतस्य हुतस्य च । हुतस्य चाहुतस्य चाहुतस्य हुतस्य च । इन्द्राग्नी अस्य सो-मस्य वीतं पिबतं जुषेथामित्यङ्गारे हुत्वा तमस्मै भक्षं प्रयच्छेत् २ मा य-जमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः । मा यः सोममिमं पिबात्संसृ-ष्टमुभयं कृतमिति भक्षयति ३ मा नो ध्वारिषुः पितरो मोत वीरा मा नः सबन्धुरुत वान्यबन्धुः । मा नो दुश्चक्षा अघशंस ईशताहुतोऽयं यज्ञमप्येतु देवानिति भक्षयन्तमभिमन्त्रयते ४ सप्तर्त्विजः सप्त सदांस्येषां दश क्षिपो अश्विना पञ्च वाजाः । प्राणो व्यानोऽपानो मन आकूतमग्निः स्वाहाकृतं ह-विरदन्तु देवा इति भक्षं व्यापन्नमभिमन्त्र्येदं विष्णुर्विचक्रम इति दक्षिणपूर्व उपरवेऽवनयेत् ५ उत्तरपूर्वे वा ६ यः सोमवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत् ७

इति त्रिंशी कण्डिका इति नवमः पटलः

यदि सदोहविर्धानानि कृष्णशकुनिरुपर्युपर्यतिपतेत्यक्षाभ्यामाधून्वान इवा-

भिनिषीदेद्वेदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात् । यद्युच्चैः पतेन्न तदाद्रियेत १ यद्यनो रथो वान्तराग्नी सदोहविर्धाने वा वीयात्पाथिकृतीं पूर्ववन्निर्वपेत् २ यदि हविर्धानं पद्येतोदस्ताम्प्सीत्सविता मित्रो अर्यमा सर्वानमित्रानवधीद्युगेन । बृहन्तं मामकरद्वीरवन्तं रथंतरे श्रयस्व स्वाहेत्याहवनीये जुहुयात् ३ एतेनैव पृथिव्यां वामदेव्ये श्रयस्व स्वाहेति होत्रीये यदि सदः ४ अन्तरिक्षे बृहति श्रयस्व स्वाहेत्याग्नीध्रीये यद्याग्नीध्रम् ५ यदि प्राग्वंशं सर्वैः शालामुखीये जुहुयात् ६ दिवि बृहता त्वोपस्तभ्नोमीति सर्वेषामुपस्तम्भनः समानः ७ यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयादनु मा सर्वो यज्ञोऽयमेतु विश्वे देवा मरुतः सामार्कः । आप्रियश्छन्दांसि निविदो यजूंष्यस्यै पृथिव्यै यद्यज्ञियमिति ८ अन्ययज्ञे सोमं भक्षयित्वाग्निभ्यः परिभक्षमाज्येनाहवनीये जुहुयात् ९

इत्येकत्रिंशी कण्डिका

अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धामाग्नेः प्रियतमं हविः स्वाहा । अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धामेन्द्रस्य प्रियतमं हविः स्वाहा । अपां पुष्पमस्योषधीनां रसः सोमस्य प्रियं धाम विश्वेषां देवानां प्रियतमं हविः स्वाहेति १ वयं सोम व्रते तव मनस्तनूषु पिप्रतः । प्रजावन्तो अशीमहीति शेषं भक्षयित्वा देवेभ्यः पितृभ्यः स्वाहा सोम्येभ्यः पितृभ्यः स्वाहा कव्येभ्यः पितृभ्यः स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति २ तं जघनेन दक्षिणाप्रागग्रान्दर्भान्संस्तीर्य दधि ददाति देवास इह मादयध्वं सोम्यास इह मादयध्वं कव्यास इह मादयध्वमिति ३ अनन्तरिताः पितरः सोम्याः सोमपीथादित्युपतिष्ठते ४ भये जातेऽशक्ये यष्टुं सर्वेभ्यो हविर्भ्यः सोमेभ्यश्च द्रोणकलशे समवधाय ये देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्योऽग्निहोतृभ्यो देवेभ्यः स्वाहेति द्रोणकलशेन हुत्वाभये पुनर्यजेत ५ यदर्धर्चाल्लुप्येताभिप्रतिगृणीयाद्वा त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि । प्रजापत इति चतस्र आहुतीर्जुहुयात् । व्याहृतीश्च ६ यदृक्तो यज्ञं भ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयात् । यदि यजुष्टो भुव इति दक्षिणाग्नौ । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वा जुहुयात् ७

इति द्वात्रिंशी कण्डिका

ब्रह्मा वा मनसा ध्यायन्नासीत १ यद्यौदुम्बरी नश्येदन्यां प्रच्छिद्योर्गस्यर्जं मयि धेहि श्रियां तिष्ठ प्रतिष्ठिता । दिवं स्तब्ध्वान्तरिक्षं च पृथिव्यां च दृढा भव । धर्त्रि धरित्रि जनित्रि यमित्रीत्यध्वर्युरुद्गाता यजमानश्चोच्छ्रयन्ति २ संमितां नित्येन यजुषाभिमृशति ३ यदि हविर्धाने पद्येयातां दक्षिणमध्वर्युरुद्गृह्णीयात्प्रतिप्रस्थातोपस्तभ्नुयात् । उत्तरं प्रतिप्रस्थातोद्गृह्णीयादध्वर्युरुपस्तभ्नुयात् ४ वैष्णव्योपस्तभ्नुतः । वैष्णव्योपमिनुते । आश्विना कल्पयतः ५ अग्ने वाजस्य गोमत इति तिस्रः । भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः । भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः । येना समत्सु सासहोऽव स्थिरा तनुहि भूरि शर्धताम् । वनेमा ते अभिष्टिभिरिति षड्भिरुष्णिक्ककुब्भिराग्नीध्रीये जुहुतः ६ पूर्वाभिरुष्णिग्भिरध्वर्युः । उत्तराभिः ककुब्भिः प्रतिप्रस्थाता ७ शिरो यज्ञस्य प्रतिधीयताममृतं देवतामयम् । वैष्णव्या क्रियतां शिर आश्विन्या प्रतिधीयतामिति पञ्चगृहीतेन समानौ होमौ जुहुतः ८ यद्याग्निक्युखामा भिद्येत संकृष्यैनां पुनः कुर्यात् ९ यदि पक्वा संपिष्यान्यया मृदा संसृज्योखां कारयेत् १०

इति त्रयस्त्रिंशी कण्डिका

यस्याग्निरुख्य उद्वायोद्गार्हपत्यादन्यं प्रणयेत् । स एव पुनः परीध्यः । स्वादेवैनं योनेर्जनयतीति विज्ञायते १ कृष्णं वासः कृष्णा धेनुः कृष्णो वा गौः शतमानं च हिरण्यं दक्षिणा २ यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने क्रियते तेनाहरभ्यासजति । तेन यज्ञं संतनोति ३ यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने वसतीवरीर्यज्ञायज्ञियं प्रति गृह्णाति तेनाहरभ्यासजति । तेन यज्ञं संतनोति । यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने पयांसि विशास्ति तेनाहरभ्यासजति । तेन यज्ञं संतनोति । यदतिप्रेष्यति तेनाहरभ्यासजति । तेन यज्ञं संतनोति ४ एतेषामेकस्मिन्नप्यक्रियमाणे नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि स्वाहेत्याहुतिं हुत्वा सर्वप्रायश्चित्तं जुहुयाज्जुहुयात् ५

इति चतुर्विंशी कण्डिका इति दशमः पटलः

इति चतुर्दशः प्रश्नः

प्रवर्ग्यं संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे तूष्णीं काण्टकीं समिधमाधाय युञ्जते मन इति चतुर्गृहीतं जुहोति १ अथ यदि दीक्षितः काण्टकीमेवैतया समिधमादध्यात् । यजुरेव वदेदित्येके २ देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादायाभ्रिरसि नारिरसीत्यभिमन्त्रयते ३ साग्निक्या व्याख्याता ४ उत्तिष्ठ ब्रह्मणस्पत इति ब्रह्माणमानन्त्रयते ५ उपोत्तिष्ठति ब्रह्मा । उभावुत्तरमर्धर्चं जपतः । आददते कृष्णाजिनम् । अनुनयन्त्यजां पुंश्छगलामश्वं वृषाणमिति ६ प्रैतु ब्रह्मणस्पतिरिति प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः ७ अपि वास्यैते संभाराः परिश्रितेऽभ्युदाहृता भवन्ति ८ अग्रेणाहवनीयं मृत्खनः । पूर्वःपूर्व इतरः ९ उत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य देवी द्यावापृथिवी इति मृत्खनमभिमन्त्रयते । ऋध्यासमद्येति मृत्खनेऽभ्रिया प्रहृत्य मखस्य शिर इत्यपादाय मखाय त्वेति हरति । मखस्य त्वा शीर्ष्ण इति कृष्णाजिने निवपति १० एवं द्वितीयं च हरति ११ तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्य आप्तां मन्यते १२ एवमितरान्संभारान् १३ अभिमन्त्रणे विकारः १४

इति प्रथमा कण्डिका

इयत्यग्र आसीरिति वराहविहतम् । देवीर्वम्रीरिति वल्मीकवपाम् । इन्द्रस्यौजोऽसीति पूतीकानजलोमानि कृष्णाजिनलोमानि च संसृज्याग्निजा असि प्रजापते रेत इति १ आयुर्धेहि प्राणं धेहीत्यश्वेनावघ्राप्य मधु त्वा मधुला करोत्वित्यजयाभिदोहयति २ अभिदोहनमेकेऽवघ्रापणात्पूर्वं समामनन्ति ३ बहव आर्याः परिगृह्य हरन्ति ४ उत्तरेण विहारमुद्धतेऽवोक्षिते सिकतोपोप्ते परिश्रिते निदधति ५ मधु त्वा मधुला करोत्विति मदन्तीरुपसृजति ६ ये चोखासंसर्जनाः संभारा यच्चान्यद्दृढार्थ उपार्धं मन्यते ७ अथात्यन्तप्रदेशः ८ यत्किंच प्रवर्ग्य उदककृत्यं मदन्तीभिरेव तत्क्रियते । नैनं स्त्री प्रेक्षते न शूद्रः ९ न कुर्वन्नभिप्राणिति १० अपहाय मुखमनभिप्रा-

ण्न्वेणुना करोति ११ न प्रवर्ग्यमादित्यं च व्यवेयात् १२ यत्र क्वच वि-
प्रक्रान्ते प्रवर्ग्यं आदित्योऽस्तमियात् कृतान्तादेव विरमेत् । श्वोभूते शेषं
समाप्नुयात् १३ संप्रक्लिश्य मृदं मखस्य शिरोऽसीति पिण्डं कृत्वा यज्ञस्य
पदे स्थ इत्यङ्गुष्ठाभ्यां निगृह्य महावीरं करोति व्युद्धिं पञ्चोद्धिमपरिमितोद्धिं
वा प्रादेशमात्रमूर्ध्वसानुमुपरिष्टादासेचनवन्तं मध्ये संनतं वायव्यप्रकारम्
१४

इति द्वितीया कण्डिका

गायत्रेण त्वा छन्दसा करोमीति प्रथमम् । त्रैष्टुभेनेति द्वितीयम् । जागते-
नेति तृतीयम् १ अपि वा सर्वैरेकैकम् २ मखस्य रास्नासीत्युपबिलं रास्नां
करोति ३ अदितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति ४ तृती-
यवेलामतिनयति ५ यावद्देवताय सौविष्टकृतायाग्निहोत्राय भक्षायाप्तं म-
न्येतेत्यपरम् ६ सूर्यस्य हरसा श्रायेत्युत्तरतः सिकतासु प्रतिष्ठाप्य मखो
ऽसीत्यनुवीक्षते ७ एवं द्वितीयं तृतीयं च करोति ८ तूष्णीमितराणि ९
एतस्या एव मृदो दोग्ध्रे करोति हस्त्याष्ठ्ये प्रसेचनवती यथा स्रुगदण्डैवम्
१० वर्षीय आध्वर्यवं प्रतिप्रस्थानात् ११ आज्यस्थालीं रौहिणकपाले च
परिमण्डले घोटप्रकारे १२ घर्मेष्टकां कुलायिनीमिति यदि साग्निचित्यो
भवति १३ नाप्रवर्ग्ये स्यातामित्यपरम् १४ श्लक्ष्णीकरणैः श्लक्ष्णीकुर्व-
न्ति १५ अहतचण्डातकैर्गवीधुकैः क्लीतकाभिर्वेणुपवेभिराज्येनेति १६
वृष्णोऽश्वस्य शकृद्गार्हपत्ये प्रदीप्य प्रथमकृतं महावीरं शफाभ्यां परिगृह्य धू-
पयति वृष्णो अश्वस्य निष्पदसीति १७ एवं द्वितीयं तृतीयं च धूपयति ।
तूष्णीमितराणि १८ शफाभ्यामेवात ऊर्ध्वं महावीरानादत्ते १९ अग्रेण
गार्हपत्यमवटं खात्वा लोहितपचनीयैः संभारैरवस्तीर्य तेषु महावीरानुपाव-
हरति २०

इति तृतीया कण्डिका

अर्चिरसीति प्रथमम् । शोचिरसीति द्वितीयम् । ज्योतिरसि तपोऽसीति
तृतीयम् १ तूष्णीमितराण्यन्ववधाय लोहितपचनीयैः संभारैः प्रच्छाद्य गा-
र्हपत्ये मुञ्जानादीप्योपोषत्यर्चिषे त्वेत्येतैः प्रतिमन्त्रं प्रतिदिशम् २ अपि वा
सर्वैः सर्वतः ३ पच्यमानान्मैत्र्योपचरत्यभीमं महिना दिवमिति ४ उत्तर-

या वा ५ पक्वेषु सिद्ध्यै त्वेति घृष्टी आदाय भस्मापोह्य प्रथमकृतं महा-
वीरं शफाभ्यां परिगृह्योद्वासयति ६ देवस्त्वा सवितोद्वपत्वित्युद्वास्यापद्य-
मानः पृथिव्यामाशा दिश आपृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्य सूर्यस्य त्वा
चक्षुषान्वीक्ष इत्यनुवीक्षते ७ एवं द्वितीयं तृतीयं चोद्वासयति । तूष्णीमि-
तराणि ८ अथैनान्प्रदक्षिणं सिकताभिः पर्यूहतीदमहममुमामुष्यायणं विशा
पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति । विशेति राजन्यस्य । पशुभिरिति वै-
श्यस्य ९ अथैनान्प्रभूतेनाजापयसा छृणत्ति । गायत्रेण त्वा छन्दसा छृ-
णद्मीत्येतैस्त्रिभिस्त्रिभिरेकैकम् १० अपि वा सर्वैरेकैकम् । तूष्णीमितराणि
११ अथैनान्पृष्णाजिन उपनह्यासजति देव पुरश्चर सघ्यासं त्वेति १२ उप-
रिष्टात्काल एष मन्त्रो भवतीत्यपरम् १३

इति चतुर्थी कण्डिका इति प्रथमः पटलः

प्रवर्ग्येण प्रचरिष्यन्तः संवृण्वन्ति द्वाराणि १ परिश्रयन्ति पत्न्याः २ पश्चा-
द्धोतोपविशति । पुरस्तादध्वर्युः । दक्षिणतो ब्रह्मा यजमानः प्रस्तोता च ।
उत्तरतः प्रतिप्रस्थाताग्नीध्रश्च ३ मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं
कृत्वाग्रेण गार्हपत्यं दर्भान्संस्तीर्य तेषु महावीरानुपावहरति देव पुरश्चर स-
घ्यासं त्वेति ४ उपरिष्टात्काल एष मन्त्रो भवतीत्य परम् ५ अत्रैव सर्वं
परिघर्म्यम् ६ अथौदुम्बराणि । सम्राडासन्दीं नितराम् । राजासन्द्या व-
र्षीयसीमेके समामनन्ति । मौञ्जीभी रज्जुभिरेकसराभिर्व्युताम् ७ चतस्रः
स्रुचः ८ द्वे अनिष्टुब्धे ९ निष्टुब्धयोर्वर्षीयस्युपयमनी प्रोक्षणीधान्याः १०
स्रुवौ शफौ महावीरसंमिताव्रस्वौ धृष्टी मेथीं मयूखान्षट् शकलान्काण्डकीं
च समिधं त्रयोदश वैकङ्कतान्परिधीन्वैकङ्कतानि घर्मेन्धनानि । खादिराणि
पालाशान्यौदुम्बराण्यर्कमयाणि कार्ष्मर्यमयाणि वैणवानि शमीमयानि वा
११ त्रीणि कार्ष्णाजिनानि धवित्राणि शुक्लकृष्णलोमानि १२ तेषां वैणवा
दण्डा बाहुमात्रा भवन्तीति विज्ञायते १३ औदुम्बरदण्डानीत्यपरम् १४
द्वौ रुक्मौ रजतसुवर्णौ १५ शतमानौ भवतः १६ अथ मौञ्जानि १७ वेदौ
१८ तयोरन्यतरः परिवासितः १९ अभिधानीं निदाने त्रीणि विशाखदामा-
नि प्रभूतान्मुञ्जप्रलवान् । रौहिणयोः पिष्टान्यफलीकृतानाम् । खरेभ्यः
सिकताः । मौञ्जे पवित्रे । दर्भमये इत्यपरम् २० प्रोक्षणीनामावृता प्रो-

क्षणीः संस्कृत्य ब्रह्माणमामन्त्रयते २१

इति पञ्चमी कण्डिका

ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः । होतर्धर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर । प्रस्तोतः सामानि गायेति १ यजुर्युक्तं सामभिराक्तखमित्युपांशूक्त्वोमिन्द्रवन्तः प्रचरतेत्युच्चैरनुजानाति २ प्रचरतेति वा ३ यमाय त्वा मखाय त्वेति सर्वं परिघम्यमभिपूर्वं त्रिः प्रोक्षति ४ प्रोक्षितानि व्यायातयति ५ अधिश्रयत्याग्नीध्रो रौहिणौ पुरोडाशौ तूष्णीमुपचरितौ ६ एतस्मिन्काले प्रतिप्रस्थाता दर्विहोमसंस्कारेणाज्यं संस्करोति ७ नैतस्य संस्कारो विद्यत इत्यपरम् ८ अत्र दध्यधिश्रयति ९ अथैतां सम्राडासन्दीमादायाग्रेणाहवनीयं पर्याहृत्य पुरस्ताद्राजासन्द्याः सादयति १० तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नप्रचरणीयौ महावीरावुपावहरति देव पुरश्चर सघ्यासं त्वेति ११ उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम् १२ अथैतां मेथीं मयूखान्विशाखदामानीत्यादायाग्रेण होतारं जघनेन गार्हपत्यं दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन दक्षिणं द्वारं मेथीं निहन्ति होतुः समीक्षायै १३ एतस्यैव द्वारस्य पूर्वस्यै द्वार्यायै दक्षिणतो वत्साय शङ्कुम् १४ एतस्यैवापरस्यै द्वार्यायै दक्षिणतोऽजाया अभ्यन्तरम् १५ उत्तरतो बर्कराय १६ तेषु विशाखदामानि व्यायातयति १७ तान्येव व्यायातितानि भवन्त्योद्वासनात् १८ तैरेनान्काले बध्नन्ति १९ ततः खरानुपवपति २० उत्तरेण गार्हपत्यमेकम् । उत्तरेणाहवनीयमेकम् २१ उत्तरपूर्वं द्वारं प्रत्युच्छिष्टखरं करोति बाह्यतो निःषेचनवन्तम् २२ उत्तरेणाहवनीयं शृतदध्यासादयति २३

इति षष्ठी कण्डिका

शकलान्काण्टकीं च समिधम् १ अथैतं प्रचरणीयं महावीरं शफाभ्यां परिगृह्याप्रच्छिन्नाग्रेण वेदेनोपरिष्टात्संमार्ष्टि देव पुरश्चर सघ्यासं त्वेति २ प्राणाय स्वाहा व्यानाय स्वाहेति स्रुवेणाहवनीये सप्तैकादश वा प्राणाहुतीर्हुत्वा देवस्त्वा सविता मध्वानक्त्विति स्रुवेणोपर्याहवनीये महावीरमक्त्वा पृथिवीं तपसस्त्रायस्वेत्यपरस्मिन्खरे राजतं रुक्मं निधाय प्रतिष्ठाप्य महा-

वीरमन्यस्मै वा प्रद य द्वयान्मुञ्जप्रलवानादाय दक्षिणेषामग्राणि गार्हपत्ये प्रदीपयत्यर्चिषे त्वेति । तेषामग्रैरुत्तरेषां मूलानि शोचिषे त्वेति । तेषां मूलैर्दक्षिणेषां मूलानि ज्योतिषे त्वेति । तेषां मूलैरुत्तरेषामग्राणि तपसे त्वेति ३ तान्व्यत्यस्तानुपरि रुक्मे निदधात्यर्चिरसि शोचिरसि ज्योतिरसि तपोऽसीति ४ संसीदस्व महाँ असीति तेषु महावीरं प्रतिष्ठाप्याञ्जन्ति यं प्रथयन्त इति स्रुवेण महावीरमनक्ति । अभिपूरयति वा ५ अध्यधि महावीरमसंस्पृशन्यजमानः प्राञ्चं प्रादेशं धारयमाणो जपत्यनाधृष्या पुरस्तादित्येतैर्यथालिङ्गम् ६ मनोरश्वासि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशति ७ सिद्ध्यै त्वेति धृष्टी आदत्तोऽध्वर्युः प्रतिप्रस्थाता च ८ तपो ष्वग्ने अन्तराँ अमित्रानिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य चितः स्थ परिचित इति प्रदक्षिणमङ्गारैः पर्यूह्य ९

इति सप्तमी कण्डिका

वैकङ्कतैः परिधिभिः परिधत्तः १ मा असीति प्राञ्चावध्वर्युर्निदधाति । प्रमा असीत्युदञ्चौ प्रतिप्रस्थाता २ एवमवशिष्टानां पूर्वेणपूर्वेण मन्त्रेणाध्वर्युः । उत्तरेणोत्तरेण प्रतिप्रस्थाता ३ अध्वर्युरेव दक्षिणतस्त्रयोदशं निदधात्यन्तरिक्षस्यान्तर्धिरसीति ४ दिवं तपसस्त्रायस्वेति सौवर्णेन रुक्मेणापिधायाभिगीर्भिरिति तिसृभिरभिमन्त्र्य धवित्राण्यादत्ते । गायत्रमसीति प्रथमम् । त्रैष्टुभमसीति द्वितीयम् । जागतमसीति तृतीयम् ५ तैरेनं त्रिरूर्ध्वमुपवाजयति मधु मध्विति ६ तेषामेकं प्रतिप्रस्थात्रे प्रयच्छति । एकमाग्नीध्राय ७ आग्नीध्रप्रथमास्त्रिः प्रदक्षिणमूर्ध्वं धून्वन्तः परियन्ति ८ तमभिमुखाः पर्युपविशन्ति । पुरस्तादध्वर्युः । दक्षिणतः प्रतिप्रस्थाता । उत्तरत आग्नीध्रः ९ अव्यतिषङ्गमूर्ध्वं धून्वन्तः प्रणवैः संराधयन्त इन्धानाः समञ्जन्तो वाग्यता आसते १० प्रज्वलिते रुक्ममपादत्त इति विज्ञायते ११ यत्राभिजानाति यभिर्वर्तिकां ग्रसिताममुञ्चतमिति तदध्वर्युर्महावीरमभिमन्त्रयते दश प्राचीर्दश भासि दक्षिणेत्यनुवाकेन १२ यत्राभिजानात्यप्रस्वतीमश्विना वाचमस्मे इति तदुपोत्तिष्ठन्नध्वर्युराह रुचितो घर्म इति १३ अध्वर्युप्रथमा अन-भिधून्वन्तस्त्रिः प्रतिपरियन्ति १४ धवित्राण्यादायाध्वर्युः प्रतिप्रस्थात्रे प्रय-च्छति । तानि प्रतिप्रस्थाताग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां

सादयति १५ यथालोकमवस्थाय सर्व ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्ष–न्तेऽपश्यं गोपामिति १६ अनुवाकशेषं तु परिश्रिते प्रतिप्रस्थाता पत्नीं वाच–
यति त्वष्टीमती ते सपेयेति १७

इत्यष्टमी कण्डिका इति द्वितीयः पटलः

ततः संप्रेष्यत्यग्नीद्रौहिणौ पुरोडाशावासादयेयि १ अनिष्टब्धयोः स्रुचोरुप–स्तीर्णाभिघारितौ पुरोडाशावासादयति । दक्षिणं परिधिसंधिमन्वेकम् । उत्तरं परिधिसंधिमन्वितरम् २ सावित्रेण रशनामादायादित्यै रास्नासीत्य–भिमन्त्र्य पूर्वया द्वारोपनिष्क्रम्य त्रिरुपांशु घर्मदुघमाह्वयतीड एह्यदित एहि सरस्वत्येहीति ३ प्रत्येत्य दोग्ध्रे निदाने इत्यादाय दक्षिणया द्वारोपनिष्क्रम्य त्रिरुच्चैरसावेह्यसावेहीति यथानामा भवति ४ अदित्या उष्णीषमसीति र–शनया घर्मदुघमभिदधाति । वायुरस्यैड इति वत्सम् ५ पूषा त्वौपाव–सृजत्वित्युपावसृज्य यस्त स्तनः शशय इति घर्मदुघमभिमन्त्रयते ६ उस्र घर्मं शिंषोस्र घर्मं पाहि घर्माय शिंषेति निदाय वत्सं बृहस्पतिस्त्वोपसीद–त्वित्युपसीदति ७ दानवः स्थ पेरव इति स्तनान्संमृश्याश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेति वर्षीयसि दोग्ध्रे दोग्धि ८ तूष्णीं प्रतिप्रस्थाता ह्सीयस्यजाम् ९ यत्राभिजानात्युत्तिष्ठ ब्रह्मणस्पत इति तदुपोत्तिष्ठन्तावग्नीधे पयसी प्रदाय पूर्वावतिदुत्य शफोपयमानाददाते । गायत्रोऽसीति प्रथमम् । त्रैष्टुभोऽसी–ति द्वितीयम् । जागतमसीत्युपयमनं प्रतिप्रस्थाता १० यत्राभिजानात्युप–द्रव पयसा गोधुगिति तदाग्नीध्रोऽनुप्रपद्यते ११ सहोर्जो भागेनोप मेहीति पय आह्रियमाणं प्रतीक्षते १२

इति नवमी कण्डिका

इन्द्राश्विना मधुनः सारघस्येति महाबीरे गोपय आनयति १ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्युद्यन्तमूष्माणमनुमन्त्रयते २ मधु हविर–सीत्यजापयः ३ अजापयस आनयनमेके पूर्वं समामनन्ति ४ सूर्यस्य त–पस्तपेत्यूष्माणम् ५ द्यावृपृथिवीभ्यां त्वा परिगृह्णामीति शफाभ्यां महावीरं

परिगृह्य प्रच्छिन्नाग्रेण वेदेन भस्म प्रमृज्यान्तरित्तेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छति ६ देवानां त्वा पितॄणामनुमतो भर्तुं शकेयमित्यादा-योत्थाय तेजोऽसि तेजोऽनुप्रेहीति हरति ७ व्रजन्ननवानं पञ्च वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेति ८ अपान्य पञ्चोत्तराण्यग्नये त्वा व-सुमते स्वाहेति ९ एतस्मिन्काले प्रतिप्रस्थाता दक्षिणं रौहिणं प्रतिष्ठितं जु-होत्यहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषां स्वाहेति १० अपरेणाहव-नीयं दक्षिणातिक्रामन्विश्वा आशा दक्षिणसदिति ब्रह्माणमीक्षते । विश्वान्द-वानयाडिहेति होतारम् । स्वाहाकृतस्य घर्मस्येति घर्ममभिमन्त्र्याश्राव्य प्रत्याश्राविते संप्रेष्यति घर्मस्य यजेति । अश्विना घर्मं पातमिति वषट्कृते जुहोति । स्वाहेन्द्रावडित्यनुवषट्कृते ११ घर्ममपातमश्विनेत्यनुवाकशेषे-णोपस्थायोपर्याहवनीये धार्यमाणं प्रतिप्रस्थाता शृतदध्नाभिपूरयति १२ इषे पीपिह्यूर्जे पीपिहीति विक्षरन्तमनुमन्त्रयते १३

इति दशमी कण्डिका

अथैनं दिशोऽनु प्रहावयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्य त्वेति १ प्रत्याक्रम्योपयमने शेषमानीयान्तर्वेद्युपयमनं निधाय पूर्वस्मिन्खरे राजतं रुक्मं निधाय तस्मिन्महावीरं प्रतिष्ठापयति धर्मासि सुधर्मामेन्यस्मे ब्रह्माणि धारयेति । क्षत्राणि धारयेति राजन्यस्य । विशं धारयेति वैश्यस्य २ नेत्त्वा वातः स्कन्दयादिति ३ यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सा-दयेत् ४ अत्र प्रतिप्रस्थाता पूर्ववदुत्तरं रौहिणं जुहोति ५ अथैताञ्छकला-नुपयमनेऽञ्जञ्जुहोति पूष्णे शरसे स्वाहेत्येतैः प्रतिमन्त्रम् ६ षष्ठं शकलं स-र्वेषु लेपेष्वक्त्वानन्वीक्षमाण उदञ्चं निरस्यति रुद्राय रुद्रहोत्रे स्वाहेति ७ पुरस्ताद्रौहिणहोमाच्छकलानेके समामनन्ति ८ अथाप उपस्पृश्य तूष्णीं काण्टकीं समिधमाधायैतस्मादेव शेषादुपयमनेनाग्निहोत्रं जुहोति भूः स्वाहे-ति । तूष्णीं वा ९ उपयमने शेषं सर्वे समुपहूय भक्षयन्ति १० असाव-सावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते । उपहूत इति प्रतिवचनः ११ होताध्वर्युर्ब्रह्मा प्रतिप्रस्थाताग्नीद्यजमानश्च १२ सर्वे प्रत्यक्षम् १३ अपि वा यजमान एव प्रत्यक्षम् । अवघ्रेणेतरे १४ हुतं हविर्मधु हविरिति भक्षयि-त्वोपयमनं प्रतिप्रस्थात्रे प्रयच्छति १५ तदुच्छिष्टखरे प्रक्षाल्यान्तर्वेद्युपयमनं

निधाय तस्मिन्रुक्मावववधाय मदन्तीरानीयापोहिष्ठीयाभिर्मार्जयित्वा निनी-
यापोऽत्रैव सर्वं परिघर्म्यं ममवधाय १६

इत्येकादशी कण्डिका

घर्माय संसाद्यमानायानुब्रूहीति संप्रेष्यति । संसाद्यमानायानुब्रूहीति वा १
आ यस्मिन्सप्त वासवा इत्यभिज्ञायाग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां
सादयति स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः । स्वाहा त्वा नक्षत्रेभ्य
इति सायम् २ यत्राभिजानात्यद्धि तृणमघ्न्ये विश्वदानीमिति तद्गामवसृज्य
मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कुर्वन्ति ३ एवं सायंप्रातः प्रवर्ग्यो-
पसद्भ्यां चरन्ति ४ त्र्युपसत्के षट्कृत्वः । षडुपसत्के द्वादशकृत्वः । द्वा-
दशोपसत्के चतुर्विंशतिःकृत्वः ५ एतावन्नाना ६ उत्तरेण मन्त्रेण सायं
रौहिणं जुहोति । अपीपरो माह्नो रात्रियै मा पाहि । एषा ते अग्ने समि-
त्तया समिध्यस्व । आयुर्मे दा वर्चसा माञ्जीरिति सायं समिधमादधाति ।
अपीपरो मा रात्रिया अह्नो मा पाहीति प्रातः ७ अग्निर्ज्योतिर्ज्योतिरग्निः
स्वाहेति सायमग्निहोत्रं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः
८ संसृष्टहोमं वा ९ अग्निष्टोमे प्रवृणक्ति १० नोक्थ्ये प्रवृञ्ज्यात् ११
विश्वजिति सर्वपृष्ठे प्रवृणक्ति १२ तेन प्रवृज्य संवत्सरं न मांसमश्नीयात् ।
न रामामुपेयात् । न मृन्मयेन पिबेत् । नास्य राम उच्छिष्टं पिबेत् ।
तेज एव तत्संश्यतीति विज्ञायते १३

इति द्वादशी कण्डिका इति तृतीयः पटलः

प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति । पष्ठौहीं ब्रह्मणे । धेनुं होत्रे । रु-
क्मावध्वर्यवे १ अपरं खरं पूर्वस्मिन्खरे न्युप्योच्छिष्टखरं संकृष्योत्तरेणाह-
वनीयं सम्राडासन्दीं प्रतिष्ठाप्य तस्यां सर्वं परिघर्म्यं समवधायौदुम्बर्यां स्रु-
चि चतुर्गृहीतं गृहीत्वा घर्म या ते दिवि शुगित्येतैर्यथालिङ्गं जुहोति २
अपि वा प्रतिप्रस्थाता त्रीन्संनखाञ्छलाकामुष्टीनादाय तेषामेकमाहवनीये
प्रदीप्यास्यदघ्ने धारयति । तमध्वर्युरभिजुहोति घर्म या ते दिवि शुगिति ।
तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृत्य नाभिदघ्ने धारयति । तमध्वर्युरभि-
जुहोति घर्म या तेऽन्तरिक्षे शुगिति । तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृ-

त्य जानुदघ्ने धारयति । तमध्वर्युरभिजुहोति घर्म या ते पृथिव्यां शुगिति ३ आहवनीय एवैनमनुप्रहरति ४ अनु नोऽद्यानुमतिरिति परिश्रिते प्रतिप्रस्थाता पत्नीमुदानयति ५ अन्विदनुमत इत्युपनिष्क्रामन्ति ६ अनुहरन्ति मेथीमभ्रिं मयूखान्विशाखदामानि खराविति ७ दक्षिणत उच्छिष्टखरं परिहरति ८ सम्राडासन्द्या द्वावन्तर्वेदि पादौ द्वौ बहिर्वेदि प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतः साम गायेति ९ सर्वे सहपत्नीकास्त्रिः साम्नो निधनमुपयन्ति । अधाध्ये द्वितीयम् । प्राप्यापरेणोत्तरवेदिं तृतीयम् । सर्वत्र संप्रेष्यति १०

इति त्रयोदशी कण्डिका

दिवस्त्वा परस्पाया इति प्रथमेऽभिप्रव्रजन्ति । ब्रह्मणस्त्वा परस्पाया इति द्वितीये । प्राणस्य त्वा परस्पाया इति तृतीये १ उत्तरेणोत्तरवेदिं सम्राडासन्दीं प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतर्वार्षाहरं साम गायेष्टाहोत्रीयं साम गायेति । इष्टाहोत्रीयस्य साम्नो निधनमुपयन्ति । न वार्षाहरस्य २ यद्युपरिष्टात्परिषिञ्चेत्तत्र वार्षाहरं चोदयेत् ३ उदकुम्भमादायाध्वर्युर्वल्गुरसि शंयुधाया इति त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन्पर्येति । निधाय कुम्भं शं च वक्षि परि च वक्षीति त्रिरपरिषिञ्चन्प्रतिपर्येति ४ चतुःस्रक्तिर्नाभिर्ऋतस्येत्युत्तरवेदिमभिमृश्य सदो विश्वायुरित्युत्तरेणोत्तरनाभिं खरौ न्युप्यानुव्यूहति ५ अप द्वेषो अप ह्वर इति मार्जालीयदेश उच्छिष्टखरम् ६ उत्तरेणोत्तरनाभिं म्खरे हिरण्यं निधाय तस्मिन् प्रचरणीयं महावीरमुपावहरति ७ अत्रैवेतरौ पूर्वापरौ दक्षिणोत्तरौ वा ८ अत्रैव सर्वं परिघर्म्यं सर्वतः परिमण्डलमादित्यस्य रूपं करोति ९ महीनां पयोऽसीति महावीरे गोपय आनयति । ज्योतिर्भा असि वनस्पतीनामोषधीनां रस इति मधु । वाजिनं त्वा वाजिनोऽवनयाम इति दधि १० एवं द्वितीयं तृतीयं च पूरयति ११ अपि वाज्यमेव प्रथम आनयेत् । मधु द्वितीये । दधि तृतीये १२ घर्मैतत्तेऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेण पा त्राणि पूरयति यान्यासेचनवन्ति । अभ्युन्नतीतराणि । अरिक्तताया इति विज्ञायते १३

इति चतुर्दशी कण्डिका

अथ यदि पुरुषाकृतिं करिष्यन्स्यात्समानमा प्रथमस्योपावहरणात् । अत्रैवे-

तरावुपावहृत्य शिरसो रूपं करोति । अप्रच्छिन्नाग्रं वेदमुपरिष्टान्निदधाति शिखाया रूपम् । अभितो दोग्ध्रे कर्णयो रूपम् । अभितो हिरण्यशकलावाज्यस्रुवौ वाक्ष्यो रूपम् । अभितः स्रुवौ नासिकयो रूपम् । प्रोक्षणीधानीं मुखस्य रूपम् । आज्यस्थालीं ग्रीवाणां रूपम् । अभितो धृष्टी जत्रूणां रूपम् । अभितः शफावंसयो रूपम् । अभितो रौहिणहवन्यौ बाह्वो रूपम् । प्राचीं मेथीं पृष्टीनां रूपम् । अभितो धवित्रे पार्श्वयो रूपम् । मध्ये तृतीयमुरसो रूपम् । मध्य उपयमनमुदरस्य रूपम् । तस्मिन् सर्वं रज्जुमयं समवदधात्यान्त्राणां रूपम् । उदीचीमभ्रिं श्रोण्यो रूपम् । अभितः शङ्कू सक्थ्यो रूपम् । मध्ये तृतीयं मेढ्रस्य रूपम् । अभितो रौहिणकपाले पाष्ण्यो रूपम् । रौहिणपिष्टशेषेणापध्वंसयति मज्ञारूपम् । वेदं विस्रस्यानुविकिरति स्नाव्नां रूपम् । अवकाभिर्धूपतृणैरिति प्रच्छादयति मांसस्य रूपम् । दध्ना मधुमिश्रेणावोक्षति लोहितस्य रूपम् । कृष्णाजिनेनोत्तरलोम्ना प्रच्छादयति त्वचो लोम्नां रूपम् । सम्राडासन्दीं विस्रस्योपरिष्टान्निदधाति साम्राज्यस्य रूपम् १

इति पञ्चदशी कण्डिका

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य । उत्तरवेद्यामन्नाद्यकामस्य १ परो वा पश्चाद्वोद्वासयेत् । अपां मध्य उद्वासयेत् । नदिद्वीप उद्वासयेत् २ यदि नदिद्वीप उद्वासयेन्न परिषिञ्चेत् ३ यं द्विष्याद्यत्र स स्यात्तस्यां दिश्यौदुम्बर्यां शाखायामुद्वासयेत् । ऊर्ग्वा उदुम्बरोऽन्नं प्राणः शुग्घर्मः । इदमहमुष्यामुष्यायणस्य शुचा प्राणमपिदहामीति शुचैवास्य प्राणमपिदहति । ताजगार्तिमार्छतीति विज्ञायते ४ यत्र दर्भा उपदीकसंतताः स्युस्तदुद्वासयेद्वृष्टिकामस्य ५ उत्तरवेद्यां नित्यं कल्पं ब्रुवते ६ नैनमुद्वासितं वयांसि पर्यासीरन्नाग्नेः प्रणयनात् ७ अत्रैके परिषेचनं समामनन्ति ८ अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्व इति ९ एतत्त्वं देव घर्म देवो देवानुपागा इत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्य सुमित्रा न आप ओषधय इति मार्जालीयदेश उच्छिष्टखरे मार्जयित्वोद्वयं तमसस्परीत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति । उपतिष्ठन्त इत्येके । इममू षु त्यमस्मभ्यमित्याहवनीये जुहोति । उपतिष्ठन्त इत्येके १०

इति षोडशी कण्डिका इति चतुर्थः पटलः

यदि घर्मः स्कन्देदस्कान्द्यौः पृथिवीमिति द्वाभ्यामेनमभिमन्त्रयेत १ यदि घर्मेण चरत्सु विद्युदापतेद्या पुरस्ताद्विद्युदापतदित्येतैर्यथालिङ्गं जुहुयात् २ यदि सर्वतः सर्वा जुहुयात् ३ प्राणाय स्वाहा पूष्णे स्वाहेत्येतावनुवाकौ घर्मप्रायश्चित्तानि ४ घर्मेष्टकामुपदधात्युदस्य शुष्माद्भानुर्नार्तत्यनुवाकेन । कुलायिनीं यास्ते अग्न आर्द्रा योनय इत्यनुवाकेन । ऐडिक्या चित्याध्वर्युरग्निमभिमृशंत्यग्निरसि वैश्वानरोऽसीत्यनुवाकेन ५ भूर्भुवः सुवरिति सर्वप्रायश्चित्तानि ६ यदि महावीरः पद्येतोर्ध्व ऊ षु ण ऊतय इति द्वाभ्यामेनमुच्छ्रयीत ७ यदि भिद्येत विधुं दद्राणमिति संदध्यात् । ततो यानि दृढार्थे संश्लेषणानि स्युस्तैरेनमभिदिह्याद्यदन्यन्मांसान्माषेभ्यश्च यदृते चिदभिश्रिष इति ८ यदि घर्ममतिपरीयुर्न वा प्रतिपरीयुः पुनरूर्जा सह रय्येत्येताभ्यामेनं प्रतिपरीयुः ९ मा नो घर्म व्यथित इत्यष्टौ घर्मे व्यथिते प्रायश्चित्तानि १० अपि वा घर्ममेव व्यथितमेतासां चतसृभिरभिमन्त्रयेत ११ यदि घर्मेण चरत्स्वादित्योऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योद्वयं तमसस्परीत्युपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वा प्रवृज्य श्वो भूते वयः सुपर्णा इत्यादित्यमुपतिष्ठन्ते १२

इति सप्तदशी कण्डिका

यदि घर्मधुग्दोहकाले नागच्छेदन्यां दुग्ध्वा प्रवृज्य तां सुत्यायां ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्स्यात् १ यदि घर्मधुगि पयो न स्याद्दृतेश्चतुर्थं पादं स्तनं कृत्वा पिन्वयेत् २ यदि दधि दुहीत बार्हस्पत्यं शंसेत् ३ यदि पय आश्विनं सोदर्कम् ४ यद्यु वै लोहितं दुहीत रौद्र्यर्चो जुहुयात् ५ यदि नश्येद्धातुर्ऋग्भ्यां जुहुयात् ६ यद्यस्यै वत्सो वायोर्नियुत्वत ऋचा जुहुयात् ७ यद्यमेध्यमयज्ञियं वाभिनिषीदेदाग्नेय्यर्चा जुहुयात् । आग्निवारुण्येत्येके ८ यद्येनां वयोऽभिविन्निपेदाश्विन्यर्चा जुहुयात् ९ यद्युद्वा पतेत्सं वा विजेत शार्दूलो वा हन्यादर्कक्षीरमजाक्षीर आश्चोत्य तेन प्रेचरेत् १० सुत्यायां प्रवृञ्जनमेके समामनन्ति ११ तत्र मीमांसा १२ यदा पुरस्तादरुणा स्यादथ प्रवृज्यः । उपकाश उपव्युषं समयाविषित उदितानुदित उदिते वा । प्रातः

संगवे माध्यंदिने वा पवमाने स्तुते १३ आग्नीध्रागारे प्रवृज्यः १४ सकृदे-
व प्रवृज्य इति विज्ञायते १५ तान्येतान्यौपसदैः प्रवृञ्जनैर्विकल्पेरन् १६
दधिघर्मं भक्षयन्ति भूर्भुवः सुवरित्यनुवाकेन १७

इत्यष्टादशी कण्डिका

व्याख्याता घोरास्तन्वोऽरण्येऽनुवाक्यो गण उत्तरौ चानुवाकौ १ यदि घ-
र्मेण चरस्त्वेकसृक उत्तिष्ठेद्धि गा इन्द्र विचरन्स्पाशयस्वेत्येतमभिमन्त्र्योभयत
आदीप्योल्मुकमस्मै प्रत्यस्येदग्ने अग्निना संवदस्वेति २ अथैनमुपतिष्ठन्ते
सकृत्ते अग्ने नम इत्यनुवाकशेषेण ३ अथ यदि गृध्रः सलावृकी भयेडको
दीर्घमुख्युलूको भूतोपसृष्टः शकुनिर्वा वदेदसृङ्मुखः । यदेतत् । यदीषि-
तः । दीर्घमुखि । इत्थादुलूकः । यदेतद्भूतान्यन्वाविश्य । प्रसार्य
सक्थ्यावित्येतैर्यथालिङ्गमभिमन्त्र्योल्मुकप्रत्यसनादि समानम् ४ यदि घ-
र्मधुक्क्रिमिणा स्यादत्रिणा त्वा क्रिमे हन्मीत्यनुवाकेनास्याः क्रिमीन्हन्यात्
५ अपि वा सार्वत्रिकमेतत्प्रायश्चित्तं क्रियेत ६ यमभिचरेत्तस्य लोहितमव-
दानं कृत्वाहरावद्य शृतस्येत्यनुवाकेन जुहुयात् ७ यमभिव्याहरिष्यन्स्या-
त्त्रिरात्रावरं ब्रह्मचर्यं चरित्वा गत्वैनमभिव्याहरेद्ब्रह्मणा त्वा शपामीत्यनु-
वाकेन ८ यं द्विष्यात्तस्य गोष्ठे स्वजमोषधीं निखमेदुत्तुद शिमिजावरीत्य-
नुवाकेन ९ अपि वा गोष्ठस्यैव दक्षिणां द्वार्बाहुमेतेनैव विचालयेत् १०
यद्युद्गाता पुरुषसाम न गायेदध्वर्युरेवैतेन साम्नोद्गायेद्भूर्भुवः सुवरित्यनुवाकेन
११

इत्येकोनविंशी कण्डिका इति पञ्चमः पटलः

अवान्तरदीक्षां व्याख्यास्यामः १ पर्वण्युदगयन आपूर्यमाणपक्षस्य वा पु-
ण्ये नक्षत्रे केशश्मश्रु वापयित्वापराह्णे प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य
खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृ-
श्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्वक्ता
अभ्यादधाति पृथिवी समिदित्येतैर्मन्त्रैः २ अथ देवता उपतिष्ठतेऽग्ने व्रतपते
व्रतं चरिष्यामीति ३ अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति ।
प्रथमोत्तमयोर्वा ४ उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलयति वाचं

च यच्छति ५ अथास्याहतेन वाससा प्रदक्षिणं संमुखं शिरो वेष्टयित्वा-स्तमिते ग्रामं प्रपादयति ६ वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ७ श्वो भूते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्तयमभिविदर्शयति । सप्ततयमित्येके । अग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नाम् । हिरण्यं सप्तमम् ८ अपि वादितस्त्रीणि विदर्शयित्वा यथोपपातमितराणि ९ अत्रैतद्वासो गुरवे दत्त्वा वयः सुपर्णा इत्यादित्यमुपतिष्ठते १० अथास्य ब्रह्मचर्यमधि ११ नित्ये १२ न नक्तं भुञ्जीत १३ यदि भुञ्जीतापज्वलितम् १४ न मृन्मयं प्रति धयीत १५ न स्त्रिया न शूद्रेण संभाषेत १६ नोपानहौ न छत्रम् १७ न चक्रीवदारोहेत् १८ न गतासुमीक्षेत् । न स्नायात् १९ अष्टम्यः पर्वाणि चोपवसेद्वाग्यतः २० न च संविशेत् २१

इति विंशी कण्डिका

संवत्सरमेतद्व्रतं चरेत् । एतस्मिन्नेव संवत्सरेऽधीयीत १ यद्येतस्मिन्सं-वत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् २ संवत्सरे पर्यवेते खिले ऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्य मदन्तीरुपस्पृश्य प्र-थमेनानुवाकेन शान्तिं कृत्वावृत्तैर्मन्त्रैः समिध आधायावृत्तैर्देवता उपस्था-योत्तमेनानुवाकेन शान्तिं कृत्वा गुरवे वरं दत्त्वा केशश्मश्रु वापयते ३ अ-थास्य स्वाध्यायमधि नित्ये ४ नानुत्सृष्टाध्यायोऽधीयीत ५ न नक्तम् ६ नातिदोषमब्रह्मचर्यमापद्य न मांसं खादित्वा न केशश्मश्रुलोमनखानि वा-पयित्वा न केशान्प्रसाध्य न दतः प्राक्षाल्य ७ नाक्तो नाभ्यक्तो नार्द्रो नार्द्रे नानववृष्टे नाभ्रे न छायायां न पर्यावृत्त आदित्ये न हरितयवान्प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नारण्यस्य नापामन्ते ८ नाश्रृतमुत्पतितं न लोहितं दृष्ट्वा । न हर्म्याणि न शरीराणि न शवं नापपात्रम् ९ अध्येष्यमाणः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्ती-रुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वापरेणाग्निं दर्भेष्वासीनो दर्भान्दूर्वा वा धारयमाणः पराचीनमधीयीत १० वरं वा दत्त्वोपासने ११ अध्येष्यमाणो नान्या वाचो वदेत् १२ यत्र क्वचाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वा-धीयीत १३ अधीत्य चोत्तमेन १४ न प्रवर्ग्यायोपनिष्क्रम्याप्रविश्यान्यद-धीयीतान्यदधीयीत १५

इत्येकविंशी कण्डिका इति षष्ठः पटलः

इति पञ्चदशः प्रश्नः

अग्निं चेष्यमाणोऽमावास्यायां पौर्णमास्यामेकाष्टकायां वोखां संभरति १ अषाढामधिकृत्यैके समामनन्ति २ बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रिस्त्रयस्त्रिंशा अनु व आरभ इदं शकेयं यदिदं करोमि ते मावत ते मा जिन्वतास्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्न-स्यां देवहूत्यामिति चतुर्गृहीतं जुहोति ३ जुहूं स्रुवं च संमृज्य जुह्वामष्टगृ-हीतं गृहीत्वा युञ्जानः प्रथमं मन इति यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहो-त्यन्तर्वेद्यूर्ध्वस्तिष्ठन् ४ यं कामयेत पापीयान्स्यादित्येकैकं तस्य जुहुया-ज्जिह्मस्तिष्ठन् ५ यदि कामयेत च्छन्दांसि यज्ञयशसेनार्पयेयमित्युक्तम् ६ ऋचा स्तोमं समर्धयेत्यपरं चतुर्गृहीतं गृहीत्वा देवस्य त्वा सवितुः प्रसव इ-ति चतुर्भिरभ्रिमादत्ते वैणवीं कल्माषीं सुषिरामसुषिरां वोभयतःक्ष्णूमन्यत-रतःक्ष्णूं वा प्रादेशमात्रीमरत्निमात्रीं व्यायाममात्रीमपरिमितां वा । खादिरीं पालाशीमौदुम्बरीमर्कमयीं कार्ष्मर्यमयीं वैकङ्कतीं शमीमयीं वा यो वा य-ज्ञियो वृक्षः फलग्रहिः ७

इति प्रथमा कण्डिका

इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीं रशनामादाय प्रतूर्तं वाजिन्ना द्रवेत्यश्व-मभिदधाति १ तूष्णीं गर्दभस्यादाय युञ्जाथां रासभं युवमिति गर्दभम् २ योगेयोगे तवस्तरमिति तिसृभिरश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः ३ यदि कामयेत पापवस्यसं स्यादिति गर्दभप्रथमा गच्छेयुः ४ अग्निं पुरीष्यमङ्गिरस्वदच्छेहीति जपति ५ अग्निं पुरीष्यमङ्गिरस्वदच्छेम इति येन द्वेष्येण संगच्छते तमभिमन्त्रयते । अपश्यन्निर्दिशति ६ अग्निं पुरीष्यमङ्गि-रस्वद्भरिष्याम इति वल्मीकवपाम् । आ सूर्यस्योदेतोस्तामुद्धत्योपतिष्ठते ७ अन्वाग्निरुषसामग्रमख्यदिति वल्मीकवपायाः प्रक्रामति ८ आगत्य वा-ज्यध्वन आक्रम्य वाजिन्पृथिवीमिति द्वाभ्यां मृत्खनमश्वमाक्रमय्य द्यौस्ते पृ-

ष्ठमित्यश्वस्य पृष्ठं संमार्ष्टि ९ अभि तिष्ठ पृतन्यतोऽधरे सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठापः क्षेत्राणि संजयन् । अभिष्ठितोऽसीति यं द्वेष्टि तमधस्पदमश्वस्य मनसा ध्यायति १० उत्क्रामोदक्रामीदिति द्वाभ्यां मृत्खनादुदञ्चमश्वमुत्क्रमय्यापो देवीरुपसृजेत्यश्वस्य पदेऽप उपसृज्य पदे हिरण्यं निधाय ११

इति द्वितीया कण्डिका

जिघर्म्यग्निमा त्वा जिघर्मीति मनस्वतीभ्यामेकामाहुतिं हिरण्ये हुत्वापादाय हिरण्यं परि वाजपतिः कविरग्निरिति तिसृभिरभ्रिया मृत्खनं परिलिखति । बाह्यांबाह्यां वर्षीयसीम् १ देवस्य त्वा सवितुः प्रसव इति द्वाभ्यां खनति २ अपां पृष्ठमसीति पुष्करपर्णमाहृत्यैतयैव विवेष्ट्य शर्म च स्थो वर्म च स्थ इति द्वाभ्यामुत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति । उपरिष्टात्पुष्करपर्णमुत्तानम् ३ पुरीष्योऽसि विश्वभरा इति मृत्खनमभिमन्त्र्य त्वामग्ने पुष्करादधीति कृष्णाजिने पुष्करपर्णे च संभरति चतसृभिस्तिसृभिर्वा । गायत्रीभिर्ब्राह्मणस्य । त्रिष्टुग्भी राजन्यस्य । जगतीभिर्वैश्यस्य ४ यं कामयेत वसीयान्स्यादित्युभयीभिस्तस्य संभरेत् ५ अष्टाभिः संभरति ६ जनिष्वा हि जेन्य इति मृदमभिमृश्य मृत्खनं संलोभ्य सं ते वायुरिति मृखनेऽप आनीय समुद्यम्य कृष्णाजिनस्यान्तान्सुजातो ज्योतिषा सहेति क्षौमेण मौञ्जेनार्कमयेण वा दाम्नोपनह्यति ७ उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति सावित्रीभ्यामुत्तिष्ठति ८ स जातो गर्भो असीति हरति ९ स्थिरो भव वीड्वङ्ग इति गर्दभस्य पृष्ठ आदधाति १० शिवो भव प्रजाभ्य इत्याहितमभिमन्त्रयते ११ प्रैतु वाजी कनिक्रददिति तिसृभिरत्वरमाणाः प्रत्यायन्ति १२ अग्निं पुरीष्यमङ्गिरस्वद्भराम इति येन द्वेष्येण संगच्छते तमभिमन्त्रयते । अपश्यन्निर्दिशति १३ उत्तरेण विहारं परिश्रित ओषधयः प्रति गृह्णीताग्निमेतमिति द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषूपावहरति १४

इति तृतीया कण्डिका

वि पाजसेति विस्रस्यापो हि ष्ठा मयोभुव इति तिसृभिरप उपसृज्य मित्रः संसृज्य पृथिवीमिति द्वाभ्यां संसर्जनीयैः संसृजति । अर्मकपालैः पिष्टैर्वेणवङ्गारैर्व्रीहितुषैः पलाशकषायेण शर्कराभिः पिष्टाभिः कृष्णाजिनलोम-

भिरजलोमभिरिति १ यच्चान्यद्दृढार्थ उपार्धं मन्यते २ रुद्राः संभृत्य पृथिवीमिति मृदं संक्षिप्य संसृष्टां वसुभिरिति तिसृभिः कर्त्रे प्रयच्छति ३ मखस्य शिरोऽसीति पिण्डं कृत्वा यज्ञस्य पदे स्थ इति कृष्णाजिनं पुष्करपर्णं चाभिमृशति मृदि वाङ्गुष्ठाभ्यां निगृह्णाति ४ वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसेति चतुर्भिर्महिष्युखां करोति बहुभार्यस्य । अध्वर्युरेकभार्यस्य ५ क्रियमाणामेतैरेव यजमानोऽनुमन्त्रयते ६ त्र्युद्धिं पञ्चोद्धिमपरिमितोद्धिं वा । चतुरश्रां परिमण्डलां वा । प्रादेशमात्रीमूर्ध्वप्रमाणेनारत्निमात्रीं तिर्यक्प्रमाणेन व्यायाममात्रीं समन्तपरिमाणेन । अपरिमितां वा ७ पञ्चप्रादेशामिषुमात्रीं वा यदि पञ्च पशवो भवन्तीति वाजसनेयकम् ८ कुर्वंश्चतस्रोऽश्रीः प्रतिदिशमुन्नयति ९ अष्टाश्रिं वा १० नवाश्रिमभिचरतः कुर्यात् । द्व्यङ्गुले बिलादधस्तात् ११

इति चतुर्थी कण्डिका

अदित्यै रास्नासीति रास्नां करोति १ अश्रीणां रास्नायाश्च संधौ द्वौ चतुरः षडष्टौ वा स्तनान्करोति २ अदितिस्ते बिलं गृह्णात्विति बिलं कृत्वा कृत्वाय सा महीमुखामित्युत्तरतः सिकतासु प्रतिष्ठाप्य मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदीति मित्राय परिददाति ३ य उखां करोति सोऽषाढामेतस्या एव मृदस्तूष्णीं चतुरश्रां त्र्यालिखितामिष्टकाम् ४ वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसेति सप्तभिरश्वशकेनोखां धूपयति ५ वृष्णो अश्वस्य शकेनेत्येके ६ गार्हपत्याद्धूपनपचने भवतः ७ अदितिस्त्वा देवीत्यग्रेण गार्हपत्यमवटं खात्वा लोहितपचनीयैः संभारैरवस्तीर्य देवानां त्वा पत्नीरिति तस्मिन्नुखामवदधाति ८ तूष्णीमषाढामन्ववधाय लोहितपचनीयैः संभारैः प्रच्छाद्य धिषणास्त्वा देवीरिति चतुर्भिरुखायामग्निमभ्यादधाति ९ मित्रैतामुखां पचेति पच्यमानां तिसृभिर्मैत्रीभिरुपचरति १० पक्वां देवस्त्वा सवितोद्वपत्वित्युद्वास्यापद्यमाना पृथिव्याशा दिश आ पृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्य मित्रैतां तु उखां परिददाम्यभित्त्या एषा मा भेदीति मित्राय परिददाति ११ तूष्णीमषाढामुद्वास्य १२

इति पञ्चमी कण्डिका

वसवस्त्वा च्छृन्दन्तु गायत्रेण च्छन्दसेति चतुर्भिरजाक्षीरेणोखामाच्छृणत्ति १ सप्तैकविंशतिं वा माषानादाय पुरुषशिरोऽच्छैति वैश्यस्य राजन्यस्य वेषुहतस्याशनिहतस्य वा २ माषानुपन्युप्यायं योऽसि यस्य त इदं शिर इति पुरुषशिरः प्रच्छिद्यैतेन त्वमत्र शीर्षण्वानेधीति सप्तधा वितृणां वल्मीकवपां शिरसः स्थाने प्रतिनिदधाति ३ योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्ग्यश्रवो गाय यो राजानपरोध्यः । यमं गाय भङ्ग्यश्रवो यो राजानपरोध्यः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा । हिरण्यकक्ष्यान्सुधुरान्हिरण्याक्षानयःशफान् । अश्वाननश्यतो दानं यमो राजाभितिष्ठतीति तिसृभिर्यमगाथाभिः परिगायति ४ आहरञ्जपतीत्येके ५ इदमस्माकं भुजे भोगाय भूयादिति पुरुषशिर आदायोदेह्यग्ने अधि मातुः पृथिव्या इत्याहरति ६ परि त्रिविष्टयध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् । परि वाजपतिः कविरित्येषा । परि प्रागाद्देवो अग्नी रक्षोहामीवचातनः । सेधन्विश्वा अप द्विषो दहन्रक्षांसि विश्वहेति तिसृभिः पर्यग्नि कृत्वा मृदा प्रलिप्य निदधाति ७

इति षष्ठी कण्डिका

अग्निभ्यः कामाय पशूनालभते मुष्करान् । प्राजापत्यमजं तूपरमुपाकृत्याश्वर्षभवृष्णिबस्तान् १ एकशिंशतिं चतुर्विंशतिं वा पराचीः साभिधेनीरन्वाह । एकादश प्राकृतीः । समास्त्वाग्न इति दशाग्निकीः २ रायो अग्ने महे त्वा दानाय समिधीमहि । ईडिष्वा हि मही वृषन्द्यावा होत्राय पृथिवीमिति यद्येकविंशतिः ३ उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे । अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि । समन्या यन्तीत्येषा । अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे अभि प्रियतमे संधस्थे आ च परा च चरति प्रजानन्निति तिस्त्रोंऽप्सुमतीर्यदि चतुर्विंशतिः ४ अमुत्रभूयादित्यामयाविनः कुर्यात् ५ बृहस्पते सवितर्बोधयिनमित्यनामयाविनः ६ उद्वयं तमसस्परीति ज्योतिष्मत्या परिदधाति ७ हिरण्यगर्भः समवर्तताग्र इति स्रुच्यमाघारयति ८ ऊर्ध्वा अस्य समिधो भवन्तीति प्रयाजानामाप्रियो भवन्ति ९ आग्नेयीस्त्रिष्टुभ आग्नेयानां याज्यानुवाक्याः १० यः प्राणतो य आत्मदा इति प्राजाप-

त्यस्य ११ अपि वा संज्ञप्तानां शिरांसि प्रच्छिद्य मृदा प्रलिप्य निदधाति १२

इति सप्तमी कण्डिका

अपः कबन्धान्यभ्यवहरन्ति १ प्राजापत्येन संस्थापयतीति विज्ञायते २ अपि वा सर्वेषामेतेषां स्थाने वायवे नियुत्वते श्वेतमजं तूपरमालभते ३ वायुमती श्वेतवती वपाया याज्यानुवाक्ये । वायुमती नियुत्वती दैवतस्य ४ तस्य शिरः प्रच्छिद्य मृदा प्रलिप्य निदधाति ५ वायव्यः कार्या इत्युक्तम् ६ तस्याग्नये वैश्वानराय द्वादशकपालं पशुपुरोडाशं निर्वपति ७ यः कश्चनाग्नौ पशुरालभ्यते वैश्वानर एवास्य द्वादशकपालः पशुपुरोडाशो भवतीत्येके ८ तेनेष्ट्वा संवत्सरं न मांसमश्नीयान्न स्त्रियमुपेयान्नोपरि शयीत ९ अपि वा मांसमश्नीयादुपरि शयीत स्त्रियं त्वेव नोपेयादिति वाजसनेयकम् १० यत्प्राग्दीक्षणीयायास्तत्कृत्वा त्रिहविषं दीक्षणीयां निर्वपति ११ वैश्वानरं द्वादशकपालं तृतीयं पुरस्तादसंवत्सरभृतः १२ यत्प्राग्दीक्षाहुतीभ्यस्तत्कृत्वाकूत्यै प्रयुजेऽग्नये स्वाहेति पञ्चाध्वरिकीर्हुत्वाकूतिमग्निमिति षडाग्निकीः । विश्वे देवस्य नेतुरिति पूर्णाहुतिं सप्तमीम् १३ यं कामयेत प्रमायुकः स्यादिति तस्य सकृदनुद्रुत्य जुहुयात् । प्राणानस्य संभिनत्ति । बधिरो ह भवतीति विज्ञायते १४

इत्यष्टमी कण्डिका

संवत्सरं दीक्षित उख्यं बिभर्ति । त्र्यहं षडहं द्वादशाहं वा १ योऽर्वाक् संवत्सरादरुश्चिदेव स इत्येके २ अग्नेर्वै दीक्षयेत्युक्तम् ३ यत्प्राङ्गुष्टिकर्मणस्तत्कृत्वा शणकुलायेन मुञ्जकुलायेन वोखां प्रच्छाद्य मा सु भित्था इति द्वाभ्यामाहवनीये प्रवृणक्ति ४ मित्रैतामुखां तपेति प्रदक्षिणमङ्गारैः परीन्द्धे ५ द्रवन्नः सर्पिरासुतिरिति तस्यां क्रुमुकमुल्लिखितं घृतेनाक्त्वावदधाति मुञ्जांश्च ६ यो गतश्रीः स्यादित्युक्तम् ७ प्रदाव्यादाहरेद्यं कामयेत प्रस्यन्दिन्यामस्य राष्ट्रं जायुकं स्यादिति । वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य । भर्जनादन्नकामस्य ८ न काम्यमग्निं कुर्वाण आहवनीये प्रवृञ्ज्यात् ९ जात उख्येऽनुगमयत्याहवनीयम् १० परस्या अधि संवत इति वैकङ्कतीं समिधमादधाति ११ परमस्याः परावत इति शमीमयीम् १२ एतद्वा विपरीतम्

१३ सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुख्यमुपतिष्ठते १४

इति नवमी कण्डिका

यदग्ने यानि कानि चेति पञ्चभिरौदुम्बरमपरशुवृक्णमुख इध्ममभ्यादधाति १ तैल्वकमभिचरतः २ दंष्ट्राभ्यां मलिम्लूनित्याश्वत्थीं समिधमादधाति ३ ये जनेषु मलिम्लव इति वैकङ्कतीम् ४ यो अस्मभ्यमरातीयादिति शमीमयीम् ५ तस्मादग्निचितः पापं न कीर्तयेन्नो अग्निं बिभ्रतो नो अग्निविदः ६ संशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे यजमानं वाचयंस्तूष्णीमौदुम्बर्यौ समिधावादधाति ७ मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनौ भरिष्यत्बुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्त्विति मौञ्जे शिक्ये षडुद्यामे द्वादशोद्यामे वोखामवदधाति ८ एकविंशतिनिर्बाधो यो रुक्मः सूत्रोतो दृशानो रुक्म इति तमासीनो यजमानोऽन्तर्निर्बाधं प्रतिमुच्य बहिर्निर्बाधान्कुरुते ९ विश्वा रूपाणीति शिक्यपाशं प्रतिमुञ्चते १० नक्तोषासेति कृष्णाजिनमुत्तरम् ११ सुपर्णोऽसि गरुत्मानित्युख्यमवेक्ष्य सुपर्णोऽसि गरुत्मानित्यादायोत्थायोपरि नाभेर्धारयमाणो विष्णोः क्रमोऽसीति चतुरो विष्णुक्रमान्प्राचः क्रामति १२ अक्रन्ददग्निरित्येतामनूच्याग्नेऽभ्यावर्तिन्निति चतसृभिः प्रदक्षिणमावर्तते १३ उदुत्तममिति शिक्यपाशमुन्मुच्या त्वाहार्षमित्याहृत्योपतिष्ठतेऽग्रे बृहन्नुषसामूर्ध्वो अस्थादिति १४ यं कामयेत राष्ट्रं स्यादिति तं मनसा ध्यायेत् १५ औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या ग्रादेशमात्रपादा मौञ्जविवाना फलकास्तीर्णा वा मृदा प्रदिग्धा १६ सीद त्वं मातुरस्या उपस्थ इति तस्यां चतसृभिरुख्यं सादयति १७ शर्करायां वा तिसृभिः सादयति । हंसबत्योपतिष्ठत इत्येके १८

इति दशमी कण्डिका

येन देवा ज्योतिषोर्ध्वा उदायन्निति प्रादेशमात्रैः काष्ठैरुख्यमुपसमिन्द्धे १ नित्यो ज्वलति २ व्रतकालेऽन्नपतेऽन्नस्य नो देहीत्यौदुम्बरीं समिधं व्रते ऽक्त्वाभ्यादधाति ३ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण च्छन्दसा रात्रिमिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति सायं समिधमादधाति ४ एतेनैव त्रैष्टुभेन च्छन्दसाहरिष्टकामुपदध

इति प्रातः ५ दिवस्परीत्येकादशभिर्द्वादशभिस्त्रयोदशभिर्वा वात्सप्रेणोपतिष्ठते ६ पूर्वेद्युर्विष्णुक्रमान्क्रामति । उत्तरेद्युरुपतिष्ठते ७ एवं सदा क्रयात् ८ यदहः सोमं क्रीणीयात्तदहरुभयं समस्येत् । प्र च क्रामेदुप च तिष्ठेत ९ मुष्टिकरणप्रभृति कर्म प्रतिपद्यते १० यद्युख्ये भ्रियमाणेऽयं देवः प्रजा अभिमन्येताग्नेयीभिर्भिषग्वतीभिस्तिसृभिस्तिस्त्रः समिध आदध्यात् । भिषङ्गो अग्न आवह स्वरूपं कृष्णवर्तने । असि होता न ईड्यः । त्वं नो अग्ने भिषग्भव देवेषु हव्यवाहनः । देवेभ्यो हव्यवडसि । भिषजस्त्वा हवामहे भिषजः समिधीमहि । भिषग्देवेषु नो भवेति ११ यदि कामयेत वर्षोदिति याः सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्त्रः समिध आदध्यात् । सूर्यो अपो वि गाहते रश्मिभिर्वाजसातमः । बोधा स्तोत्रे वयोवृधः । परि यो रश्मिना दिवोऽन्तान्ममे पृथिव्याः । उभे आ पप्रौ रोदसी महित्वा । वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्वः । दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तरिति १२ यदि कामयेत न वर्षेदिति याः सौरीर्भ्राजस्वतीस्ताभिस्तिसृभिस्तिस्त्रः समिध आदध्यात् १३

इत्येकादशी कण्डिका

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा । तरणिर्विश्वदर्शत इत्येषा । दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूता आयन्नर्थानि कृणवन्नपांसीति १ यद्युख्ये भ्रियमाणे यजमानस्य नश्येदग्नेऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येत्येताभिश्चतसृभिरुपतिष्ठेत २ विन्दत्येवेति विज्ञायते ३ यदहः प्रयायादुदु त्वा विश्वे देवा इत्युख्यमुद्यम्य सीद त्वं मातुरस्या उपस्थ इति चतसृभिर्द्वीषे शकटे प्रउग उख्यमासादयति ४ तिसृभिरासादयति । हंसवत्योपतिष्ठत इत्येके ५ समोप्येतरावग्नी अन्वारोप्य प्रेदग्ने ज्योतिष्मान्याहीति प्रयाति ६ अक्रन्ददग्निरित्यक्षशब्दमनुमन्त्रयते ७ अध्यवसाय समिधाग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमादधाति ८ उत्तरया त्रिष्टुभा राजन्यस्य । जगत्या वैश्यस्य ९ इन्धनव्रतनाध्यवसानसंनिपाते घृतानुषिक्तां पूर्वामादधाति १० यद्युखां भस्माभिनिषीदेदुख्यमादायोदकान्तं गत्वेमं सुयोनिं सुवृतं हिरण्मयं सहस्त्रभृष्टिं महिषावरोह । उत्सं जुषस्व मधुमन्तमूर्व समु-

द्रियं सदनमाविशस्व । इमं स्तनं मधुमन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियं सदनमाविशस्वेत्येताभ्यामुखाया ग्रग्निमुद्धृत्यानिरूहञ्छिक्यादुखामापो देवीः प्रति गृह्णीत भस्मैतदिति तिसृभिरप्सु भस्म प्रवेशयति ११ भस्मनोऽपादाय प्रपीद्य प्रसद्य भस्मनेति द्वाभ्यामुखायां प्रत्यवधाय पुनरूर्जा सह रय्येति पुनरुदैति १२ पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति पुनरुख्यमुपसमिन्द्धे १३

इति द्वादशी करिडका

बोधा स बोधीति बोधवतीभ्यामुपतिष्ठते १ नित्यमप्सु भस्मप्रवेशनम् दीक्षितस्य कृतास्विष्टकासु । ग्रकृतासु संसर्गार्थं भवति २ पुरीषे पशुकामः कुर्वीत ३ ग्रप्सु यायावरः प्रवयेत् ४ दीक्षितस्येष्टकाः करोति मासप्रभृतिषु दीक्षाकल्पेषु पुरस्तादर्दीक्षितस्येतरेषूपरिष्टात्प्राजापत्यात्पशोः ५ मृन्मयीरिष्टकाः करोति पादमात्र्योऽरत्निमात्र्य ऊर्वस्थिमात्र्योऽणूकमात्र्य ग्रृजुलेखा दक्षिणावृतः सव्यावृतस्त्र्यालिखिताश्च ६ निर्मन्थ्येन लोहिनीः पचन्ति ७ ग्रभिन्ना भवन्ति ८ खराडां कृष्णां लक्ष्मणां च नोपदध्यात् ९ पुष्करपर्णं रुक्मो हिररामयः पुरुषः स्रुचौ सप्त स्वयमातृणाः शर्करा हिररायेष्टकाः हृपञ्च घृतेष्टका दूर्वास्तम्बः कूर्म उलुखलं मुसलं शूर्पमश्मानः पशुशिरांसि सर्पशिरश्चामृन्मयीरिष्टकाः १० जानुदघ्नं साहस्रं चिन्वीत प्रथमं चिन्वानः । नाभिदघ्नं द्विषाहस्रं द्वितीयम् । ग्रास्यदघ्नं त्रिषाहस्रं तृतीयम् । उत्तरमुत्तरं ज्यायांसम् ११ महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति वाजसनेयकम् १२

इति त्रयोदशी करिडका

ग्रपवृत्ते दीक्षापरिमाणेऽपेत वीतेति गार्हपत्यचितेरायतनं व्यायाममात्रं चतुरस्रं परिमराडलं वोद्धत्य हरिराया पलाशशाखया शमीशाखया वा संमृज्य प्राचीमुदीचीं वा शाखामुदसित्वा शं नो देवीरभिष्टय इत्यद्भिरवोक्ष्याग्नेर्भस्मासीति सिकता निवपति १ संज्ञानमित्यूषान् २ तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ३ सं या वः प्रियास्तनुव इत्यूषान्सिकताश्च संसृज्य चित स्थ परिचित इत्येकविंशत्या शर्कराभिर्गार्हपत्य-

चितेरायतनं परिश्रयति । तिस्रस्तिस्रः संहिताः ४ व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि । पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तमिति शर्करा ग्रभिमन्त्र्यायं सो ग्रग्निरिति चतस्रो मध्ये प्राचीरिष्टका गार्हपत्यचितावुपदधाति ५ इडामग्नेऽयं ते योनिर्ऋत्विय इति द्वे पुरस्तात्समीची तिरश्ची वा ६ एवं पश्चाच्चिदसि परिचिदसीति ७ ग्रवशिष्टं त्रयोदशभिर्लोकंपृणाभिः प्रच्छादयति ८ लोकं पृण ता ग्रस्य सूददोहस इति द्वाभ्यांद्वाभ्यां मन्त्राभ्यामेकैकां लोकंपृणामुपदधाति ९ सर्वास्विष्टकासु तयादेवतमन्ततो दधाति १०

इति चतुर्दशी कण्डिका

चात्वालस्थानात्पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्यर्चा चितावनुव्यूहति १ सा चितिर्भवति २ पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः । त्रिचितीकं द्वितीयम् । एकचितीकं तृतीयम् ३ एकचितीकानेवात ऊर्ध्वं चिन्वीत ४ ग्रजीजनन्नमृतं मर्त्यास इति गार्हपत्यचितिमभिमृश्य समितमिति तस्यां चतसृभिरुख्यं संनिवपति ५ विज्ञायते च वि वा एतौ द्विषाते यश्चोखायां यश्च चीयते । ब्रह्म यजुः । यत्संन्युप्य विहरति ब्रह्मणैवैनौ संशास्तीति ६ साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि । विद्वाँ ग्रस्य व्रता ध्रुवा वया इवानु रोहत इति संन्युप्तावभिमन्त्र्य मातेव पुत्रमिति शिक्यादुखां निरूह्य यदस्य धारे रजत इति वैश्वानर्या शिक्यमादत्ते ७ नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्वास्ताः शिक्यं रुक्मसूत्रमासन्दीं चादाय दक्षिणमपरमवान्तरदेशं गत्वा नमः सु ते निर्ऋत इति स्वकृत इरिणे प्रदरे वा शिक्यं निधाय तस्येष्टकाभिः पाशमभ्युपदधाति ८ यस्यास्ते ग्रस्याः क्रूर ग्रासञ्जुहोमीत्येताभिस्तिसृभिः पराचीरसंस्पृष्टा दक्षिणापवर्गम् ९ न तयादेवतं करोति १०

इति पञ्चदशी कण्डिका

यत्ते देवी निर्ऋतिराबबन्धेति शिक्यजालेनैनाः म्रच्छाद्य रुक्मसूत्रमासन्दीं च परस्तान्निधायापास्मदेतु निर्ऋतिर्नेहास्या ग्रपि किंचन । ग्रगोतां नाष्ट्रां पाप्मानं सर्वं तदपहन्महे । ग्रपास्मन्नैर्ऋतान्पाशान्मृत्यूनेकशतं चये । ग्रपा-

स्य ये सिनाः पाशा मृत्यूनेकशतं सुवे । ये ते पास्य एकशतं मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे । देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रं दसये वचोभिः । विश्वस्य या जायमानस्य वेद शिरःशिरः प्रति सूरी विचष्ट इत्येताभिश्चतसृभिरुपहिता अभिमन्त्र्य यदस्य पारे रजस इति वैश्वानर्या परिषिच्य भूत्यै नम इत्युपस्थायाप्रतीक्षमायन्ति १ निर्ऋत्या अन्तर्हित्या इति विज्ञायते २ शं नो देवीरभिष्टय इत्यद्भिर्मार्जयन्ते ३ ऊर्जं बिभ्रद्वसुमनाः सुमेधा गृहानैमि मनसा मोदमानः सुवर्चाः । अघोरेण चक्षुषाहं शिवेन गृहाणां पश्यन्वय उत्तिराणि । गृहाणामायुः प्र वयं तिरामो गृहा अस्माकं प्र तिरन्त्वायुः । गृहानहं सुमनसः प्रपद्येऽवीरघ्नो वीरवतः सुवीरानिति गृहानभ्येति ४ निवेशनः संगमनो वसूनामित्याहवनीयं गार्हपत्यं वोपतिष्ठन्ते ५

इति षोडशी कण्डिका

राज्ञो निवपनादि कर्म प्रतिपद्यते १ प्रायणीयया प्रचर्य वेदिं विमिमीते २ हविष्कृता वाचं विसृज्येति वाजसनेयकम् ३ प्रायणीयाया ध्रौवादित्येतदादि कर्म प्रतिपद्यते ४ आतिथ्यया प्रचर्याग्निं विमिमीते ५ हविष्कृता वाचं विसृज्येति वाजसनेयकम् ६ समूलं हरितं दर्भस्तम्बमाहृत्य मध्येऽग्नेर्निखाय जुह्वां पञ्चगृहीतं गृहीत्वा सजूरब्दोऽयावभिरिति दर्भस्तम्बे पञ्चाहुतीर्जुहोति ७ यावान्यजमान ऊर्ध्वबाहुस्तावता वेणुनाग्निं विमिमीते ८ त्रीन्प्राचश्चतुर उदीचः ९ पुरुषमात्राणि पक्षपुच्छानि १० आत्मा चतुःपुरुषः ११ अरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयति १२ एवमुत्तरत उत्तरम् १३ प्रादेशेन वितस्त्या वा पश्चात्पुच्छम् १४ एकविधः प्रथमोऽग्निः । द्विविधो द्वितीयः । त्रिविधस्तृतीयः । त एवमेवोद्यन्त्यैकशतविधात् १५ तदु ह वै सप्तविधमेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निस्तत ऊर्ध्वमेकोत्तरानिति वाजसनेयकम् १६ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथा । बडित्था पर्वतानामित्येताभ्यां विमितमग्निमाक्रमन्ते १७

इति सप्तदशी कण्डिका

सं वरत्रा दधातनेति मंप्रेष्यति १ निष्कृताहावमवटमित्यवटादुदकमाहा-

वेषूत्सिञ्चति २ तेषु बलीवर्दान्पाययन्ति ३ उद्योजनमन्तर्याममीषां खगल्यं शफम् । अष्ट्रां तालं प्रतीनाहमुभे मण्डूक्यौ युजाविति युगलाङ्गलं संप्रसारयति ४ सीरा युञ्जन्तीति द्वाभ्यां सीरं युनक्ति षड्गवं द्वादशगवं चतुर्विंशतिगवं वा ५ उष्टारयोः पिल्वयोरथो आबन्धनीययोः । सर्वेषां विद्म वो नाम वाहाः कीलालपेशस इति युक्तानभिमन्त्र्योदस्थाद्गोजिद्धनजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः । एकचक्रेण सविता रथेनोर्जो भागं पृथिवीमेत्वापृणन्निति लाङ्गलमुच्छ्रयति ६ ब्रह्म जज्ञानमित्येषा । अनाप्ता या वः प्रथमा यस्यां कर्माणि कृण्वते । वीरान्नो अत्र मा दभंस्तद्व एतत्पुरो दधे । पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्यै ऋणया न ईयसे । सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः । अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतव इति ब्रह्मवर्माणि जुहोति ७ मलिम्लुचो नामासि त्रयोदशो मास इन्द्रस्य वर्मासीन्द्रस्य शर्मासीन्द्रस्य वरूथमसि तं त्वा प्रपद्ये ८

इत्यष्टादशी कण्डिका

गायत्रीं लोमभिः प्रविशामि । त्रिष्टुभं त्वचा प्रविशामि । जगतीं मांसेन प्रविशामि । अनुष्टुभमस्थ्ना प्रविशामि । पङ्क्तिं मज्ज्ञा प्रविशामि । ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति सूराः । तन्नस्त्रायतां तन्नो विश्वतो महदायुष्मन्तो जरामुप्रगच्छेम देवा इति विमितमग्निमाक्रमन्ते १ लाङ्गलं पवीरवमिति द्वाभ्यां कृषति २ कीनाशा बलीवर्दानजन्ति ३ पुच्छाच्छिरोऽधि क्वषति ४ कामं कामदुघे धुक्ष्वेति प्रदक्षिणमावर्तयंस्तिस्रस्तिस्रः सीताः संहिताः कृषति ५ मध्ये संभिन्ना भवति ६ दक्षिणात्पक्षादुत्तरम् । उत्तरस्माद्दक्षिणम् । दक्षिणायै श्रोणेरुत्तरमंसम् । उत्तरायै दक्षिणम् । एतद्वा विपरीतम् ७ विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम लुवरगन्मेति दक्षिणेऽंस उत्तरे वा बलीवर्दान्विमुच्य तानुदीचः प्राचो वोत्सृज्याध्वर्यवे ददाति ८ चतुरश्रमसंभिन्नं षोडशसीतं वाजसनेयिनः समामनन्ति ९ पञ्चदशोदपात्रान्निनयति । द्वादश कृष्टे त्रीनकृष्टे १० या जाता ओषधय इति चतुर्दशभिरोषधीर्वपति ११ अनुसीतमित्युक्तम् १२ तिलमाषा व्रीहियवाः प्रियङ्गवणवो गोधूमा वेणु-

श्यामाकनीवारा जर्तिलाश्च गवीधुका आरण्यजा मर्कटका विज्ञेयाः १३ गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे । सप्तारण्या अकृष्टे १४

इत्येकोनविंशी कण्डिका

यामोषधीनां नाधिगच्छेत्तस्याः स्थाने यवान्मधुमिश्रान्वपेत् १ उप्ता मेऽसीति वा मनसा ध्यायेत् २ अधिगतायां यः प्रथम इध्म आगच्छेत्तस्मिन्नेनामुपसं नह्येत् ३ ये वनस्पतीनां फलग्रहयस्तानिध्म उपसंनह्य प्रोक्षेत् ४ मा नो हिंसीज्जनिता यः पृथिव्या इति चतसृभिर्दिग्भ्यो लोष्टान्समस्यति येऽन्तर्विधाद्बहिर्विधमापन्ना भवन्ति ५ यं द्विष्याद्यत्र स स्यात्तस्यै दिशो जघन्यं लोष्टमाहरेदिषमूर्जमहमित आदद इति ६ घृतेन सीतेति सीतान्तरालान्यभिमृशति । उत्तरवेदिं वा ८ उत्तरवेदिमुपवपति यावानग्निः ८ व्याघारणान्तां कृत्वाग्ने तव श्रवो वय इति षड्भिः सिकता न्युप्य चित स्थ परिचित इत्यपरिमिताभिः शर्कराभिराहवनीयचितेरायतनं परिश्रयति यथा गार्हपत्यस्यैवम् ९ त्रिसप्ताभिः पशुकामस्य । त्रिणवाभिर्भ्रातृव्यवतः । दशभिर्दशभिरन्नाद्यकामस्य । अपरिमिताभिरपरिमितकामस्य १० यं कामयेतापशुः स्यादित्यपरिमित्य तस्येत्युक्तम् ११ आप्यायस्व समेतु त इति सिकता व्यूहति १२ उत्तरया त्रिष्टुभा राजन्यस्य १३ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् । पुनानो वारं पर्येत्यव्ययं श्येनो न योनिं घृतवन्तमासदमिति जगत्या वैश्यस्य १४

इति विंशी कण्डिका

आतिथ्याया ध्रौवादित्येतदादि कर्म प्रतिपद्यते १ पौर्वाह्णिकीभ्यां प्रचर्याग्रेण प्राग्वंशं लोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि प्रथमस्याश्चितेरिष्टकाः संसादयति । अपि वा तिस्रः स्वयमातृणास्तिस्रश्च विश्वज्योतिषः २ ता दर्भाग्रमुष्टिनाज्येन व्यवोक्ष्य समुद्यम्य चित्यग्निभ्यः प्रणीयमानेभ्योऽनुब्रूहीति संप्रेष्यति । प्रणीयमानेभ्युग्रोऽनुब्रूहीति वा ३ प्रथमायां त्रिरनूक्तायां हिरण्यगर्भः समवर्तताग्र इति प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति ४ श्वेतमश्वं पुरस्तान्नयन्ति ५ प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इति द्वाभ्यामा-

त्मन्नग्निं गृहीत्वा यास्ते अग्ने समिध इति स्वयंचित्याभिमृशति ६ इष्टका-भिरग्निं चिनोत्यध्वर्युर्यजमानो वा ७ स्वयं चिन्वन्नात्मन्नग्निं गृह्णीते न स्व-यंचित्याभिमृशति ८ प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः ९ प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तुर्मुखवादः १० दक्षिणतः श्वेतो ऽश्वस्तिष्ठति ११ तमालभ्येन्द्रं विश्वा अवीवृधन्नित्युत्तरेण पुच्छाप्ययमन्तर्विध आक्रमणं प्रतीष्टकामुपदध्यात् १२ उत्तरतः पश्चाद्वोपचारोऽग्निः १३ वाङ्म आसन्निति सर्वत्रारोहन्प्रत्यवरोहंश्च जपति । सकृद्वान्ततः १४

इत्येकविंशी कण्डिका

तत्त्वा यामि ब्रह्मणा वन्दमान इति शालामुखीये हुत्वा प्राञ्चमश्वमभ्यस्थाद्वि-श्वा इति दक्षिणेन पदा दर्भस्तम्बमाक्रमय्य प्रदक्षिणमावर्तयित्वा यदक्रन्द इति पुनरेवाक्रमयति १ अपां पृष्ठमसीत्यश्वस्य पदे पुष्करपर्णमुत्तानमुपधा-यापां निधिं गायेति संप्रेष्यति २ ब्रह्म जज्ञानमिति पुष्करपर्ण उपरिष्टान्नि-र्बाधं रुक्ममुपधाय हिरण्यगर्भः समवर्तताग्र इति तस्मिन्हिरण्मयं पुरुषं प्रा-चीनमुत्तानं दक्षिणेनातृणं प्राङ्मुख उपधाय पुरुषसाम गायेति संप्रेष्यति ३ द्रप्सश्चस्कन्देति पुरुषमभिमृश्य नमो अस्तु सर्पेभ्य इति तिसृभिरभिमन्त्र्य कृणुष्व पाज इति पञ्चभिरुत्तरवेदिवत्पुरुषं व्याघार्य स्रुचावुपदधातीत्युक्तम् ४ अपि वाग्नेस्त्वा तेजसा सादयामीत्याज्यस्य पूर्णां कार्ष्मर्यमयीं दक्षिणेन पुरुषम् । इन्द्रस्य त्वौजसा सादयामीति दध्नः पूर्णामौदुम्बरीमुत्तरेण पुरुषम् ५ अग्निर्मूर्धेति कार्ष्मर्यमयीमुपतिष्ठते । भुवो यज्ञस्येत्यौदुम्बरीम् । एतद्वा विपरीतम् ६ मूर्धन्वतीभ्यामुपदधाति यजुर्भ्यामुपतिष्ठत इत्येके ७ अत्र पुरुषवद्रुक्मं व्याघार्य ८

इति द्वाविंशी कण्डिका

ध्रुवासि धरुणास्तृतेति स्वयमातृणामभिमृश्याश्वेनोपघ्राप्य प्रजापतिस्त्वा सा-दयतु पृथिव्याः पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति । भूरिति चैतया व्याहृत्या १ चित्तिं जुहोमीति स्वयमातृणायां हुत्वानुप्राणिति २ अविद्वान्ब्राह्मणो वरं ददात्येकं द्वौ त्रीन्वा ३ आसीनः प्रथमां स्वयमातृणा-मुपदधाति । ऊर्ध्वज्ञुर्द्वितीयाम् । तिष्ठंस्तृतीयाम् ४ स्वयमातृणायां

साम गायेति संप्रेष्यति ५ एवं द्वितीयां तृतीयां चोपधाय संप्रेष्यति ६ यदि मन्येत यजमानः पूर्वो मातिक्रान्तो भ्रातृव्य इति प्रथोऽसीत्युपहितां प्राचीमुदूहेत् । यदि वापरः पृथिव्यसीति प्रतीचीम् । सदृङ्यदि भूरसि भुवनमसीति विचालयेत् ७ तेजोऽसि तेजो मे यच्छेति हिरण्येष्टकाम् ८ पृथिव्युदपुरमन्नेनेति मण्डलेष्टकाम् ९ भूरसि भुवनस्य रेतः । इष्टका स्वर्गो लोकः । वाचा त्वान्वारोहामि । अग्निर्ज्योतिर्ज्योतिरग्निः । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । सूरसि सुवनस्य रेतः । इष्टका स्वर्गो लोकः । मनसा त्वान्वारोहामि । सूर्यो ज्योतिर्ज्योतिः सूर्यः । तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यन्वारोहे द्वे १०

इति त्रयोविंशी कण्डिका

काण्डात्काण्डात्परोहन्तीति द्वाभ्यां दूर्वेष्टकां सलोष्टं हरितं दूर्वास्तम्बमप्रच्छिन्नाग्रं यथास्योपहितस्य स्वयमातृण्णायामग्रं प्राप्नुयादिति १ प्रबाहुगिष्टकायां हिरण्यशकलावध्यूह्य यास्ते अग्ने सूर्ये रुच इति द्वाभ्यां वामभृतम् २ विराड् ज्योतिरिति तिस्रो रेतःसिचः ३ तासां द्वे प्रथमायां चित्यां यून उपदध्यात् । सर्वा मध्यमायां विवयसः । एकां प्रथमायामेकामुत्तमायां स्थविरस्य ४ अन्यतरामुपदध्याद्द्वेष्यस्य ५ यजुषेमां चामूं चोपदधाति । मनसा मध्यमाम् ६ बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् ७ अग्नेर्यान्यसीति द्वे संयान्यौ ८ मधुश्च माधवश्चेति द्वे ऋतव्ये समानतयादेवते ९ सर्वास्वृतव्यास्ववकामनूपदधाति १० अवकासु सादयतीत्येके ११ अषाढासीति द्वाभ्यामषाढामुपरिष्टाल्लक्ष्माणम् १२ यं कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्येत्युक्तम् १३ घर्मेष्टकामुपधाय कुलायिनीम् १४ तयोः प्रवर्ग्ये मन्त्रौ १५

इति चतुर्विंशी कण्डिका

मधु वाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य मही द्यौः पृथिवी च न इति पुरस्तात्स्वयमातृण्णायाः प्रत्यञ्चं जीवन्तं प्राङ्मुख उपदधाति १ चतस्र आशाः प्रचरन्त्वग्नय इति वोपधायावकाभिः परीतंस्य जालेन प्रच्छाद्य शङ्कुभिः परिणिहत्यापां गम्भीरं गच्छ मात्वा सूर्यः परीताप्सीन्मो अ-

ग्निर्वैश्वानरः । अघोरः प्रजा अभिविपश्यानु त्वा दिव्या वृष्टिः सचताम् । संसर्प त्रीन्समुद्रान्स्वर्गांल्लोकानपां पतिर्वृषभ इष्टकानाम् । तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानः स्वां योनिं यथायथमित्युपहितमभिमन्त्रयते २

इति पञ्चविंशी कण्डिका

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिरिति प्रादेशमात्रं चतुःस्रक्त्यौदुम्बरमुलूखलमुत्तरेऽंसे प्रयुनक्ति १ अपरिमितं मुसलम् २ उत स्म ते वनस्पते वातो वि वात्यग्रमित् । अथो इन्द्राय पातवे सुनु सोममुलूखलेति सर्वौषधस्य पूरयित्वावहत्येदं विष्णुर्विचक्रम इति मध्येऽग्नेरुपदधाति ३ तद्विष्णोः परमं पदमिति मुसलम् ४ दिवो वा विष्णविति शूर्पम् ५ स्यूता देवेभिरमृतेनागा उखां स्वसारमधि वेदिमस्थात् । सत्यं पूर्वैर्ऋषिभिश्चाकुपानोऽग्निः प्रविद्वानिह तत्करोत्विति घृतेनोखां पूरयति । दध्ना मधुना सिकताभिर्वा सर्वैर्वा ६ संसृज्य न रिक्तामवेक्षेत । शुग्विद्धा भवति ७ अथास्यां पय आनयति ८ संन्युप्य पूरणमेके समामनन्ति ९ यं कामयेत क्षोधुकः स्यादित्यूनां तस्येत्युक्तम् १० ध्रुवासि पृथिवीति मध्येऽग्नेरुपदधाति ११ पृथिवि पृथिव्यां सीद माता मातरि माता स्योना स्योनायामुखां स्वसारमधि वेदिमस्थात् । सत्यं पूर्वैर्ऋषिभिश्चाकुपानोऽग्निः प्रविद्वानिह तद्दधात्विति वोलूखलमुपदधातीति वाजसनेयकम् १२ अग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमानिति द्वाभ्यामुखायां हुत्वा पुरुषशिरसि हिरण्यशल्कान्प्रत्यस्यति १३

इति षड्विंशी कण्डिका

द्रप्सश्चस्कन्देत्यास्ये । अभूदिदं विश्वस्य भुवनस्येति वा १ ऋचे त्वेति दक्षिणेऽक्षिकटे । रुचे त्वेति सव्ये २ द्युते त्वेति कर्णयोः ३ भासे त्वेति दक्षिणस्यां नासिकायाम् । ज्योतिषे त्वेत्युत्तरस्याम् ४ समित्स्रवन्तीति शृतातङ्क्येन दध्ना मधुमिश्रेण पुरुषशिरः पूरयति ५ सर्वेषां पशुशिरसां हिरण्यशल्कप्रत्यसनं पूरणं च वाजसनेयिनः समामनन्ति ६ तस्मिन्त्सुपर्णो मधुकृत्कुलायीति पुरुषशिर आदायादित्यं गर्भमित्युखायां पुरस्ताच्चुबुकं प्राचीनमुत्तानं प्राङ्मुख उपधाय चित्रं देवानामित्यर्धर्चाभ्यामक्षिकटयोर्हुत्वा प-

शुशीर्षाण्युपदधाति ७ यं कामयेतापशुः स्यादिति विषूचीनानि तस्येत्यु-
क्तम् ८ वातस्य ध्राजिमिति पुरस्तात्प्रतीचीनमश्वस्य ९ अजस्त्रमिन्दुमिति
पश्चात्प्राचीन मृषभस्य १० वरूत्रिं त्वष्टुरिति दक्षिणत उदीचीनं वृष्णेः ११
यो अग्निरग्नेरित्युत्तरतो दक्षिणा वस्तस्य १२ तान्यव्यवायेनोत्सर्गैरुपतिष्ठते
१३ इमं मा हिंसीर्द्विपादमिति पुरुषस्य १४ इमं मा हिंसीरेकशफमित्यश्व-
स्य १५ इमं समुद्रमित्यृषभस्य १६ इमामूर्णायुमिति वृष्णेः १७ अजा
ह्यग्नेरिति बस्तस्य १८ यदि वायव्यस्य स्यान्मुख्यस्य स्थाने सर्वेषामुप-
धानैरुपधाय सर्वेषामुत्सर्गैरुपतिष्ठेत १९ अपि वा तस्यतस्य स्थान उपधाय
तस्यतस्योत्सर्गेणोपतिष्ठते २० यं कामयेत कनीयोऽस्यान्नं स्यादिति संतरां
तस्येत्युक्तम् २१ नमो अस्तु सर्पेभ्य इति दक्षिणेऽंसे सर्पशिर उपदध्याद्वि-
षूचीनं पशुशीर्षैः २२ अपि वा यजुरेव वदेन्नोपदध्यात् २३

इति सप्तविंशी कण्डिका

मा छन्दस्तत्पृथिव्यग्निर्देवता तेनर्षिणांतेन ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवा
सीद । प्रमा छन्दस्तदन्तरिक्षं वातो देवता । प्रतिमा छन्दस्तद्द्यौः सूर्यो
देवता । अस्त्रीविश्छन्दस्तद्दिशः सोमो देवता । विराट् छन्दस्तद्वाग्वरुणो
देवता । गायत्री छन्दस्तदजा बृहस्पतिर्देवता । त्रिष्टुप् छन्दस्तद्धिरण्य-
मिन्द्रो देवता । जगती छन्दस्तद्द्यौः प्रजापतिर्देवता । अनुष्टुप् छन्दस्तद्वा-
युर्मित्रो देवता । उष्णिहा छन्दस्तच्चक्षुः पूषा देवता । पङ्क्तिश्छन्दस्तत्कृ-
षिः पर्जन्यो देवता । बृहती छन्दस्तदश्वः परमेष्ठी देवता तेनर्षिणा तेन ब्र-
ह्मणा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्येताभिर्द्वादशभिस्त्रिरभ्यासं पुरस्ता-
त्प्रतीचीं पुरुषाकृतिं चिनोति १ पुरुषशिरोऽस्याः शिरो भवति २ सहस्र-
शीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते ३ अपस्या
उपदधाति । अपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीः । अर्णवे स-
दने सीदेति पञ्च दक्षिणत उदीचीः । अपां त्वा सदने सादयामीति पञ्च प-
श्चात्प्राचीः । गायत्री छन्द इति पञ्चोत्तरतो दक्षिणाः ४

इत्यष्टाविंशी कण्डिका

ये यज्ञं संमगृभ्णन्देवा देवेभ्यस्परि । तान्गायत्री नयतु प्रजानती स्वर्गे लो-

के अमृतं दुहाना । ये ज्योतींषि संदधति स्वरारोहन्तो अमृतस्य लोकम् । ते यन्तु प्रजानन्तो यज्ञं विदानाः सुकृतस्य लोके । ये पशवो मेध्यासो यज्ञस्य योनिमभिसंबभूवुः । तान्ददन्ते कवयो विपश्चितो यज्ञं विदानाः सुकृतस्य लोके । यः पन्था विततो देवयानश्छन्दोभिर्विगृहीत एति । तेनातिष्ठद्दिवमन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकम् । यो यज्ञः सहस्रधारो द्यावापृथिव्योरधि निर्मितः । तेनैतु यजमानः स्वस्त्या दिवोऽधि पृष्ठमस्थादिति पञ्च हिरण्येष्टकाः प्रतिदिशम् । एकां मध्ये १ आयवे स्वाहायोष्कृते स्वाहायोष्पत्वने स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहेति पञ्चोपधायाद्भ्यः संभूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्र इत्येतामुपधायर्तसदसि सत्यसदसि तेजःसदसि वर्चःसदसि यशःसदसि गृणानासि । धामासि धाम्यै त्वा धामभ्यस्त्वा धामसु सीद । सनिरसि सन्यै त्वा सनेयम् । वित्तिरसि वित्त्यै त्वा विदेयम् । शक्तिरसि शक्त्यै त्वा शकेयम् । भूतिरसि भूत्यै त्वा भूयासम् । कर्मासि कर्मणे त्वा क्रियासम् २

इत्येकोनत्रिंशी कण्डिका

गूर्दोऽसि गूर्दाय त्वा गूर्देभ्यस्त्वा गूर्दे सीद । क्षत्रं पाहि क्षत्रं पिन्व क्षत्रं जिन्व क्षत्रं यच्छ क्षत्रं दृंह क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद । विश्वेषु त्वा पार्थिवेषु सादयामि । विश्वेषु त्वान्तरिक्षेषु सादयामि । विश्वेषु त्वा दिव्येषु सादयामि । विश्वेषु त्वा देवेषु सादयामि । विश्वासु त्वाप्सु सादयामि । विश्वासु त्वौषधीषु सादयामि । विश्वेषु त्वा वनस्पतिषु सादयामि । विश्वासु त्वा दिक्षु सादयामि । दिवि सीद । स्वर्जिदसि पृतनाजिदसि भूरिजिदस्यभिजिदसि विश्वजिदसि सर्वजिदसि सत्राजिदसि धनजिदसि भ्राडसि विभ्राडसि प्रभ्राडसि । सपत्नहनं त्वा वज्रं सादयामि । अभिमातिहनं त्वा वज्रं सादयामि । अरातिहनं त्वा वज्रं सादयामि । यातुहनं त्वा वज्रं सादयामि । पिशाचहनं त्वा वज्रं सादयामि । रक्षोहणं त्वा वज्रं सादयामि । शत्रुहणममित्रहणं भ्रातृव्यहणमसुरहणं त्वेन्द्रं वज्रं सादयामि । उद्वदस्युदितिरस्युद्यत्यस्याक्रममाणास्याक्रामन्त्यस्याक्रान्तिरसि संक्रममाणासि संक्रामन्त्यसि संक्रान्तिरसि स्व-

ग्र्यासि स्वरसि । इषि सीदोर्जि सीद भगे सीद द्रविणे सीद सुभूते सीद पृथिव्या यज्ञिये सीद विष्णोः पृष्ठे सीदेडायाः पदे सीद घृतवति सीद पिन्वमाने सीद १

इति त्रिंशी कण्डिका

संवत्सरे सीद परिवत्सरे सीदेदावत्सरे सीदेदुवत्सरे सीदेद्वत्सरे सीद वत्सरे सीद । एकस्यां सीद दशसु सीद शते सीद सहस्रे सीदायुते सीद नियुते सीद प्रयुते सीदार्बुदे सीद न्यर्बुदे सीद समुद्रे सीद मध्ये सीद पद्मे सीदान्ते सीद परार्धे सीद । पिन्वमानासि पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा पिन्वमाने सीद । ऋतमस्यृताय त्वर्तेभ्यस्त्वर्ते सीद । सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद । संधिरसि संधये त्वा संधिभ्यस्त्वा संधिषु सीद । संश्लिडसि संश्लिषे त्वा संश्लिड्भ्यस्त्वा संश्लिट्सु सीद । संपदसि संपदे त्वा संपद्भ्यस्त्वा संपत्सु सीदेत्येताभ्यामनुवाकाभ्यां प्रतिमन्त्रमृषीष्टकाः सादनप्रवादैश्च पर्यायैः १

इत्येकत्रिंशी कण्डिका

अयं पुरो भुव इति पञ्चाशतं प्राणभृतः । दशदश प्रतिदिशमक्ष्णया दश । मध्येऽन्तरामुपधाय बाह्यांबाह्याम् १ प्राची दिशामिति पञ्चाशतमपानभृतो यथा प्राणभृतः । बाह्यामुपधायान्तरामन्तराम् २ आयुषः प्राणं संतनु । प्राणादपानं संतनु । अपानाद्व्यानं संतनु । व्यानाच्चक्षुः संतनु । चक्षुषः श्रोत्रं संतनु । श्रोत्रान्मनः संतनु । मनसो वाचं संतनु । वाच आत्मानं संतनु । आत्मनः पृथिवीं संतनु । पृथिव्या अन्तरिक्षं संतनु । अन्तरिक्षाद्दिवं संतनु । दिवः सुवः संतन्विति द्वादश संततीः ३ पृथिवी वशामावास्या गर्भो वनस्पतयो जराय्वग्निर्वत्सोऽग्निहोत्रं पीयूषः । अन्तरिक्षं वशा धाता गर्भो रुद्रो जरायु वायुर्वत्सो घर्मः पीयूषः । द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूषः । ऋग्वशा बृहद्रथंतरे गर्भः प्रैषनिविदो जरायु यज्ञो वत्सो दक्षिणाः पीयूषः । विड्वशा राजन्यो गर्भः पशवो जरायु राजा वत्सो बलिः पीयूष इति पञ्च वशाः ४ अर्थेत स्थाध्वगतोऽग्नेर्वस्तेजिष्ठेन तेजसा देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः

पूरयित्वा शर्म च स्थ वर्म च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सा-दयामीति पुरस्तादनुसीतमुपधाय ज्योतिषे वामिति हिरण्यशल्कौ प्रत्यस्यति ५ एवमुत्तरा उत्तरैर्मन्त्रैः प्रतिदिशमनुसीतम् । चतस्रो मध्ये ६ शुक्रा स्थ वीर्यावतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णामि ७

इति द्वात्रिंशी कण्डिका

ऋतं च स्थ सत्यं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामि । चक्षुषे वाम् । मन्द्रा स्थाभिभुवो विश्वेषाम् वो देवानां देवताभिर्गृह्णामि । सपत्नघ्नीश्च स्थाभिमातिघ्नीश्च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः साद-यामि । रेतसे वाम् । अधिपति स्थौजस्वानादित्यानां वो देवानां देव-ताभिर्गृह्णामि । रक्षोघ्नीश्च स्थारातिघ्नीश्च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामि । प्रजाभ्यो वाम् । क्षत्रभृत स्थौजस्विनीर्मित्रावरु-णयोर्वो ब्रह्मणा देवताभिर्गृह्णामि । वसु च स्थ वामं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामि । तेजसे वाम् । व्रजक्षित स्थोर्ध्व-श्रितो बृहस्पतेर्वो ब्रह्मणा देवताभिर्गृह्णामि । भूतं च स्थ भव्यं च स्थ देव-स्य वः सवितुः प्रसवे मधुमतीः सादयामि । वर्चसे वामिति कुम्भेष्टकानां ग्रहणसादनप्रत्यसनाः १ हिरण्यवर्णा इत्युपहिता अभिमन्त्रयते २ दिवि श्रयस्वेति बार्हस्पत्यं नैवारं पयसि चरुं मध्ये कुम्भेष्टकानामुपदधाति ३ समन्या यन्तीत्येषा । हिरण्यवर्णः स हिरण्यसंदृगपां पतिः सेदु हिरण्य-वर्णः । हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मा इत्येताभ्यां च नैवारम् ४ त्रिवृत्ते अग्ने शिरस्तन्मे अग्ने शिरः । पञ्चदशौ ते अग्ने बाहू तौ मे अग्ने बाहू । सप्तदशस्ते अग्न आत्मा स मे अग्न आत्मा । एकविंशौ ते अग्ने ऊरू तौ मे अग्ने ऊरू । त्रिणवौ ते अग्ने अष्ठीवन्तौ तौ मे अग्ने अष्ठी-वन्तौ । त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानमित्येताः शिरसि पक्षयोर्मध्ये पुच्छे वोपदधाति ५ त्रिवृत्ते अग्ने शिरस्तेन मा पाहीति संनम-यंस्तांतामुपतिष्ठते यजमानः ६ त्वामग्ने वृषभमित्यृषभमुपधाय लोकं पृण ता अस्य सूददोहस इत्यवशिष्टमपरिमिताभिर्लोकंपृणाभिः प्रच्छादयति ७ सर्वान्वर्णानिष्टकानां कुर्यादिति ८

इति त्रयस्त्रिंशी कण्डिका

लेखाधिकारो भवति विज्ञायते च १ या दक्षिणावृतस्ता दक्षिणत उपदध्यात् । सव्यावृत उत्तरतः । ऋजुलेखाः पश्चात्पुरस्ताच्च । त्र्यालिखिता मध्ये २ चितौ हिरण्यं निधाय चित्तिमचित्तिमिति चितिक्लृप्त्याभिमृशति ३ यत्तेऽचितं यदु चितं ते अग्ने यदूनं यद्वात्रातिरिक्तम् । विश्वे देवा अङ्गिरसश्चिनवन्नादित्यास्ते चितिमापूरयन्तु । यास्ते अग्ने समिधः । चित्तिमचित्तिम् । वयमग्ने धनवन्तः स्यामालं यज्ञायोत दक्षिणायै । ग्रावा वदेदभि सोमस्यांशुनेन्द्रं शिक्षेमेन्दुना सुतेन । रायस्पोषं नो धेहि जातवेद ऊर्जो भागं मधुमत्सूनृतावत् । दधाम यज्ञं सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र । ईशानं त्वा शुश्रुमो वयं धनानां धनपते गोमदग्ने । अश्वावद्भूरि पुष्टं हिरण्यवदन्नमध्येहि मह्यम् । दुहां ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदकी विसर्पतु । प्रजापतिनात्मानमाप्रीणे रिक्तो म आत्मा । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश । तस्मै रुद्राय नमो अस्तु देवा इत्येताभिः स्वयंचित्याभिमृशति ४ उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा ५ तमालभ्य चात्वालात्पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्यर्चा चितावनुब्यूहति ६ सा चितिर्भवति ७

इति चतुस्त्रिंशी कण्डिका

यो अप्स्वन्तरग्निर्यो वृत्रे यः पुरुषे यो अश्मनि । य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । यः सोमे अन्तर्यो गोष्वन्तर्वयांसि य आविवेश यो मृगेषु । य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । पृष्टो दिवीत्येषा । येनेन्द्रस्य रथं संबभूवुर्यो वैश्वानर उत वैश्वदेव्यः । धीरो यः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । यं हुतादमग्निं यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः । यो देवानां देवतमस्तपोजास्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् । उक्षान्नाय वशान्नायेत्येताभिः षड्भिश्चितिंचितिमुपधायाभिजुहोति १ अग्ने भूरीणीत्याग्नेय्या धामच्छदा चितिंचितिमुपधायाभिजुहोति २ उपतिष्ठत इत्येके ३ आग्नेय्या गायत्र्या प्रथमां चितिमभिमृशेदित्युक्तम् ४ अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः । अगन्म महा मनसा यविष्ठं यो दीदाय समिद्धः स्वे

दुरोणे । चित्रभानू रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् । मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् । त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नरो नान्यं त्वत् । मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान्देवायते यज । अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भरेत्येता आम्नाता भवन्ति ५ षडुपसदः ६ द्व्यहंद्व्यहमेकैकेनोपसन्मन्त्रेण जुहोति ७ अनूपसदमग्निं चिनोति द्व्यहम् ८ उत्तमा चितिः ९ त्रीणि चतुस्तनानि व्रतानि । त्रीणि त्रिस्तनानि । त्रीणि द्विस्तनानि । एकमेकस्तनम् १० आपराह्णिकीभ्यां प्रचर्य श्वेतमश्वं परिणीय वसन्ति वसन्ति ११

इति पञ्चत्रिंशी कण्डिका

इति षोडशः प्रश्नः

श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य द्वितीयां चितिं चिनोति १ ध्रुवक्षितिरिति पञ्चाश्विनीरुपदधाति २ सजूर्ऋतुभिरिति पञ्चर्तव्या आश्विनीरनूपधाय ३ प्राणं मे पाहीति पञ्च प्राणभृत ऋतव्या अनूपधाय ४ अपस्पिन्वेति पञ्चापस्या अनुपरिहारम् ५ वायोर्यान्यसीति द्वे संयान्यौ ६ शुक्रश्च शुचिश्चेति द्वे ऋतव्ये समानतयादेवते ७ त्र्यविर्वय इति पञ्च दक्षिणस्यां श्रोण्याम् । पष्ठवाड्वय इति पञ्चोत्तरस्याम् । बस्तो वय इति दक्षिणेऽंसे । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्षे । सिंहो वय इत्युत्तरे । एतद्वा विपरीतम् । पुरुषो वय इति मध्ये । विष्टम्भो वय इति चतस्रो वयस्याः पुरस्तात्प्रतीचीः ८ यं कामयेतापशुः स्यादिति वयस्यास्तस्येत्युक्तम् ९ ऋषभादिश्चित्यन्तः १० श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य तृतीयां चितिं चिनोति ११ इन्द्राग्नी अव्यथमानामिति स्वयमातृणामभिमृश्याश्वेनोपघ्राप्य विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति । भुव इति चैतया व्याहृत्या १२ चित्तिं जुहोमीति स्वयमातृणायां हुत्वा व्यनिति १३ ज्योतिरसि ज्योतिर्मे यच्छेति हिरण्येष्टकाम् १४ अधिद्यौरिति मण्डलेष्टकाम् १५ अत्र रेतःसिचो विवयसः १६ विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् १७ अन्तरिक्षस्य या-

न्यसीति द्वे संयान्यौ १८

इति प्रथमा कण्डिका

नभश्च नभस्यश्चेति चतस्र ऋतव्याः । द्वेद्वे समानतयादेवते १ राज्ञ्यसि प्राची दिगिति पञ्च दिश्याः प्रतिदिशमेकां मध्ये २ आयुर्मे पाहीति दश प्राणभृतः पुरस्तादुपधाय ३ षट्त्रिंशतं बृहतीः । मा छन्द इति द्वादश दक्षिणतः । पृथिवी छन्द इति द्वादश पश्चात् । अग्निर्देवतेति द्वादशोत्तरतः ४ मूर्धासि राडिति सप्त वालखिल्याः पुरस्तात्प्रतीचीः । यन्त्री राडिति सप्त पश्चात्प्राचीः ५ अक्ष्णया द्वेष्यस्य प्रसवाय त्वोपयामाय त्वा काटाय त्वार्णवाय त्वा धर्णसाय त्वा द्रविणाय त्वा सिन्धवे त्वा समुद्राय त्वा सरस्वते त्वा विश्वव्यचसे त्वा सुभूताय त्वान्तरिक्षाय त्वेति द्वादश भूतेष्टकाः ६ ऋषभादिश्चित्यन्तः ७ श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य चतुर्थीं चितिं चिनोति ८ आशुस्त्रिवृदग्नेर्भागोऽसीत्येताभ्यामनुवाकाभ्यां यथाब्राह्मणमुपधायान्तरिक्षमस्यन्तरिक्षाय त्वेति द्वे संयान्यौ ९ सहश्च सहस्यश्चेति द्वे ऋतव्ये समानतयादेवते १० एकयास्तुवतेति सप्तदश सृष्टीः ११ इयमेव सा या प्रथमा व्यौच्छदिति षोडश व्युष्टीः १२ ऋषभादिश्चित्यन्तः १३

इति द्वितीया कण्डिका

श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चमीं चितिं चिनोति १ अग्ने जातान्प्र णुदा नः सपत्नानिति पुरस्तादुपदधाति । सहसा जातानिति पश्चात् । चतुश्चत्वारिंश स्तोम इति दक्षिणतः । षोडश स्तोम इत्युत्तरतः २ इष्टकायां पुरीषमध्यूह्य पृथिव्याः पुरीषमसीति मध्येऽग्नेः पुरीषवतीम् ३ एवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं विराजो दशदश प्रतिदिश मक्ष्णया ४ रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति स्तोमभागाः । सप्तसप्त प्रतिदिशम् । अवशिष्टा मध्ये ५ राज्ञ्यसि प्राची दिगिति पञ्च नाकसदः प्रतिदिशमेकां मध्ये ६ तासु पुरीषमध्यूह्यायं पुरो हरिकेश इति पञ्चचोडा अभ्युपदधाति । द्वेष्यं मनसा ध्यायन्पश्चात्प्राचीमुत्तमाम् ७ आयोस्त्वा सदने सादयामीति स्वयमातृणामभिमृश्याश्वेनोपघ्राप्य परमेष्ठी त्वा सादयतु दिवः पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति । सुवरिति चैतया व्याहृत्या ८

चित्तिं जुहोमीति स्वयमातृणायां हुत्वापान्य प्रोथदश्व इत्युत्तरेऽंसे विकर्णीम् ९ तेनान्याभिरिष्टकाभिरभ्युपदधाति १०

इति तृतीया कण्डिका

सुवरसि सुवर्मे यच्छेति हिरण्येष्टकाम् १ द्यौरपराजितेति मण्डलेष्टकाम् २ अत्रैकां रेतःसिचं स्थविरस्य ३ प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम् ४ तपश्च तपस्यश्चेति द्वे ऋतव्ये समानतयादेवते ५ देवानां यान्यसि देवानां देवयान्यसीति द्वे संयान्यौ ६ संयान्यावृतव्ये विश्वज्योतिषं रेतःसिचं हिरण्येष्टकां मण्डलेष्टकां विकर्णीं स्वयमातृणामित्येवमनुपूर्वा एके समामनन्ति ७ आपराह्णिकीभ्यां प्रचर्यौदुम्बरीः समिधो घृते वासयति ८ श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चम्याश्चितेः शेषं याज्ञसेनीं चितिं चिनोति ९ अग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधाति । एवमुत्तराणि त्रीणित्रीणि । त्रिष्टुभो दक्षिणतः । जगतीः पश्चात् । अनुष्टुभ उत्तरतः । बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दांसि यथावकाशम् । अतिच्छन्दसं मध्ये । द्विपदा अन्ततः १० अन्यत्र साहस्रात्पशुकामस्य गोचितिं चिनोति ११ सहस्रं पादमात्रीरिष्टकाः १२ ताः प्रथमायां चित्यां मध्यमायामुत्तमायां वोपदध्यात् १३

इति चतुर्थी कण्डिका

अग्ने गोभिर्न आ गहीत्यनुवाकेन प्रतिमन्त्रं पुनःपुनरभ्यासम् १ इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीत्यष्टौ सयुजः २ रोहितेषु त्वा जीमूतेषु सादयाम्यरुणेषु त्वा कृष्णेषु त्वा नीलेषु त्वा सितेषु त्वा जीमूतेषु सादयामीति पञ्च जीमूताः ३ अम्बा नामासीति सप्त कृत्तिकाः ४ पुरोवातसनिरसीति पञ्च वृष्टिसनीरनुपरिहारम् ५ सलिलाय त्वेत्यष्टावादित्येष्टकाः ६ ऋचे त्वा रुचे त्वेति पञ्च घृतेष्टका अनुपरिहारम् ७ आदित्येष्टकाभिघृतपिण्डान्व्यतिषक्तानिति वाजसनेयकम् ८ यशोदां त्वेति पञ्च यशोदाः ९ भूयस्कृदसीति पञ्च भूयस्कृतः १० अप्सुषदसीति पञ्चाग्निरूपाणि ११ पृथिव्यास्त्वा द्रविणे सादयामीति पञ्च द्रविणोदाः १२ प्राणं मे पाहीति षडायुष्याः १३ अग्ने यत्ते परं हृन्नामेत्यग्नेर्हृदयम् १४ यावा अयावा इति सप्तर्तव्याः

१५ या देव्यसीष्टक आयुर्दा उपशीवरी । सा मामुपशेष्व जायेव पतिमित्सदा । या देव्यसीष्टके प्राणदा अपानदा व्यानदाश्चक्षुर्दा श्रोत्रदा वाग्दा आत्मदाः पृथिविदा अन्तरिक्षदा द्यौर्दा स्वर्दाः कुमारीदाः प्रफर्विदाः प्रथमौपशदा युवतिदा उपशीवरी । सा मामुपशेष्व जायेव पतिमित्सदेति षोडशोपशीवरीः १६

इति पञ्चमी कण्डिका

अभीषाड्चाभिषवी चाभिवयाश्चोर्ध्ववयाश्च बृहद्वयाश्च सवयाश्च सह्वांश्च सहमानश्च सहस्वांश्च सहीयांश्चेति दशेन्द्रनामानि १ अग्निना विश्वाषाडिति द्वाविंशतिमिन्द्रतनूः २ प्रजापतिर्मनसान्धोऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूः ३ ज्योतिष्मतीं त्वा सादयामीति द्वादश ज्योतिष्मतीः ४ पूर्णा पश्चादिति पौर्णमासीं पुरस्तादुपधाय कृत्तिका नक्षत्रमिति नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरसंस्पृष्टाः ५ पूर्वामुपधायापरामपरामा विशाखाभ्याम् ६ दक्षिणेन स्वयमातृणां रीतिं प्रतिपादयति ७ यत्ते देवा अदधुरित्यमावास्यां पश्चादुपधायावशिष्टानां पूर्वांपूर्वामापभरणीभ्यः ८ उत्तरेण स्वयमातृणां रीतिं प्रतिपादयति ९ पौर्णमासीमन्ततः १० ऋचे त्वा रुचे त्वेति सर्वासु नक्षत्रेष्टकास्वनुषजति ११

इति षष्ठी कण्डिका

हिरण्यगर्भः समवर्तताग्र इत्यष्टौ सरितः १ विश्वकर्मा दिशां पतिरिति पञ्च हिरण्येष्टकाः प्रतिदिशमेकां मध्ये २ प्राणाय त्वा चक्षुषे त्वेति चतस्त्रः स्वयमातृणाः प्रतिदिशम् ३ अग्न आ याहि वीतये । अग्निं दूतं वृणीमहे । अग्निनाग्निः समिध्यते । अग्निर्वृत्राणि जङ्घनत् । अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशम् । देवस्य द्रविणस्यव इति पञ्चाह्नां रूपाणि ४ अथ व्रतमुपदधाति ५ प्राच्या त्वा दिशा सादयामीति पञ्चात्मेष्टकाः प्रतिदिशमेकां मध्ये ६ संयच्च प्रचेताश्चेति पञ्च वैश्वदेवीरात्मनि द्वेष्यं मनसा ध्यायन् ७ कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु । अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिरिति वामदेव्यम्

८

इति सप्तमी कण्डिका

दक्षिणत आत्मनि १ इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । ववक्षुरुग्रो अस्तृत इत्यथर्वशिरो दशातिषक्ताः २ पूर्वार्धे विद्यते शिरसो निरूहणम् । न विद्यत इत्यपरम् ३ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः । ईशानमिन्द्र तस्थुषः । न त्वावाँ अन्यो दिव्यो न पार्थिवः । न जातो न जनिष्यते अश्वायन्तो मघवन्निन्द्र वाजिनः । गव्यन्तस्त्वा हवामह इति रथंतरं दक्षिणे पक्षेऽध्यात्मन्नपवर्गः ४ प्रथमामुपधाय द्वितीयामथ विशयाम् ५ अर्धमात्मन्यर्धं पक्षे ६ त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः । त्वां काष्ठास्वर्वतः । स त्वं नश्चित्र वज्रहस्त धृष्णुया । महस्तवानो अद्रिवः । मह स्तवानो अद्रिवः । गामश्वं रथ्यमिन्द्र सं किर । सत्रा वाजं न जिग्युष इति बृहदुत्तरे पक्षे ७ तस्य रथंतरवत्कल्पः ८

इत्यष्टमी कण्डिका

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । प्रप्र वयममृतं जातवेदसं प्रियम् मित्रं न शंसिषम् । प्रियं मित्रं न शंसिषम् । ऊर्जो नपातं स हिनायमस्मयुः । दाशेम हव्यदातये । दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृधः । उत त्राता तनूनामिति यज्ञायज्ञियं पुच्छे १ तस्य रथंतरवत्कल्पः २ त्वामग्ने वृषभमित्यृषभमुपधाय संवत्सरस्य प्रतिमामिति प्राजापत्याम् ३ शतायुधाय शतवीर्यायेति पञ्चाज्यानीः प्रतिदिशमेकां मध्ये ४ इन्द्रस्य वज्रोऽसीति चतस्रो वज्रिणीः प्रतिदिशमश्मन इषुहस्त उपदधाति ५ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो न उपरिष्टादघायुरभिदासत्येतं सोऽश्मानमृच्छत्विति मध्ये पञ्चमीमेके समामनन्ति ६ पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति तिस्रो लोकेष्टकाः ७ अग्नये त्वा पवमानायाग्नये त्वा पावकायाग्नये त्वा शुचय इति तिस्रः पावमानीः ८

इति नवमी कण्डिका

ऋचा त्वा छन्दसा सादयामि वषट्कारेण त्वा छन्दसा सादयामि हिङ्कारेण त्वा छन्दसा सादयामि प्रस्तावेन त्वा छन्दसा सादयामि प्रतिहारेण त्वा छन्दसा सादयाम्युद्गीथेन त्वा छन्दसा सादयामि निधनेन त्वा छन्दसा सादयामीति सप्त च्छन्दस्याः १ अग्ने यशस्विन्निति चतस्रो राष्ट्रभृतः पुरस्तादुपधाय हिरण्येष्टकाभिः सर्वतो मुखमुपदधाति २ गायत्रीं पुरस्तादुपदधातीत्युक्तम् ३ अथैकेषाम् । गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्ये । इत्येताभिः सर्वाभिः सर्वतो मुखमुपदधाति ४ गायत्र्यादयो भवन्ति पङ्क्त्युदयनाः ५ अग्निर्मूर्धा । भुवः । जनस्य गोपाः । त्वां चित्रश्रवस्तम । अग्ने तमद्याश्वमित्येता आम्नाता भवन्ति ६ अग्न आ याहि वीतय इति चैताभिः सर्वतो मुखमुपदधाति ७ लोकंपृणाभिरित्येके ८ अत्र वा विकर्णीं स्वयमातृणां चोपदध्यात् ९ लोकंपृणादिश्चित्यन्तः १० अग्ने युक्ष्वा हि ये तव । युक्ष्वा हि देवहूतमानिति द्वाभ्यां संचितमग्निमभिमृश्य वसवस्त्वा रुद्रैः पुरस्तात्पान्त्वित्येतैर्यथालिङ्गं संचितमग्निमाज्येन प्रोक्षति । मध्य उत्तमेन प्राङ्मुखः ११

इति दशमी कण्डिका

सहस्रस्य प्रमा असीति सहस्रेण हिरण्यशल्कैरूर्ध्वस्तिष्ठन्प्रतिदिशमग्निं प्रोक्षति द्वाभ्यांद्वाभ्यां शताभ्याम् । मध्य उत्तमाभ्यां प्राङ्मुखः १ इमा मे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूर्यजमानः कुरुते २ ऐडिक्या चित्याध्वर्युरग्निमभिमृश्य शतरुद्रीयं जुहोति जर्तिलयवाग्वा गवीधुकयवाग्वा वा जर्तिलैर्गवीधुकसक्तुभिः कुसयसर्पिषाजाक्षीरेण मृगीक्षीरेण वार्कपर्णेनोदङ्तिष्ठन् । उत्तरस्य पक्षस्योत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृणायामनुपरिचारं वा ३ नमस्ते रुद्र मन्यव इत्येताननुवाकांस्त्रैधं विभज्यापि वा प्रथमादुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्यश्च व इत्युपक्रम्य नमः स्वायुधायेति नभिदघ्ने शेषेण प्रागवतानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशावतानान्हुत्वान्वारोहाञ्जुहोति ४ नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वैतानेव यजमानं वाचयित्वैतानेव वि-

परीतान्प्रत्यवरीहान्हुत्वा संचरे पशूनामर्कपर्णमुदस्यति ५ यं द्विष्यात्तस्य संचरे यस्य रुद्रः प्रजां पशून्वाभिमन्येतोदङ् परेत्य रुद्राञ्जपंश्चरेदित्ययज्ञसंयुक्तः कल्पः ६

इत्येकादशी कण्डिका

यो रुद्रो अग्नाविति रौद्रं गावीधुकं चरुम् १ एतेन यजुषा यस्यामिष्टकायां शतरुद्रीयं जुहोति तस्यां प्रतिष्ठापयति २ तिसृधन्वमयाचितं यजमानो ब्राह्मणाय दत्त्वा यत्ते रुद्र पुरो धनुरित्येतैर्यथालिङ्गमुपतिष्ठते ३ उदकुम्भमादायाध्वयुरश्मन्नूर्जमिति त्रिः प्रदक्षिणमग्निं परिषिञ्चन्पर्येति ४ निधाय कुम्भमश्मंस्ते क्षुदमु ते शुगृच्छतु यं द्विष्म इति त्रिरपरिषिञ्चन्प्रतिपर्येति ५ यद्यभिचरेदिदमहममुष्यामुष्यायणस्यायुः प्रक्षिणोमीति दक्षिणस्यामुत्तरस्यां वा स्रक्त्यां कुम्भं प्रक्षिणुयात् ६ अवका वेतसशाखां मण्डूकं च दीर्घवंशे प्रबध्य समुद्रस्य त्वावाकयेति सप्तभिरष्टाभिर्वाग्निं विकर्षति ७ विकर्षन्नेवानुगमयित्वा मण्डूकस्य प्राणान्सर्वान्संलोभ्योत्कर उदस्येति ८ यं द्विष्यात्तमेतैरुपस्पृशेत् ९ पृष्ठैरुपतिष्ठते । गायत्रेण पुरस्तात् । बृहद्रथंतराभ्यां पक्षौ । ऋतुस्थायज्ञायज्ञियेन पुच्छम् । दक्षिणस्यां श्रोण्यां वारवन्तीयेन । उत्तरस्यां वामदेव्येन १० अपिपक्षे प्रजापतेः सामानृचं गायति ११ पिता मातरिश्वेति संचितोक्थ्येन होतानुशंसति १२ होतर्यकामयमानेऽध्वर्युः स्तुतशस्त्रयोर्दोहे यजमानं वाचयति १३ स्तुतस्य स्तुतमसीत्यत्र प्रवर्ग्यमुद्वासयति १४

इति द्वादशी कण्डिका

जुह्वां पञ्चगृहीतं गृहीत्वा स्वयं कृण्वान इति द्वे १ अतिसर्गं ददतो मानवायर्जु पन्थामनुपश्यमानाः । अजुषन्त मरुतो यज्ञमेतं वृष्टिं देवानाममृतं स्वर्विदम् । आवर्तमानो भुवनस्य मध्ये प्रजा विकुर्वञ्जनयन्विरूपाः । संवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः पुरस्तात् । प्रजां ददातु परिवत्सरो नो धाता ददातु सुमनस्यमानः । बह्वीः साकं बहुधा विश्वरूपा एकव्रता मामभिसंविशन्त्विति पञ्चान्वारोहान्हुत्वापरं पञ्चगृहीतं गृहीत्वा कार्ष्णी उपानहावुपमुञ्चते । एकां वा २ चिते त्वेति दक्षिणाम् । अनु-

चिते त्वेत्युत्तराम् ३ एवं यजमानः ४ अपामिदं न्ययनम् । नमस्ते हरसे शोचिष इति द्वाभ्यामग्निमधिरोहति । पृथिवीमाक्रमिषमित्येतैर्यजमानः ५ नृषदे वडिति पञ्चभिरुत्तरवेदिवदग्निं स्वयमातृण्णां वा व्याघार्य ये देवा देवानामिति द्वाभ्यामनुपरिचारं दध्ना मधुमिश्रेण दर्भग्रमुष्टिनाग्निं व्यवोक्ष्य कूर्मपृषन्तं कृत्वा प्राणदा अपानदा इति प्रत्यवरुह्याग्निस्तिग्मेनेति द्वाभ्यामग्नये ऽनीकवत एकामाहुतिं हुत्वा ६

इति त्रयोदशी कण्डिका

षोडशगृहीतेन स्रुचं पूरयित्वा वैश्वकर्मणानि जुहोति १ य इमा विश्वा भुवनानि जुह्वत् । चक्षुषः पिता मनसा हि धीर इति नानासूक्ताभ्यां द्वे आहुती २ यं कामयेत चिरं पाप्मनो निर्मुच्येतेत्येकैकं तस्येत्युक्तम् ३ यद्येनमुदके भीर्विन्देदुदकाञ्जलिमादाय समुद्राय वयुनायेत्यप्सु जुहुयादित्ययज्ञसंयुक्तः कल्पः ४ उदेनमुत्तरां नयेत्यौदुम्बरीः समिधो घृतोषितास्तिसृभिस्तिस्र आधाय पशुबन्धवदग्निं प्रणयति ५ उदु त्वा विश्वे देवा इत्यग्निमुद्यम्य पञ्च दिशो दैवीरिति पञ्चभिर्हरत्याग्नीध्रात् ६ आशुः शिशान इति दक्षिणतो ब्रह्मा दशर्चेनान्वेति । मैत्रावरुणः प्रतिप्रस्थाता वा ७ यं कामयेत राष्ट्रं स्यादिति तमेतेन संनह्यान्वियात् । संग्रामे संयत्ते होतव्यम् । तैजनो मान्धुको वेध्मो भवतीत्ययज्ञसंयुक्तः कल्पः ८ विमान एष दिवो मध्य आस्त इति द्वाभ्यामाग्नीध्रेऽश्मानं निधायेन्द्रं विश्वा अवीवृधन्निति चतसृभिरा पुच्छाद्गत्वा ९

इति चतुर्दशी कण्डिका

प्राचीमनु प्रदिशमिति पञ्चभिरग्निमधिरुह्य नक्तोषासाग्ने सहस्राक्षेति द्वाभ्यां संहिताभ्यां दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति १ नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोति २ पयसा व्याघारयतीत्येके ३ ऊर्णावन्तं प्रथमः सीद योनिमिति होतुरभिज्ञाय पाशुकान्संभारान्न्युप्य सुपर्णोऽसि गरुत्मानिति तिसृभिः स्वयमातृण्णायामग्निं प्रतिष्ठाप्य प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति ४ दिधेम ते परमे जन्मन्नग्न इति वैकङ्कतीम् ५ तां सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् ६ चित्तिं जुहोमि ।

ग्रग्ने तमद्याश्वमिति द्वे ग्राहुती हुत्वा द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते ग्रग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति ७ तां जुह्वदिह सोऽस्त्विति दिग्भ्योऽग्निं मनसा ध्यायति ८

इति पञ्चदशी कण्डिका

ग्रा वेदिप्रोक्षात्कृत्वा वैश्वानरस्य तन्त्रं प्रक्रमयति १ वेदं कृत्वाग्निं परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते २ यथार्थं पात्रयोगः ३ निर्वपणकाले वैश्वानरं द्वादशकपालं निरुप्य सप्त मारुतान्सप्तकपालान्निर्वपति ४ तूष्णीमुपचरिता भवन्ति ५ संप्रैषकाले पत्नीवर्जं संप्रेष्यति ६ ग्राज्यग्रहनकाले ध्रुवायामेव गृह्णाति ७ प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते ८ स्तरणकालेऽपरेणाग्निं बर्हिः स्तीर्त्वा ध्रुवां स्रुवं च सादयति ९ एतावसदतामिति मन्त्रं संनमति १० वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते ११ न संप्रेष्यति न संमार्ष्टि न प्रयाजान्यजति १२ ग्राज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य कृत्स्नं वैश्वानरमवदाय द्विरभिघार्योच्चैर्वैश्वानरस्याश्रावयति १३ उपांशु मारुतान्सर्वहुताञ्जुहोति १४ ईदृङ् चान्यादृङ् चेति सप्तभिर्गुणैरासीनो हस्तेन गणेन गणमनुद्रुत्य मारुताञ्जुहोति १५ मध्येऽरण्येऽनुवाक्येन गणेनगणेन जुहोतीत्येके १६ मारुतैः सर्वतो वैश्वानरं परिचिनोतीत्येके १७ स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च क्रीडी च साकी चोर्जिषी चेत्येष षष्ठ ग्राम्नातः १८ मितासश्च संमितासश्च न इति सर्वत्रानुषजति १९

इति षोडशी कण्डिका

यदि कामयेत क्षत्रं विश ग्रोजीयः स्यादिति ग्रामेऽनुवाक्यस्य त्रीणि चत्वारि वा पदान्यनुद्रुत्यारण्येऽनुवाक्यमनुद्रुत्य ग्रामेऽनुवाक्यस्य शेषेण जुहुयात् १ एवमादितस्त्रिभिर्गणैर्हुत्वारण्येऽनुवाक्येन जुहुयात् २ यथा पूर्वैरेवं त्रिभिरुत्तरैर्गणैः ३ यदि कामयेत विट् क्षत्रादोजीयसी स्यादिति यथासमाम्नातमादितस्त्रिभिर्गणैर्हुत्वारण्येऽनुवाक्यस्य षट्सु पदान्तरालेषु षड्गणानोप्यारण्य ऽनुवाक्येन जुहुयात् ४ यथा पूर्वैरेवं त्रिभिरुत्तरैर्गणैः ५ न संप्रेष्यति न संमार्ष्टि नानूयाजान्यजति ६ यं कामयेत क्षत्रेणास्य क्षत्रं हन्यात्प्र स्वादायतनाच्च्यवेतेति तस्यारण्येऽनुवाक्येनाग्निष्ठं रथवाहनं वा व्यङ्गयेदित्ययज्ञ-

संयुक्तः कल्पः ७ अग्नाविष्णू सजोषसेति चतुर्गृहीतं हुत्वौदुम्बरीं स्रुचं व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा वाजश्च मे प्रसवश्च म इति संततां वसोर्धारां जुहोत्या मन्त्रसमापनात् ८ यं कामयेत प्राणानस्यान्नाद्यं वि छिन्द्यामिति विग्राहं तस्येत्युक्तम् ९ यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् । चतुःशरावं वौदनं पक्त्वा तद्व्यञ्जनं भोजयेत् १० प्राशितवद्भ्यश्चतस्रो धेनूर्दद्यात् ११ समुद्रादूर्मिरिति तिस्रः १२

इति सप्तदशी कण्डिका

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः । एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे । घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् । सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः । सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः । अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः । कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते । अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते । धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिमिति हुतां हूयमानां वा यजमानोऽनुमन्त्रयते १

इत्यष्टादशो कण्डिका

वाजप्रसवीयं जुहोति १ सप्त ग्राम्या ओषधयः सप्तारण्याः २ पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुव इति ग्राम्या हुत्वारण्या जुहोति ३ हुत्वाहुत्वा पात्र्यां संपातमवनयति ४ दक्षिणं प्रत्यपिपक्षमौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य त-

स्मिन्नासीनं यजमानमग्निमन्वारब्धं संपातैरभिषिञ्चति ५ व्याघ्रचर्मणि राजन्यम् । बस्ताजिने वैश्यम् । कृष्णाजिने ब्रह्मवर्चसकामम् ६ बस्ताजिने पुष्टिकाममित्येके ७ देवस्य त्वेत्यनुद्रुत्याग्नेस्त्वा साम्राज्येनाभिषिञ्चामीति ब्राह्मणम् । इन्द्रस्येति राजन्यम् । बृहस्पतेरिति वैश्यम् ८ राजन्यवैश्ययोर्मन्त्रविपर्यासमेके समामनन्ति ९ प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठञ्शीर्षतोऽभिषिच्या मुखादन्ववस्रावयति १० तदाहुर्होतव्यमेव नहि सुषुवाणः कम्चन प्रत्यवरोहतीति ११ नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा हुत्वा षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोति १२

इत्येकोनविंशी कण्डिका

ऋताषाडृतधामेति पर्यायमनुद्रुत्य तस्मै स्वाहेति प्रथमामाहुतिं जुहोति । ताभ्यः स्वाहेत्युत्तराम् १ एवमितरान्पर्यायान्विभजति २ भुवनस्य पत इति पर्यायाणां सप्तम्याहुतीनां त्रयोदशी ३ एतेन व्याख्यातम् ४ भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति । दश वा ५ उपर्याहवनीये रथशिरो धार्यमाणमभिजुहोतीत्येके ६ अभिहुतमुद्यम्याध्वर्योरावसथं हरन्ति ७ अनुनयन्ति त्रीनश्वान् । चतुरो वा ८ तान्सरथानध्वर्यवे ददाति ९ वडबा इत्येकेषाम् । वडबे इत्येकेषाम् १० समुद्रोऽसि नभस्वानित्यञ्जलिना त्रीणि वातनामानि जुहोति ११ नह्येतस्यावदानमस्तीति विज्ञायते १२ कृष्णाजिनपुटेन वातं जुहोतीत्येके १३ अग्न उदधे या त इषुर्युवा नामेति पञ्चाज्याहुतीर्हुत्वा समीची नामासि प्राची दिगिति दध्ना मधुमिश्रेण षट् सर्पाहुतीरनुपरिचारम् १४ हेतयो नाम स्थेति षण्महाहुतीर्यथा सर्पाहुतीः १५ सुवर्न घर्म स्वाहेति पञ्चार्काहुतीः १६ यास्ते अग्ने सूर्ये रुच इति तिस्रो रुचः १७ वेद्यास्तरणादि सौमिकं कर्म प्रतिपद्यते १८ यत्प्राग्धिष्णियनिवपनात्तत्कृत्वा १९

इति विंशी कण्डिका

ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियांश्चिनोति १ अश्मनवमा आग्नीध्रीय उपदधाति २ द्वादश षोडशैकविंशतिं चतुर्विंशतिं वा होत्रीये । एकादश ब्राह्मणाच्छंसीये । षण्मार्जालीये ३ अष्टा-

वष्टावन्येषु धिष्णियेषूपदधातीति विज्ञायते ४ चतुरश्राः परिमण्डला वा धिष्णियाः ५ तेषां यावत्य इष्टकास्तावतीः शर्कराः परिश्रिताः ६ तव श्रिये व्यजिहीति पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् । बृहस्पते अति यदर्यो अर्हात् । बृहस्पतिः समजयद्वसूनि महो व्रजान्गोमतो देव एषः । अपः सिषासन्त्सुवरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैरिति तिस्रो ब्रह्मसदने ७ यमो दाधार पृथिवीं यमो विश्वमिदं जगत् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् । यथा पञ्च यथा षडयथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिर्विजानते । त्रिकद्रुकेभिः पतति षड्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप् छन्दांसि सर्वा ता यम आहितेति तिस्रो मार्जालीये ८

इत्येकविंशी कण्डिका

मृडा नो रुद्रेति नो मयस्कृधि । अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः । त्वेषं वयं रुद्रं यज्ञसाधनं वङ्कुं कविमवसे नि ह्वयामहे । आरे अस्मदमतिं हेडो अस्यतु सुमतिमिद्वयमस्या वृणीमह इति तिस्रश्चात्वाले १ हव्यं प्रीणीहि हव्यं श्रीणीहि हव्यं पच हव्यं श्रपय हव्यमसि हव्याय त्वा हव्येभ्यस्त्वा हव्ये सीदेत्यष्टौ शामित्रे २ अव ते हेडः । उदुत्तमम् । तत्त्वा यामीति तिस्रोऽवभृथे ३ तासु घ्रचरन्ति ४ खण्डाः कृष्णा लक्ष्मणाश्चोत्कर उदस्यति ५ अवशिष्टाश्च भित्त्वा यत्प्राग्यूपसंमानात्तत्कृत्वैकयूपमेकादश वा यूपान्संमिनोति ६ तेषां पूर्वेद्युरग्निष्ठम् । अत्रैवेतरान् । श्वो वा ७ एकयूपे वैकादशिनानुपाकरोति ८ अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति ९ समानं तु स्विष्टकृदिडम् १०

इति द्वाविंशी कण्डिका

पुरस्तात्प्रातरनुवाकादग्निं युनज्मीति तिसृभिरभिमृशन्नग्निं युनक्ति १ यद्येनं पूर्वो भ्रातृव्योऽभीव स्यादष्टौ गायत्रीः पुरस्ताद्बहिष्पवमानादुपदध्यात् । एकादश त्रिष्टुभः पुरस्तान्माध्यंदिनात् । द्वादश जगतीः पुरस्तादार्भवात् २ यदि वापर एतद्विपरीतम् । उपरिष्टात्पवमानेभ्य उपधीयन्ते ३ पशुकाल

आग्नेयं सवनीयं पशुमुपाकरोति । एकादशिनान्वा ४ दक्षिणाकाले हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं चित्रं देवानामित्यवेद्याश्वेनावघ्राप्य ब्रह्मणे ददाति ५ अध्वर्यवे कल्याणीर्दक्षिणा ददाति ६ यद्यस्याग्निं चिनोति यज्ञायज्ञीयस्य स्तोत्र एकयाप्रस्तुतं भवति ७ अथ नमस्ते अस्तु मा मा हिंसीरिति द्वाभ्यामग्निमभिमृश्यैकादश समिष्टयजूंषि जुहोति ८ नवाध्वरिकाणि हुत्वेष्टो यज्ञो भृगुभिरिति दशमैकादशे जुहोति ९ अनूबन्ध्यावपायां हुतायामौदुम्बरीं स्रुचं घृतस्य पूरयित्वेमं स्तनमूर्जस्वन्तं धयापामित्यग्नेर्विमोकं जुहोति १० हुते सक्तुहोमे यदाकूतादिति दशाकूतीर्हुत्वा प्रत्यवरुह्य पुनर्मनः पुनरायुरागात्पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानोऽन्तस्तिष्ठत्वमृतस्य गोपा इत्युपतिष्ठते ११ येऽग्नयः पुरीष्या इति प्रयास्यन्नाप्तिभिरग्निं यजमान उपतिष्ठते १२

इति त्रयोविंशी कण्डिका

उप त्वाग्ने दिवेदिव इति तिसृभिरन्येषामग्नीन् दृष्ट्वाग्निं चित्वा सौत्रामण्या यजेत । मैत्रावरुण्या चामिक्षया १ संवत्सरं न कंचन प्रत्यवरोहेन्न च रामामुपेयात् । न पक्षिणोऽश्नीयात् २ यावज्जीवं च मस्तिष्कस्य नाश्नीयान्न च वर्षति धावेत् ३ यदि धावेदुपावर्तेत ४ न द्वितीयं चित्वान्यस्य स्त्रियमुपेयात् । न तृतीयं चित्वा कांचन । भार्यां वोपेयात् ५ अग्निं चित्वैतस्मिन्संवत्सरे यो नर्ध्नुयात्स क्रतुमाहरमाण एकचितीकं चिन्वीत ६ सलिलाय त्वेत्यष्टौ नानामन्त्रा उत्तरवेद्यामुपदध्यात् । यथार्थं लोकंपृणा अथ पुरीषम् ७ अथ यो न प्रतितिष्ठेत्स क्रतुमाहरमाण एकचितीकमेव चिन्वीत ८ संयच्च प्रवेताश्चेति पञ्च नानामन्त्रा उत्तरवेद्यामुपदध्यात् । यथार्थं लोकंपृणा अथ पुरीषम् ९ विपरीतौ कामावेके समामनन्ति १० पुनश्चितिस्त्रिष्वर्थेषु श्रूयते । श्रवणार्थे समृद्ध्यर्थे संतानार्थे वा ११ श्रवणार्थां व्याख्यास्यामः १२ यदीष्ट्या यदि पशुना यदि सोमेन यजेति योऽस्य पुराग्निस्तमन्ववसाय यजेत १३ अपि वा येनर्षय इत्यष्टौ नानामन्त्रा उत्तरवेद्यामुपदध्यात् । यथार्थं लोकंपृणा अथ पुरीषम् १४

इति चतुर्विंशी कण्डिका

अपि वोत्तरवेद्यामुपर्यग्नौ धार्यमाणे प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्युत्तरवेदिमभिमृशेत् १ अपि वा तिस्रः स्वयमातृणाः २ तासामुपधानकल्पः ३ स्वयमातृणा सामपुरीषम्। एवं विहिता द्वितीया । अपुरीषा तृतीया ४ अपि वा तिस्रः स्वयमातृणास्तिस्रश्च विश्वज्योतिषः ५ तासामुपधानकल्पः ६ स्वयमातृणा सामपुरीषमथ विश्वज्योतिः । एवं विहिता द्वितीया । तृतीयस्यां तु विश्वज्योतिः प्रथमाथ स्वयमातृणाथ सामपुरीषम् ७ अपि वाष्टौ लोकंपृणाः पुरीषम् । एकादश लोकंपृणाः पुरीषम् । द्वादश लोकंपृणाः पुरीषम् ८ अग्निं चित्वा यः सोमेन यजेत स एता एकत्रिंशतं लोकंपृणा उत्तरवेद्यामुपधाय यजेत ९ समृद्ध्यर्थायां तु द्वितीयं चिन्वानो द्वितीयस्यां चितौ येनर्षय इत्यष्टौ नानामन्त्रा उत्तरवेद्यामुपदध्यात् अष्टौ च लोकंपृणा अथ पुरीषम् १० श्वो भूत एताश्चैव नानामन्त्रा एकादश च लोकंपृणा अथ पुरीषम् ११ श्वो भूत एताश्चैव नानामन्त्रा द्वादश च लोकंपृणा अथ पुरीषम् १२ संतानार्थायां तु तृतीयं चिन्वानस्तृतीयस्यां चितौ येनर्षय इत्यष्टौ नानामन्त्रा उत्तरवेद्यामुपदध्यात् यथार्थं लोकंपृणा अथ पुरीषम् १३

इति पञ्चविंशी कण्डिका

अथो खल्वाहुर्न चेतव्येति । रुद्रो वा एष यदग्निरित्युक्तम् १ छन्दश्चितमिति काम्याः । ते शुल्बेष्वनुक्रान्ताः २ तापश्चितेऽग्नौ संवत्सरं दीक्षाः । संवत्सरमुपसदः ३ पुरस्तादुपसदामाग्नेयमष्टाकपालमिति पञ्च चतुरश्चतुरो मासानेकैकेनोपसन्मन्त्रेण जुहोति ४ अनूपसदमग्निं चिनोति ५ द्वौद्वौ मासावेकैका चितिः । चतुर उत्तमा ६ चतुस्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्रींस्त्रीन्मासान्व्रतानि ७ ऋषीणामाग्नेयेन संवत्सरमुपधान आस्ते ८ विज्ञायत एतद्वा ऋषीणामाग्नेयं यद्याज्ञसेनी चितिरिति ९ यानि वा दशतयीष्वाग्नेयानि सूक्तानि स्युस्तैरुपदध्यात् १० सूक्तपरिमाणा नानामन्त्रा इष्टकाः । यथार्थं लोकंपृणा अथ पुरीषम् ११ तृतीये संवत्सरेऽभिजिता विश्वजिता वा यजेत १२ सर्ववेदसं ददाति १३ उदवसाय रोहिणीं वत्सच्छवीं सकर्णपुच्छावच्छातां सखुरां सखुरिकां वा बहिर्लोमः परिधायोष्णीषेण प्रदक्षिणं शिरो वेष्टयित्वौदुम्बरं चमसमादत्ते । औदुम्बरीं चाभ्रीं वैण-

वीं वा कल्माषीं पूर्ववत्प्रमाणाम् १४ अरण्यौदुम्बरे तिस्रो रात्रीर्वसतो मूलफलभक्षौ । खनित्रेण वा जिवतः । मूलं म्परिखायैतस्मिन्पात्रेऽवधायान्योऽन्यमप्याददतः ह्पत्नी यजमानश्च १५ न मृन्मयेन पिबतः १६ समूहकेन खनातकेन वा यजमानो भक्षमिच्छेत । उपवीक्षायेणोपविकृन्तेन वा पत्नीत्येके १७ निषादे तिस्रो रात्रीर्वसतः । वैश्ये तिस्रः । राजन्ये तिस्रः । ब्राह्मणे वा तिस्रस्तिस्रः १८ संवत्सरं न याचेत् । न च दीयमानं प्रत्याचक्षीत १९ न चेत्संवत्सरं द्वादशाहं द्वादशाहम् २०

इति षड्विंशी कण्डिका

इति सप्तदशः प्रश्नः

शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वर्द्धिकामः १ नित्यवदेके समामनन्ति २ प्रजापतिमाप्नोति ३ तस्य षोडशिवत्कल्पः ४ सर्वः सप्तदशो भवति ५ सप्तदश दीक्षाः । तिस्र उपसदः । एकविंशीं प्रसुतः ६ त्रयोदश वा दीक्षाः । तिस्र उपसदः । सप्तदशीं प्रसुतः ७ सप्तदशारत्निर्बैल्वो यूपः खादिरो वा तूपरश्चतुरश्रो गोधूमपिष्टचषालो गोधूमकलापी वा ८ यत्प्रागुपसद्भ्यस्तस्मिन्कृते प्रतिप्रस्थाता सुरायाः कल्पेन सुरां संदधाति ९ परिस्रुद्भवति १० खरकाले प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्याधस्तात्पश्चादक्षं सुराग्रहार्थं द्वितीयं खरं करोति ११ रशनाकाले सप्तदशभिर्वासोभिर्यूपं वेष्टयति १२ पात्रसंसादनकाल ऐन्द्रमतिग्राह्यपात्रं प्रयुज्य तत्समीपे पञ्चैन्द्राण्यतिग्राह्यपात्राणि प्रयुनक्ति १३ तेषां पूर्वेण कल्पो व्याख्यातः १४ षोडशिपात्रं प्रयुज्य तत्समीपे सप्तदश प्राजापत्यानि सोमग्रहपात्राणि प्रयुनक्ति १५ तेषां षोडशिपात्रवत्कल्पः १६ अपरस्मिन्खरे प्रतिप्रस्थाता सप्तदशोपयामान्मृन्मयानि सुराग्रहपात्राणि प्रयुनक्ति १७

इति प्रथमा कण्डिका

ग्रहकाल ऐन्द्रमतिग्राह्यं गृहीत्वोपयामगृहीतोऽसि नृषदं त्वेति पञ्चैन्द्रानतिग्राह्यान्गृह्णाति १ तेषां पूर्ववत्कल्पः २ षोडशिनं गृहीत्वाया विष्ठा जनयन्कर्वराणीति सप्तदश प्राजापत्यान्सोमग्रहान्गृह्णाति ३ तेषां षोडशिवत्कल्पः ४ कुविदङ्गेत्यपरस्मिन्खरे प्रतिप्रस्थाता सप्तदशभिरुपयामैः सुराग्रहा-

न्गृह्णाति ५ विपरीते ग्रहरायावेके समामनन्ति ६ व्यतिषङ्गं सोमग्रहैः सुराग्रहान्गृह्णाति ७ पूर्वोऽध्वर्युर्गृह्णाति । जघन्यः प्रतिप्रस्थाता ८ पुरोऽक्षं सोमग्रहान्सादयति । पश्चादक्षं सुराग्रहान् ९ देव सवितः प्र सुवेति सवनादौसवनादौ जुहोति । कर्मणःकर्मणो वा पुरस्तात् १० हिरण्यमालिन ऋत्विजः सुत्येऽहनि प्रचरन्ति ११ पशुकाले त्रीन्क्रतुपशूनुपाकृत्य मारुतीं वशामुपाकरोति । सारस्वतीं च मेषीमपन्नदतीम् १२ सारस्वतं मेषमुपाकृत्य सप्तदश प्राजापत्यान्पशूनुपाकरोति श्यामांस्तूपरानेकरूपान् १३ पर्यग्निकृतानां सारस्वत्यन्तान्पूर्वानालभन्ते १४ सारस्वतप्रभृतीनुत्तरान्धारयन्ति १५ प्रतिपशु बर्हिषीत्युक्तम् १६ प्राङ् माहेन्द्रात्कृत्वा माध्यंदिनीयान्वा पुरोडाशान्निरुप्य सारस्वतस्य पशु पुरोडाशं निरुप्य बार्हस्पत्यं नैवारं सप्तदशशरावं चरुं निर्वपति । द्वादश मन्त्रेण । तूष्णीमितराणि १७ पयसि श्रपयति १८ दाक्षिणौ होमौ हुत्वा १९

इति द्वितीया कण्डिका

इन्द्रस्य वज्रोऽसीति रथमुपावहृत्याप्स्वन्तरित्यश्वानप्सु स्नापयन्ति १ अपां नपादिति रराटानि प्रतिमार्ष्टि २ वायुर्वा त्वा मनुर्वा त्वेति प्रष्टिवाहिनं रथं युनक्ति । तूष्णीमितरान्षोडश रथान् ३ दक्षिणाकाले सप्तदश रथान्ददाति । सप्तदशानांसि सप्तदशाश्वान्सप्तदश हस्तिनः सप्तदश निष्कान्सप्तदश दास्यः सप्तदशाजाः सप्तदशावीः सप्तदश वासांसि सप्तदश गवां शतानि ४ अथैकेषाम् । सप्तदश गवां शतानि ददाति । सप्तदशानांसि युक्तानि सप्तदशाश्वरथान्सप्तदश हस्तिनः सप्तदश निष्कान्सप्तदश दास्यः सप्तदश दुन्दुभीन् ५ एष आप्तो वाजपेयः ६ अथ कुरुवाजपेयः ७ वयसोवयसः सप्तदश सप्तदशानि ददाति ८ एकहायनप्रभृत्या पञ्चहायनेभ्यो वयांसि ९ अनुदिष्टासु दक्षिणासु यजुर्युक्तमध्वर्यवे ददाति १० शेषः साधारणः ११ अग्रेणाहवनीयमुदीचः प्राचो वा रथानवस्थापयन्ति १२ तेषां दक्षिणो यजुर्युक्तः १३ अग्रेणाग्नीध्रं राजपुत्रोऽवस्थाय सप्तदश प्रव्याधानिषुमस्यति १४ यत्र जघन्यं निपतति तत्रौदुम्बरीं काष्ठां लक्षणं मिनोति १५

इति तृतीया कण्डिका

प्राङ् माहेन्द्रात्कृत्वा नैवारे सर्पिरानीय चात्वालेऽवदधाति १ तं राजपुत्रो गोपायति २ चात्वाले रथाक्षाकृति काष्ठं निखाय तस्मिन्नौदुम्बरं रथचक्रं सप्तदशारं प्रतिमुञ्चति ३ उत्तरस्यां वेदिश्रोण्यां सप्तदश दुन्दुभीन्प्रबध्नन्ति ४ विष्णोः क्रमोऽसीति रथं यजमानोऽभ्यैति ५ अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति । पक्षसी वा ६ इन्द्राय वाचं वदतेति दुन्दुभीन्संह्रादयन्ति ७ देवस्याहं सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्यौदुम्बरं रथचक्रं ब्रह्मारोहति ८ तमाह वाजिनां साम गायेति ९ तस्य चक्रं त्रिः प्रदक्षिणमावर्तयति १० वर्तमाने ब्रह्मा गायति ११ देवस्याहं सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकं रुहेयमिति यजुर्युक्तं यजमान आरोहति १२ वाजसृत इतरान्रथान् १३ वाजिनो वाजजितो वाजं सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमव जिघ्रतेति नैवारमश्वौ धुर्याववघ्रापयति । सर्वान्वा १४ बृहस्पतेर्भागे नि मृड्वमिति प्रप्रोथेषु च लेपान्निमार्ष्टि १५ अश्वाजनीत्यश्वाजनीमादायाध्वर्युर्यजुर्युक्तमधिरुह्यार्वासि सप्तिरसीति तयाश्वान्समवक्षिणोति १६ अनभ्यासादयन्त इतरे रथाः पश्चादनुयान्ति १७ वाजिनो वाजं धावतेति चतसृभिर्धावतोऽनुमन्त्रयते १८ अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति १९ लक्षणं प्राप्योदञ्च आवृत्य प्रदक्षिणमावर्तयन्ते २० मितद्रव इति चतसृभिः प्रत्याधावतोऽनुमन्त्रयते २१

इति चतुर्थी कण्डिका

आ मा वाजस्य प्रसवो जगम्यादिति प्रत्यासृतेषु हुत्वा पुनर्नैवारमवघ्रापयति । ससृवांस इति लेपांश्च निमार्ष्टि १ इयं वः सा सत्या संधाभूदिति दुन्दुभिविमोचनीयं होमं जुहोति २ सेवान्वोपस्पृशति ३ कृष्णलंकृष्णलं वाजसृद्भ्यः प्रयच्छति ४ तानि प्रत्यादाय ब्रह्मणे ददाति । मधुष्ठालं च सौवर्णं शतमानस्य कृतम् ५ अत्र माहेन्द्रस्य स्तोत्रमुपाकरोति ६ अप्रस्तुते क्षत्रस्योल्बमसीति तार्प्यं यजमानः परिधत्ते ७ क्षत्रस्य योनिरसीति दर्भमयं पत्नी ८ जाय एहीति यजमानः पत्नीमामन्त्रयते ९ रोहाव हीतीतरा प्रत्याह १० त्रिरामन्त्रयते । त्रिः प्रत्याह ११ अहं नावुभयोः सुवो रोक्ष्यामीति यजमानोऽन्ततः १२ वाजश्च प्रसवश्चेति द्वादश वाजप्रसवीयान्होमान्हुत्वायुर्यज्ञेन कल्प्लतामिति दशभिः कल्पैः सरजसे निश्रेण्या यूपं यजमान आरो-

हति १३ सुवर्देवाँ अगन्मेत्यग्रं प्राप्य जपति १४ समहं प्रजया सं मया प्रजेति गृहान्प्रेक्षते १५ तमाश्वत्थैरासपुटैरूषपुटैरुभयैर्वा वैश्याः प्रतिदिश-मर्पयन्ति । महर्त्विजो वा दीर्घवंशेषु प्रबध्य १६ अन्नाय त्वेति पुरस्ताद-ध्वर्युः । अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा । वाजाय त्वेति पश्चाद्धोता । वाजजित्यायै त्वेत्युत्तरत उद्गाता १७ मुखतोऽभिघ्नन्ति १८ हन्तारंहन्तारम-भिपर्यावर्तते १९ इयं ते राण्मित्राय यन्त्राय धर्त्राय कृष्यै क्षेमाय रय्यै पोष-येति प्रत्यवरोहति २० अग्रेण यूपं बस्ताजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य २१

इति पञ्चमी कण्डिका

तस्मिञ्छतमानं हिरण्यं निधायामृतमसीति हिरण्ये दक्षिणं पादं यजमानः प्रतिष्ठापयते १ पुष्टिरसि प्रजननमसीति बस्ताजिने सव्यम् २ तस्मादास-न्दीमारोहति ३ दिवं प्रोष्ठिनीमारोह तामारुह्य प्रपश्यैकराण्मनुष्याणामि-त्यारोहन्तमभिमन्त्रयते ४ सप्तभिः सप्त पूर्वानन्नहोमाञ्जुहोति ५ माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते यथाग्निचित्यायाम् ६ माध्यंदिनस्य सवनस्य मध्यम उक्थ्यपर्याये ब्रह्मसाम्न्युपाकृतेऽत्र सारस्वतप्रभृतीनुत्तरानालभन्ते ७ तेषाम-नभिघारिताभिर्वपाभिः प्रचरति ८ सारस्वतस्य वपया प्रचर्य सन्नवदायेत रेषां वपाभिः प्रचरति ९ सारस्वतस्य पशुपुरोडाशेन प्रचर्य नैवारेण प्रचरति १० समानं तु स्विष्टकृदिडम् ११ महर्त्विजो हविरुच्छिष्टाशा भवन्ति १२ आग्नीध्रे हविःशेषान्भक्षयन्ति १३ अत्र सारस्वत्यन्तानां दैवतेन प्रचरतिसं-वादाद्येडायाः । काले वा १४ षोडशिना प्रचर्य होतृचमसमुख्यांश्चमसा-नुन्नीय बृहतः स्तोत्रमुपाकरोति १५ प्रचरणकाले होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । ऋत्विज इतरान्सोमग्रहान् १६ सुराग्रहाणां मुख्यं प्रतिप्रस्थातादत्ते । वाजसृत इतरान्सुराग्रहान् १७

इति षष्ठी कण्डिका

संपृच स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति । विपृच स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैः १ आहवनीयन्यन्ते सोमग्रहैरवतिष्ठन्ते । मार्जालीयन्यन्ते सुराग्रहैः २ प्रचरति सोमग्रहैः ३

वषट्कारानुवषट्कारौ सुराग्रहाननुप्रकम्पयन्ति ४ व्याख्यातः सोमस्य भक्षः ५ विराट्छन्दस इति भक्षमन्त्रं नमति ६ मारुत्या अवदानीयानि सोमग्रहांश्चर्त्विग्भ्य उपहरन्ति । अनवदानीयानि सुराग्रहांश्च वाजसृद्भ्यः ७ तानि दक्षिणस्यां वेदिश्रोण्यां विमाथीकृत्य भक्षयन्ति ८ ककुदो राजपुत्रो ध्रुवगोपो नैवारगोपो वा प्राश्नीयात् । सर्वं वा ककुदमुपरिष्टात्सर्वसोमेभ्यः ९ अत्र सारस्वतप्रभृतीनां दैवतेन प्रचरति १० यज्ञारण्ये प्रचरन्तीति विज्ञायते ११ तद्यत्रेष्टा अनूयाजा भवन्त्यव्यूढाः स्रुचः । तदेतैः प्रचरेयुः । तदु तथा न कुर्यात् । ह्वलति वा एतद्यज्ञो यदेवं कुर्वन्तीति १२ तस्माद्यत्रैव पूर्वेषां वपाभिश्चरेयुस्तदितरेषाम् । यत्रो हैव हविर्भिस्तद्धविर्भिः १३ संतिष्ठते वाजपेयः १४ तेनेष्ट्वा सौत्रामण्या यजेत । मैत्रावरुण्या वामिक्षया १५ यावज्जीवं न कंचन प्रत्यवरोहेत् १६ बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत १७ श्वेतच्छत्री ह भवतीति विज्ञायते १८

इति सप्तमी कण्डिका

राजा स्वर्गकामो राजसूयेन यजेत १ शतसहस्रं दक्षिणा २ अग्निष्टोमः पञ्चापवर्गः प्रथममहः ३ पञ्च सहस्राणि पवित्रे ददाति । त्रिंशतमभिषेचनीये । त्रिंशतं दशपेये । दश केशवपनीये । विंशतिं व्युष्टिद्विरात्रे । पञ्च क्षत्रस्य धृतौ ४ अपि वा चत्वार्यभिषेचनीये ५ प्रतिसाहस्राणीतराण्यहानि ६ षष्टिस्त्रीणि शतानि सहस्राणां ददातीति बह्वृचब्राह्मणं भवति ७ तथा दक्षिणा अतिनयेद्यथास्याहानि स्वकालानि स्युः ८ शेषमनुदिशति ९ श्वो भूत आनुमतादिभिरष्टाभिरन्वहं यजते १० पिंषन्नानुमतं पश्चादुत्तरतश्च व्यवशातयति ११ ये प्रत्यञ्चः शम्याया अवशीयन्ते तन्नैर्ऋतमेककपालम् १२ य उदञ्चस्तानुदङ् परेत्य वल्मीकवपामुद्धृत्येदमहममुष्यामुष्यायणस्य क्षेत्रियमवयज इति शुक्त्या वल्मीकवपायां हुत्वेदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति तयैव शुक्त्या वल्मीकवपामपिदध्यात् १३ वल्मीकवपया जुहोति वल्मीकवपयापिदधातीत्येके १४ आनुमतमासाद्य नैर्ऋतेन प्रचरति १५ वीहि स्वाहेति गार्हपत्ये हुत्वा दक्षिणाग्नेरेकोल्मुक्तं धूपायद्धरति १६ दक्षिणमपरमवान्तरदेशं गत्वा स्वकृत इरिणे प्रदरे वोपसमाधायैष ते निर्ऋते भाग इत्यङ्गुष्ठाभ्यां विस्रंसिकाकाण्डाभ्यां वा नैर्ऋतं

सर्वहुतं जुहोति १७ कृष्णं वासः कृष्णतूषं दक्षिणा १८ कृष्णं वासो भिन्नान्तमित्येके १९ अप्रतीक्षमायन्ति निर्ऋत्या अन्तर्हित्या इति विज्ञायते २०

इत्यष्टमी कण्डिका

स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये हुत्वानुमतेन प्रचरति १ धेनुर्दक्षिणा २ आदित्यं चरुमित्येताभिरन्वहमिष्ट्वा चातुर्मास्यान्यालभते ३ तैः संवत्सरं यजते ४ न शुनासीरीयं प्रतिसमस्यति ५ ततश्चतुर्हविषेन्द्रतुरीयेण यजते ६ आग्नेयमष्टाकपालमिति ७ वहिनी धेनुर्दक्षिणा ८ तया भ्रातृव्यवन्तं प्रियं वा याजयेत् ९ एतस्या एव रात्रेर्निशायां पञ्चेध्मीयेन यजते १० चतुर्धाहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पृथगिध्मानुपसमाधाय जुह्वां पञ्चगृहीतं गृहीत्वा ये देवाः पुरःसद इत्येतैर्यथालिङ्गं जुहोति । मध्ये पञ्चमेन ११ समूढं रक्ष इति मध्य इध्मानुपसमूह्यैकधोपसमाधायापरं पञ्चगृहीतं गृहीत्वाग्नये रक्षोघ्ने स्वाहेत्युत्तराः पञ्चाहुतीर्जुहोति १२ प्रष्टिवाही रथो दक्षिणा । पञ्चवाही वा १३ तेन यजेत यो रक्षोभ्यो बिभीयात्पिशाचेभ्यो वा १४ व्युष्टायां पुराग्निहोत्रादपामार्गहोमेन चरन्ति १५ अपां न्ययनादपामार्गानाहृत्य तान्सक्तून्कृत्वा दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति १६ उत्तरमपरमवान्तरदेशं गत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय देवस्य त्वेत्यनुद्रुत्य रक्षसो वधं जुहोमीति पर्णमयेन स्रुवेण जुहोति १७ हतं रक्ष इति स्रुवमनुप्रहृत्यावधिष्म रक्ष इत्युपतिष्ठते १८ यद्वस्ते तद्दक्षिणा । वरो वा १९ अप्रतीक्षमायन्ति रक्षसामन्तर्हित्या इति विज्ञायते २०

इति नवमी कण्डिका

अग्निहोत्रं हुत्वा देविकाहवींषि निर्वपति १ धात्रे पुरोडाशं द्वादशकपालमिति पञ्च २ मिथुनौ गावौ दक्षिणा ३ पशुरप्यत्रोपालम्भ्यो धात्रे । न वा ४ आग्नावैष्णवमेकादशकपालमिति त्रीणि हवींषि ५ तेषां प्रथमेन ग्रामकामो यजेत । द्वितीयेन ब्रह्मवर्चसकामः । तृतीयेन पशुकामः ६ वीरजननमित्येके ७ वैश्वानरं द्वादशकपालं निर्वपति ८ हिरण्यं दक्षिणा ९ वारुणं यवमयं सर्वतः प्रादेशमात्रं चरुम् १० अश्वोऽव्युप्तवहो दक्षिणा ११ बार्हस्पत्यं चरुमिति द्वादशान्वहं रत्निनां हवींषि १२ यस्य गृहे निर्व-

पति तत इष्टि परिवेषणं दक्षिणा च १३ भगाय चरुश्चतुर्थो वावातायै गृहे १४ विचित्तगर्भा पष्ठौही दक्षिणा १५ नैर्ऋतः सर्वतोऽङ्गुष्ठपर्वमात्रश्चरुरित्येके १६ वैष्णवं त्रिकपालं त्रयोदशं तक्षरथकारयोर्गृहे १७ सर्वायसानि दक्षिणा १८ तक्ष्णो रथकारस्य वेत्येके १९ रौद्रं गावीधुकं चरुमक्षावापस्य गृहे । गोविकर्तस्य वा २० केसरपाशाभिधानी दक्षिणा । कृपाणो वालाभिवीतः शबलो वा २१ त्रिवत्स इति विज्ञायते २२ असिर्वालावृतो वार्ध्रीवालप्रतिग्रथिता गोव्यच्छिनी बरासी दामतूषा शबलो वा वत्सतरः २३ अश्वः शोणकर्ण इत्येके २४ अध्वने स्वाहेति पालाकलस्य गृहे जुहोति २५ अनृतदूतं ब्रुवते २६ त्रयश्चर्ममया बाणवन्तो दक्षिणा । धनुर्वा वेत्रवेष्टितम् २७ यजमानस्य गृह इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रतिनिर्वपति । इन्द्रायांहोमुच एकादशकपालम् २८ ऋषभो दक्षिणा २९ निष्कः कवचमित्येके ३०

इति दशमी कण्डिका

अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादिति पुरस्तात्स्विष्टकृतोऽध्वर्युर्जपति १ स्वयमवपन्नाया अश्वत्थशाखायै मैत्रं पात्रं चतुःस्रक्तिं करोति २ श्वेतां श्वेतवत्सामामस्त्ये दृतौ दुहन्ति ३ तत्स्वयंमूर्तं संयोगेन परिवहन्ति ४ तत्स्वयंमथितमातपे विषजन्ति ५ तत्स्वयंविलीनमाज्यं भवति ६ श्वो भूतेऽभिषेचनीयस्योवथ्यस्य दीक्षाः प्रक्रमयति ७ मैत्राबार्हस्पत्या दीक्षणीया ८ स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः ९ अथैकेषाम् । अर्धं वेद्याः कुर्वन्ति । अर्धं स्वयंकृतम् । अर्धं बर्हिर्दाति । अर्धं स्वयंदिनमुपसंनह्यति । अर्धमिध्मस्य वृश्चति । अर्धं स्वयंवृक्णम् १० संलोभ्यं बर्हिः । संचार्य इध्म इत्येके ११ पात्रसंसादनकाले बार्हस्पत्यं चरुं मैत्रं च पात्रं कपालानां स्थाने प्रयुनक्ति १२ त्रिष्फलीकृतांस्तण्डुलान्विभागमन्त्रेण विविनक्ति कर्णांश्चाकर्णांश्च १३ क्षोदिष्ठांश्च स्थविष्ठांश्चेत्येके १४ ये कर्णाः स पयसि बार्हस्पत्यः १५ यदा शृतो भवत्यथैनं मैत्रेण पात्रेणापिदधाति १६ तस्मिन्स्वयंविलीनमानयति १७ पवित्रवत्याज्येऽकर्णानावपति १८ तावुत्तराधरौ करोति १९ एवं सहशृतौ भवतः २० बार्हस्पत्यमासाद्य मैत्रमासादयति २१ एवं प्रचरति २२ शितिपृष्ठो बार्ह-

स्पत्यस्य दक्षिणा । अश्वो मैत्रस्य । सा चैव श्वेता श्वेतवत्सा २३

इत्येकादशी कण्डिका

तथाभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रवर्धयति यथा संवत्सरस्य दशरात्रे शिष्टे दशपेयो भविष्यतीति १ सह सोमौ क्रीणात्यभिषेचनीयाय दशपेयाय च । सह परिवहति २ अर्धं राज्ञः पुरोहितस्य गृहे दशपेयार्थं निदधाति ३ अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति ४ समानं तु स्विष्टकृदिडम् ५ पुरस्तात्स्विष्टकृतं सविता त्वा प्रसवानां सुवतामिति ब्रह्मा यजमानस्य हस्तं गृह्णाति ६ अथैनं रत्निभ्य आवेदयत्येष वो भरता राजेति । एष वः कुरवो राजेति कौरव्यम् । एष वः पञ्चाला राजेति पाञ्चालम् । एष वः कुरुपञ्चाला राजेति वा कुरुपाञ्चालान् । एष वो जनता राजेत्यन्यान्राज्ञः ७ सोमोऽस्माकं ब्राह्मणानां राजेति ब्रह्मा जपति ८ प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां यजमानो मुखं विमृष्टे ९ विष्णोः क्रमोऽसीति त्रीन्विष्णुक्रमान्प्राचः क्रामति १० प्राङ् माहेन्द्रात्कृत्वा माध्यंदिनीयान्पुरोडाशान्निरुप्य मारुतमेकविंशतिकपालं निर्वपति । वैश्वदेवीं चामिक्षाम् ११ तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति । ईदृङ् चान्यादृङ् चेत्येताभ्याम् । मध्येऽरण्येऽनुवाक्येन १२ अभिवास्यापां ग्रहान्गृह्णाति १३ आग्नीध्रे वायव्यैर्गृह्यन्ते १४ षोडश सप्तदश वा होमा हूयन्ते १५ तावन्त एव ग्रहा गृह्यन्ते १६

इति द्वादशी कण्डिका

अर्थेति स्थेति सारस्वतीष्वप्सु हुत्वैतेनैव मन्त्रेण गृह्णाति १ एवमुत्तरैः । येन जुहोति तेन गृह्णाति २ अपां पतिरिति समुद्रियाः सैन्धवीर्वा यो वान्यः पुंनदः स्यात् ३ पुरुषे पशौ वाभ्यवेते प्रतीपमन्य ऊर्मिर्युध्यति अन्वीपमन्यः ४ वृषासीति यः प्रतीपम् । वृषसेनोऽसीति योऽन्वीपम् ५ व्रजक्षित स्थेति कूप्यानाम् ६ मरुतामोज स्थेति याः प्रतीपं गच्छन्ति । ह्रादुनीनां वा ७ प्रहावरी स्थेति या उत्स्यन्दित्वा तत्रैव प्रत्यवसिच्यन्ते ८ परिवाहिणी स्थेति परिनदीनाम् ९ सूर्यवर्चस इत्यातपति वर्ष्याणाम् १० सूर्यत्वचस इति यासु रूपाणि परिदृश्यन्ते ११ मान्दा इति स्थावराणाम्

१२ वाशा इति प्रुष्वाणाम् १३ शक्वरीरिति गोरुल्व्यानाम् १४ विश्वभृत इति पयसः १५ जनभृत इति दध्नः १६ अग्नेस्तेजस्या इति घृतस्य १७ अपामोषधीनां रस इति मधुनः १८ अपो देवीर्मधुमतीरगृह्णन्निति सर्वत्र होमे ग्रहणे चानुषजति १९ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति होमसंयुक्ते । राष्ट्रदा स्थ राष्ट्रममुष्मै दत्तेति ग्रहणसंयुक्ते २० देवीराप इति वैतसे सते ग्रहान्स-मवनीयानाधृष्टाः सीदतेत्यन्तरा होतुर्धिष्णियं ब्राह्मणाच्छंसिनश्च सादयित्वा निभृष्टमसीति तस्मिञ्छतमानं हिरण्यमवधाय शुक्रा वः शुक्रेणोत्पुनामीति तेनोत्पूय सधमादो द्युम्निनीरूर्ज एता इति चतुर्षु पात्रेषु व्यानयति । पाला-श औदुम्बर आश्वत्थे नैयग्रोधे च २१ यः सते प्रेकस्तमुदङ् परेत्य रुद्र यत्ते क्रयी परं नामेत्याग्नीध्रीये जुहोति २२

इति त्रयोदशी कण्डिका

क्षत्रस्योल्बमसीति तार्प्यं यजमानः परिधत्ते । क्षत्रस्य योनिरसीति पाण्ड-रमुष्णीषं द्वितीयम् १ श्वेतं पाण्डरमित्याचक्षते २ म् त्रीण्येके पाण्डरता-र्प्योष्णीषाणि ३ शिरसि वोष्णीषम् ४ अथैनमेकशतेन दर्भपुञ्जीलैः पव-यति । एकशतेनाङ्क्ते ५ पञ्चाशता दक्षिणमक्षि । एकपञ्चाशतोत्तरम् ६ अथैनं दध्याशयति । औदुम्बरं शष्पाणि च ७ अङ्क्तेऽभ्यङ्क्तेऽश्नाति वासः परिधत्त इत्येवमनुपूर्वाण्येके समामनन्ति ८ आग्नीध्र एतानि कर्माणि क्रि-यन्ते ९ अप उपस्पर्शयित्वाविन्नो अग्निरित्याविदो यजमानं वाचयन्बहिरु-दानीयैष वो भरता राजेत्युक्तेन्द्रस्य वज्रोऽसीति धनुर्यजमानाय प्रयच्छति १० शत्रुबाधना स्थेति त्रीन्बाणवतः ११ पात मा प्रत्यञ्चमिति प्रदीयमाना-ननुमन्त्रयते १२ पात प्राञ्चं पात प्रत्यञ्चं पातोदञ्चमिति प्रयच्छन्नध्वर्युर्जपति १३ मित्रोऽसीति दक्षिणं बाहुं यजमान उद्यच्छते । वरुणोऽसीति सव्यम् १४ एतद्वा विपरीतम् १५ हिरण्यवर्णावित्युद्यतावभिमन्त्रयते १६ अथैनं पञ्चभिर्दिशो व्यास्थापयति १७

इति चतुर्दशी कण्डिका

समिधमा तिष्ठेति । मनसा चानुप्रक्रामति १ अत्र वा मारुतं निर्वपेत् २ तं बर्हिषदं कृत्वैना व्याघ्रं परिषस्वजानाः सिंहं हिन्वन्ति महते सौभगाय । समुद्रं न सहुवं तस्थिवांसम् मर्मृज्यन्ते द्वीपिनमप्स्वन्तरिति स्फ्येन पुरोडा-

शमभिचरन्निहन्ति ३ यत्स्फ्य आश्लिष्यति यच्च प्रतिशीर्यते तद्विष्णवे शिपिविष्टाय जुहोति ४ अग्रेण प्रशास्तुर्धिष्णियं खादिरीमौदुम्बरीं वासन्दीं प्रतिष्ठाप्य सोमस्य त्विषिरसीति तस्यां शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमास्तीर्यामृतमसीति तस्मिञ्छतमानं हिरण्यं निधाय दिद्योन्मा पाहीति सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन वा यजमानस्य शीर्षन्नधि निधत्ते ५ तामारोहन्यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं पण्डकाय प्रत्यस्यति । निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापाय ६ तौ बहिर्वेदि निरस्यतः ७ अग्नये स्वाहेति षट् पार्थानि पुरस्तादभिषेकस्य जुहोति ८ पृथिव्यै स्वाहेति षड्भूतानामवृष्टीः ९ ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति १० सोमो राजेत्यभिमन्त्र्य सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति ११

इति पञ्चदशी कण्डिका

पालाशेन पुरस्तादध्वर्युः १ एवमितरे २ औदुम्बरेण दक्षिणतो ब्रह्मा । राजन्यो वा ३ आश्वत्थेन पश्चाद्वैश्यः ४ नैयग्रोधेनोत्तरतो जन्यमित्रम् ५ क्षत्राणां क्षत्रपतिरसीत्यभिषिच्यमानमभिमन्त्रयते ६ समाववृत्रन्निति ये ऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति ७ तान्पात्रैरुन्मार्ष्टि ८ इन्द्रस्य योनिरसि जनधा इति कृष्णविषाणया वासांसि विचचृते । एकं द्वे सर्वाणि वा ९ तान्युत्कर उदस्यत्यति दिवस्पाहीति १० इन्द्राय स्वाहेति षट् पार्थान्युपरिष्टादभिषेकस्य जुहोति ११ अद्भ्यः स्वाहेति षड्भूतानामवेष्टीः १२ अत्र वा प्रेरेकं जुहुयात् १३ यां भार्यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति तस्या औपासने प्रतिहितमारम्भयित्वा ये पात्रेषु लेपा व्यवसृतास्तेभ्यो नामव्यतिषञ्जनीयौ होमौ जुहुयात् प्रजापते न त्वदेतानीति १४ असावमुष्य पुत्रोऽमुष्या असौ पुत्र इति नामनी व्यतिषजति १५ नामानीत्येके १६

इति षोडशी कण्डिका

इन्द्रस्य वज्रोऽसीति रथमुपावहृत्य मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति प्रष्टिवाहिनं रथं युनक्ति १ विष्णोः क्रमोऽसीति रथं यजमानो ऽभ्येति २ यः क्षत्रियः प्रतिहितः सोऽन्वारभते ३ प्र ससाहिषे पुरुहूतेत्ये-

तयैव दक्षिणतो ब्रह्मान्वेति ४ मरुतां प्रसवे जेषमिति प्रयाति ५ सधनू राजन्यः पुरस्तादुत्तरतो वावस्थितो भवति ६ तस्मा एतानिषूनस्यत्याप्तं मन इति ७ एकैकमुत्सृज्य तं जित्वा समहमिन्द्रियेण वीर्येणेति प्रदक्षिणमावर्तते ८ यतः प्रयाति तदवतिष्ठते ९ इन्द्रस्य वज्रोऽसीति धनुरात्नर्या पत्नीमश्वांश्चोपनुदति १० एष वज्रो वाजसास्तेन नौ पुत्रो वाजं सेदिति धनुः पत्न्यै प्रयच्छति ११ पशूनां मन्युरसीति वाराही उपानहावुपमुच्य नमो मात्र इत्यवरोक्ष्यन्पृथिवीमभिमन्त्र्यावरुह्य मणीन्प्रतिमुञ्चते । इयदसीति राजतम् । ऊर्गसीत्यौदुम्बरम् । युङ्ङसीति सौवर्णम् १२ मध्ये सौवर्णमेके समामनन्ति १३ अग्नये गृहपतये स्वाहेति रथविमोचनीयान्होमान्हुत्वा हंसः शुचिषदिति सह संग्रहीत्रा रथवहने रथमत्यादधाति १४ आहिते संग्रहीतावरोहति १५

इति सप्तदशी कण्डिका

मित्रोऽसीति दक्षिणं बाहुं यजमान उपावहरते । वरुणोऽसीति सव्यम् १ एतद्वा विपरीतम् २ समहं विश्वैर्देवैरिति वैश्वदेव्यामामिक्षायां हस्तावुपावहरते ३ सदसि सन्मे भूया इति वा मैत्रावरुणीमामिक्षामेके समामनन्ति ४ अग्रेणाग्नीध्रं चतुरपस्त्रावं विमितं विमिन्वन्ति पुरस्तादुन्नतं पश्चान्निनतम् ५ स्योनासि सुषदेति तस्मिन्खादिरीमासन्दीं प्रतिष्ठाप्य क्षत्रस्य नाभिरसीति तस्यां कृत्त्यधीवासमास्तीर्यावनहनि विशि मा दृंहेत्यवनह्यति ६ स्योनामा सीद सुषदामा सीदेति तामासाद्य यजमानो मा त्वा हिंसीन्मा मा हिंसीदित्युपविशति ७ निषसाद धृतव्रत इत्यासीनमभिमन्त्रयते ८ तमृत्विजो रत्निनश्च सर्वतः पर्युपविशन्ति । पुरस्तादध्वर्युः । दक्षिणतो ब्रह्मा । पश्चाद्धोता । उत्तरत उद्गाता ९ उपविष्टेषु ब्रह्मा३नित्यध्वर्युं राजामन्त्रयते १० त्वं राजन्ब्रह्मासीतीतरः प्रत्याह ११ एवं ब्रह्माणं होतारमुद्गातारं च १२ उत्तरेणोत्तरेण मन्त्रेणेतरे प्रत्याहुः १३ इन्द्रस्य वज्रोऽसीति स्फ्यं ब्रह्मा राज्ञे प्रयच्छति । राजा प्रतिहिताय । प्रतिहितः पुरोहिताय । पुरोहितो रत्निभ्यः १४ तमवरपरं संप्रयच्छन्ति । अन्ततोऽक्षावापाय १५ तेनाक्षावापोऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेत् १६

इत्यष्टादशी कण्डिका

सौवर्णान्परःशतान्परःसहस्रान्वा १ ब्राह्मणराजन्यवैश्यशूद्राश्चत्वारस्तद्योगाः पष्ठौहीं विदीव्यन्त ओदनमुद्‌ब्रुवते २ तदेतस्य कर्मणः पूर्वावग्निवाहौ दक्षिणा ३ तौ ब्रह्मणे देयौ ४ औद्भिद्यं राज्ञ इति तेभ्यश्चतुः शतान्सौवर्णानक्षानुदुप्य विजित्य दिशोऽभ्ययं राजाभूदिति पञ्चाक्षान्राज्ञे प्रयच्छति ५ मङ्गल्यनाम्नो राजाह्वयति । सुश्लोकां३ इति संग्रहीतारम् । सुमङ्गलां३ इति भागदुघम् । सत्यराजा३निति क्षत्तारम् ६ तानाहूय चतुष्पत्क्षेत्रं ब्रह्मणे ददाति ७ त उपद्रष्टारो भवन्ति ८ अत्र वा नामव्यतिषञ्जनीयौ होमौ जुहुयात् ९ शौनःशेपमाख्यापयते । ऋचो गाथामिश्राः परःशताः परःसहस्रा वा १० हिरण्यकशिपावासीनो होता शंसति ११ हिरण्यकूर्चयोस्तिष्ठन्नध्वर्युः प्रतिगृणाति १२ ओमित्यृचः प्रतिगरः । तथेति गाथायाः १३ अपवृत्ते शौनःशेपे हिरण्यकशिपु होत्रे ददाति । हिरण्यकूर्चावध्वर्यवे । अभिषेचनीयौ च रुक्मौ १४ अत्र मारुतेन वैश्वदेव्या च प्रचरति १५ समानं तु स्विष्टकृदिडम् १६ उपहूतायामिडायामुन्मुच्य मणीन्ब्रह्मणे ददाति १७

इत्येकोनविंशी कण्डिका

माहेन्द्रस्य प्रचरणादि कर्म प्रतिपद्यते १ समानमावभृथात् २ अवभृथेन प्रचर्यापां नप्त्रे स्वाहेत्यप्सु जुहोति ३ ऊर्जो नप्त्रे स्वाहेत्यन्तरा दर्भस्तम्बे स्थाणौ वल्मीकवपायां वा हुत्वाग्नये गृहपतये स्वाहेति प्रत्येत्य गार्हपत्ये हुत्वैन्द्रीं सूतवशामनूबन्ध्यामालभते ४ तस्याः पशुपुरोडाशं नैवारं चतुष्पद्याः सूनाया निर्वपति ५ शकटप्रत्याम्नायो भवतीति विज्ञायते ६ श्वो भूतेऽपरेण सौमिकं देवयजनम् दशभिः सप्तभिर्वा संसृपां हविर्भिर्यजेत । आग्नेयमष्टाकपालमिति ७ पूर्वंपूर्वं देवयजनमध्यवस्यति ८ यत्र पूर्वस्या आहवनीयस्तत्रोत्तरस्या गार्हपत्यः ९ उत्तमायाः प्राग्वंश आहवनीयः । बहिर्गार्हपत्यह् १० तयेष्ट्वापराह्णे दशपेयस्य तन्त्रं प्रक्रमयति ११ सद्यो दीक्षयन्ति १२ सद्यः सोमं क्रीणन्ति १३ अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते १४ दशभिर्वत्सतरैः साण्डैः सोमं क्रीणाति १५ न पणते न परिवहति १६ क्रयमेवापाकरोति १७ एका दीक्षा तिस्र उपसदः

१८ पुरस्तादुपसदां सौम्यं चरुं निर्वपति । अन्तरा त्वाष्ट्रमष्टाकपालम् । उपरिष्टाद्वैष्णवं त्रिकपालम् १९ तासां तदेव प्रस्तरपरिधि यदुपसदाम् २० भार्गवो होता भवति २१ श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्नि-ष्टोमसामम् २२ सारस्वतीरपो गृह्णाति २३

इति विंशी कण्डिका

श्वो भूते पात्रसंसादनकाले दश चमसानधिकान्प्रयुनक्ति १ तानुन्नयनकाल उन्नयति २ भक्षणकाले दशदशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्त्या दशमात्पुरुषादविच्छिन्नसोमपीथाः ३ आ दशमात्पुरुषादन्वा-ख्यायं स भक्षस्य कर्ता भवति ४ शतं ब्राह्मणाः सोमपाः सदः प्रसर्पन्ति ५ दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददाति । हिरण्यस्त्रजमुद्गात्रे । रुक्मं होत्र इति यथासमाम्नातम् ६ अथैकेषाम् । वेहायमानामिवोन्नेत्रे द-दाति । ऋषभं ग्रावस्तुते । बस्तं सुब्रह्मण्याय । नेष्टुरनड्वान्देयः । अग्नीधेऽन्यः । स्थूरि यवाचितमच्छावाकायेति ७ दिशामवेष्ट्योदवस्य-ति ८ आग्नेयमष्टाकपालमिति पञ्च ९ तया ब्राह्मणो राजन्यो वैश्यो वा तेजस्कामो यजेत १० यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये कृत्वाहुतिमाहु-तिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम् ११ अपराह्णे द्विपशुना पशुबन्धेन यजेत १२ आदित्यां मल्हां गर्भिणीमाल-भते । मारुतीं पृश्निं पष्ठौहीम् १३ उच्चैरादित्याया आश्रावयति । उपां-शु मारुत्या प्रचरति १४ आश्रुतप्रत्याश्रुतान्युपांशु १५ श्वो भूते सात्यदूतानां त्रिहविषमिष्टिं निर्वपति । अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालमिति १६ तिसृधन्वं शुष्कदृतिर्दक्षिणा १७

इत्येकविंशी कण्डिका

दण्डो वाराही उपामहावित्येके १ दण्डो वा शुष्को वा दृतिर्जरदुपानहौ वा २ तान्यभ्यवस्नाप्य प्रतिराजभ्यः प्रहिणोति ३ अभ्यषिक्षि राजाभूव-मित्यावेदयते ४ अपराह्णे षड्भिः प्रयुजां हविर्भिर्यजते । आग्नेयमष्टाकपा-लमिति ५ दक्षिणो रथवाहनवाहो दक्षिणा ६ श्वो भूते षड्भिरुत्तरैः ७ उत्तरो रथवाहनवाहो दक्षिणा ८ संवत्सरमग्निहोत्रं हुत्वा केशवपनीयेना-

तिरात्रेण यजते ९ ये केशिनः प्रथमाः सत्त्रमासतेति वपनप्रवादा मन्त्राः १० तेषामादिप्रवादैरादितो वापयते । अन्तप्रवादैरन्ततः ११ अनन्तरं व्युष्टि-द्विरात्रेण यजते १२ अग्निष्टोमः पूर्वमहर्भवति । अतिरात्र उत्तरम् १३ पौर्णमास्यां पूर्वमहर्भवति । व्यष्टकायामुत्तरम् १४ अमावास्यायां वा पूर्वमहः । उद्दृष्ट उत्तरम् १५ आपूर्यमाणपक्षस्य वा ये पुण्ये अहनी स्याताम् १६ पञ्च पूर्वेऽहन्नैकादशिनानालभन्ते । षडुत्तरे १७ क्षत्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमः पञ्चापवर्गः १८ तेनान्ततो यजेत १९ संतिष्ठते राजसूयः २० तेनेष्ट्वा सौत्रामण्या यजेत मैत्रावरुण्या वामिक्षया २१ नानावभृथान्यहान्यन्यत्र द्विरात्रस्य प्रथमात्प्रथमात् २२

इति द्वाविंशी कण्डिका

इत्यष्टादशः प्रश्नः

त्र्यहे पुरस्तात्सीसेन क्लीबाच्छष्पाणि क्रीत्वा क्षौमे वासस्युपनह्य निधाय सौत्रामण्यास्तन्त्रं प्रक्रमयति १ तस्या निरूढपशुबन्धवत्कल्पः २ अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते ३ यथार्थं पात्राणि प्रयुनक्ति । स्थालीं कपालानां स्थाने ४ निर्वपणकालेऽश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे प्रभूतान्व्रीहीन्निर्वपति ५ व्याख्यातश्चरुकल्पः ६ श्रपयित्वाग्रेण गार्हपत्यमवटं खात्वा तस्मिन्सुरायाः कल्पेन सुरां संदधाति ७ परिस्रुद्भवति ८ स्वाद्वीं त्वा स्वादुनेति शष्पैः सुरां संसृजति ९ तिस्रो रात्रीः संसृष्टा वसति १० एकयूपं छिनत्ति ११ न वेदं करोति १२ पुरस्तात्कृतेनार्थान्कुरुते १३ सौमिक्या वेदितृतीये यजत इति विज्ञायते १४ उत्तरवेद्यां क्रियमाणायां प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्य दक्षिणेनोत्तरवेदिं खरं कृत्वाग्रेणान्वाहार्यपचनं सुराग्रहार्थं द्वितीयं खरं करोति १५ अग्नौ प्रणीयमाने प्रतिप्रस्थाता दक्षिणाग्नेरग्निमाहृत्य दक्षिणेनोत्तरवेदिं खरे न्युप्योपसमादधाति १६ पात्रसंसादनकालेऽश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे त्रीणि पात्राणि प्रयुनक्ति । सतं वालस्रावं श्येनपत्त्रं श्रपणानि च १७ प्राक् पशूपाकरणात्कृत्वोद्भिद्य सुरां ब्राह्मणस्य मूर्धन्खरे वा सादयित्वा पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयति १८ प्राङ् सोमो अतिद्रुत इति सोमवामिनः । प्रत्यङ् सोमो अतिद्रुत इति सोमातिपवितस्य

१९ पूतां यथायतनं सादयित्वैकयूपे पशूनुपाकरोति २०

इति प्रथमा कण्डिका

आश्विनं धूम्रमजं सारस्वतं मेषमैन्द्रमृषभं वृष्णिं वा बार्हस्पत्यम् १ चतुर्थं सोमवामिनः सोमातिपवितस्य वा २ हुतासु वपासु निष्कमृषभं सात्वरीं च वडबां ददाति ३ नष्टप्रत्यासृतां ब्रुवते ४ अनुशिशुर्वडबा दक्षिणा ५ हरितरजतौ च शतमानावित्येके ६ चात्वाले मार्जयित्वापरस्मिन्खरे सुराग्रहान्गृह्णन्ति ७ कुविदङ्गेति सर्वेषामेका पुरोरुगेका पुरोऽनुवाक्यैकः प्रैष एका याज्या ८ उपयामगृहीतोऽस्यच्छिद्रं त्वाच्छिद्रेणाश्विभ्यां जुष्टं गृह्णामीत्याश्विनमध्वर्युर्गृह्णाति । एतेनैव सरस्वत्या इति सारस्वतं प्रतिप्रस्थाताग्नीध्रो वा । इन्द्राय त्वेत्यैन्द्रं ब्रह्मा यजमानो वा ९ क्वलसक्तुभिः सिंहलोमभिश्चाश्विनं श्रीणाति । बदरसक्तुभिः शार्दूललोमभिश्च सारस्वतम् । कर्कन्धुसक्तुभिर्वृकलोमभिश्चैन्द्रम् १० तदभावे सिंहावध्वर्युर्मनसा ध्यायेत् । शार्दूलौ उप्रतिप्रस्थाता । वृकौ यजमानः ११ सर्वाञ्छ्येनपत्रेण परिमृज्यैष ते योनिरिति यथादेवतं यथायतनं सादयति १२ पयोग्रहा वा स्युः १३ पाशुकानि वाज्यानि गृहीत्वा ग्रहान्गृह्णीयुः १४ ततः पुरोडाशान्निर्वपति । बार्हस्पत्यस्य पशुपुरोडाशं निरुप्यैन्द्रमेकादशकपालमिति १५ त्रींस्तानासाद्य ग्रहैः प्रचरन्ति १६ ये गृह्णन्त्यध्वर्युः संप्रेष्यति १७ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमानां सुराम्णामनुब्रूहि । अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सोमानां सुराम्णां प्रेष्येति संप्रैषौ । सोमान्सुराम्णः प्रस्थितान्प्रेष्येति वा १८ युवं सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् । पुत्रमिव पितरावश्विनोभेन्द्रावतं कर्मणा दंसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभीष्णादिति सर्वदेवत्ये याज्यानुवाक्ये भवतः १९

इति द्वितीया कण्डिका

सोमस्याग्ने वीहीत्यनुयजति १ अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चमू इव सोमः । वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् । यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः । कीलालपे

सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नय इति हुतां हूयमानां वा यजमानोऽनुमन्त्रयते २ ब्राह्मणं परिक्रीणीयादुच्छेषनस्य पातारम् ३ नाना हि वां देवहितं सदो मितं मा संसृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीः स्वां योनिमाविशन् । यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति वा स्वयं पिबेत् ४ द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवनं समेत्यन्तरा पूर्वमपरं च केतुमिति वा वल्मीकवपायामवनयेत् ५ दक्षिणेऽग्नौ शतातृणां स्थालीं प्रबद्धां धारयति ६ तस्या बिल उदीचीनदशं पवित्रं वितत्य यन्मे मनः परागतमिति तस्मिञ्छतमानं हिरण्यं निधाय सोमप्रतीकाः पितरस्तृप्णुतेति तस्मिन्सुराशेषमानयति । सोमप्रतीकाः पितरो मदन्तां व्यशेम देवहितं यदायुः । इन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुरिति वा ७ स्रवन्तीं सौमीभिः पितृमतीभिस्तिसृभिस्तिसृभिरुत्तरोत्तराभिरुपतिष्ठन्ते ८ त्वं सोम प्रचिकित इत्येता आम्नाता भवन्ति ९ पुरस्तादध्वर्युः । दक्षिणतो ब्रह्मा । पश्चाद्धोता १० यदग्ने कव्यवाहनेति काव्यवाहनीभिर्दक्षिणेऽग्नौ शतातृणां प्रतिष्ठापयति यदि ब्राह्मणो यजते ११

इति तृतीया कण्डिका

अथ यदि राजन्यो वैश्यो वा नाद्रियेत दक्षिणमग्निं प्रणियितुम् २ स्वयमेतं सुराशेषं व्रतयन्नासीत २ बार्हस्पत्यस्य पशुपुरोडाशेन प्रचर्य पशुभिः प्रचर्य पुरोडाशैः प्रचरति ३ समानं तु स्विष्टकृदिडम् ४ अग्नीदौपयजानङ्गारानाहरेत्येतदादि पाशुकं कर्म प्रतिपद्यते ५ हृदयशूलैर्मासरेण पात्रैश्चावभृथमवयन्ति ६ मासरमृजीषकल्पेन प्रतिपादयति ७ बल्कसं मासर इत्याचक्षते ८ यस्ते देव वरुण गायत्रच्छन्दाः पाशस्तं त एतेनावयजे स्वाहेत्याश्विनपात्रमवभृथे प्रविध्यति । एतेनैव त्रिष्टुप्छन्दा इति सारस्वतस्य । जगतीछन्दा इत्यैन्द्रस्य । अनुष्टुप्छन्दा इति सतं वालस्रावं श्येनपत्रं च । पङ्क्तिच्छन्दा इति शूलान् ९ तूष्णीं प्रत्यायनम् १० तया सोमवामिनं सोमातिपवितं राजानमपरुध्यमानमपरुद्धमभिषिच्यमानमभिषिषिचानं वा याजयेत् ११ अभिचर्यमाणो यजेत । अभिचरन्नन्नाद्यकामः हृप्रजाकामः प-

शुकामो वा १२ सर्वेष्वभिषेकेष्वाम्नाता १३ तया ब्राह्मणो राजन्यो वैश्यो वा तेजस्कामो यजेत १४

इति चतुर्थी कण्डिका

अथातः कौकिलीं व्याख्यास्यामः १ तस्याः पूर्ववत्कल्पः २ निर्वपण-काल ऐन्द्रं पशुमालभते ३ ऋषभो दक्षिणा ४ आदित्यं चरुम् ५ वत्सः ६ पुरस्तादेव कालायसेन कालानुशातनेन कालेन तसरेण पक्ष्मणा व्रीहि-यवश्यामाकान्क्रीत्वा क्षौमे वासस्युपनद्धान्व्रीहींस्तोक्मानि कुर्वन्ति । य-वानीषदुपतप्तान् ७ चूर्णानि तानि दध्नोदश्विता वा संसृज्य दर्भैः परितंस्य निदधाति ८ स मासरः ९ तेषामेव स्थूलचूर्णानि संस्रावेणाभिषिक्तानि स नग्नहुः १० श्यामाकान्सक्तून्कृत्वा सुरायाः संधानकाले तोक्मैर्मासरेण नग्नहुना च सुरां संसृज्य सक्तूनां तृतीयेन परिकीर्य परीतो षिञ्चता सुतमित्ये-कस्या गोर्दुग्धेन परिषिच्यापरेण तृतीयेन परिकीर्यैतयैव द्वयोर्दुग्धेनापरेण तृतीयेन परिकीर्यैतयैव तिसृणां दुग्धेन तिस्रो रात्रीः संसृष्टा वसति ११

इति पञ्चमी कण्डिका

अवटस्थाने कारोतरमेके समामनन्ति १ बैदलश्चर्मनद्धो भवति २ तस्मि-न्बैदलं शुण्डामुखमवदधाति ३ तस्य बिलं चर्मणा परिणद्धं भवति ४ तस्मिन्यदास्रवति सा परिस्रुद्भवति ५ पात्रसंसादनकालेऽश्विभ्यां सरस्व-त्या इन्द्राय सुत्राम्णे त्रीणि पात्राणि प्रयुनक्ति ६ त्रयान्सक्तून्यवगोधूमानामु-पवाकासक्तूंश्च श्येनपत्रे वाले द्रोणे वा ७ अजाविलोम्नामध्वर्योः पवित्रं भवति । गोअश्वानां प्रतिप्रस्थातुः ८ आज्यं निरुप्याध्वर्युद्रोणे प्रभूतं पयो निर्वपति ९ मन्त्रवदित्याश्मरथ्यः । तूष्णीमित्यालेखनः १० आज्यमु-त्पूय वालेन पय उत्पुनाति ११ प्राङ् सोमो अतिद्रुत इति सोमवामिनः । प्रत्यङ् सोमो अतिद्रुत इति सोमातिपवितस्य १२ ब्रह्म क्षत्रं पवत इति सुरां प्रतिप्रस्थाता १३ पाशुकान्याज्यानि गृहीत्वाध्वर्युः पयोग्रहान्गृह्णाति १४ कुविदङ्गेति सर्वेषामेका पुरोरुगेका पुरोऽनुवाक्यैकः प्रैष एका याज्या १५

इति षष्ठी कण्डिका

उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा यवसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिस्तेजसे त्वेति सादयित्वोपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा गोधूमसक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्वीर्याय त्वेति सादयित्वोपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वोपवाकासक्तुभिः श्रीत्वा पवित्रेण परिमृज्यैष ते योनिर्बलाय त्वेति सादयित्वोत्तरैर्यथालिङ्गमुपतिष्ठते १ सुरायां वाल आनीयमानायां धारायाः प्रतिप्रस्थाता सुराग्रहान्गृह्णाति २ नाना हि वां देवहितं सदः कृतमिति सर्वेषामेका पुरोरुगेका पुरोऽनुवाक्यैकः प्रैष एका याज्या ३ उपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्मोदाय त्वेति सादयति ४ उपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयति ५ उपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्महसे त्वेति सादयति ६ सुरावच्छ्रयणानि ७ सन्नाननुवाकशेषेणाध्वर्युर्यजमानश्चोपतिष्ठते । उत्तरेण चानुवाकेन ८

इति सप्तमी कण्डिका

पूर्ववत्पशूनुपाकरोति १ बार्हस्पत्यवर्जं समानमा पर्यग्निकरणात् २ मध्यमे पर्यग्निकरणपर्याय उल्मुकैकदेशं खरे न्युप्योपसमादधाति ३ शेषेण पर्यग्नि कृत्वैतदेव पशुश्रपणार्थं प्रणयति ४ हुतासु वपासु चत्वारिंशद्वा दक्षिणा ददाति । अनुशिशुं च वडबाम् ५ अत्र वा ग्रहान्गृह्णीयुः ६ उक्तः संप्रैषः ७ सर्व आहवनीये हूयेरन्नित्याश्मरथ्यः । दक्षिणेऽग्नौ सुराग्रहा इत्यालेखनः ८ सुरावन्तमिति पयोग्रहाञ्जुहोति । यस्ते रसः संभृत इति सुराग्रहान् ९ तूष्णीमनुवषट्कृते हुत्वा यमश्विना नमुचेरित्याश्विनमध्वर्युर्भक्षयति १० यदत्र रिप्तमिति सारस्वतं प्रतिप्रस्थाताग्नीध्रश्च ११ इदं हविरित्यैन्द्रं ब्रह्मा यजमानश्च १२ व्याख्याता सुरायाः प्रतिपत्तिः १३ दक्षिणेनाहवनीयं पयःशेषं पितृपितामहप्रपितामहेभ्यो ददाति पितृभ्यः स्वधाविभ्यः स्वधा नम इति १४ पुनन्तु मा पितरः सोम्यास इत्युपतिष्ठते १५

इत्यष्टमी कण्डिका

अथाहुती जुहुतः । ये समाना इत्यध्वर्युः । ये सजाता इति प्रतिप्रस्थाता १ मनोताकाले पृथक् पात्रेषु पशूनां यूषाणि निदधाति २ पुरस्तात्स्विष्टकृतः शृङ्गशफैरुपहोमाञ्जुहोति ३ अष्टावष्टावेकैकस्य कुष्टिकाशफाः ४ आश्विनस्य यूषेण कुष्ठिकां शफं च पूरयित्वा सीसेन तन्त्रमित्यष्टर्चेन प्रतिमन्त्रं द्वाभ्यांद्वाभ्यां कुष्ठिकाशफाभ्यां जुहोति ५ उत्तमायां शृङ्गे अनुषजति ६ हुत्वाहुत्वा स्वेष्वभिषेचनपात्रेषु संपातानवनीयाहवनीये कुष्ठिकाशफान्प्रविध्यति ७ एवमुत्तरेणाष्टर्चेन सारस्वतस्य ८ सर्वेणानुवाकेनैन्द्रस्य ९ औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जविवाना १० मित्रोऽसि वरुणोऽसीति तां यजमानायतने प्रतिष्ठापयति ११ आसादनोपवेशनाभिमन्त्रणानि राजसूयवत् १२ तस्यां प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठन्नाश्विनसंपातैरभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामीति १३ एवमुत्तरेण मन्त्रेण सारस्वतस्य १४ उत्तमेनैन्द्रस्य १५

इति नवमी कण्डिका

कोऽसि कतमोऽसीति पाणी संमृश्याध्वर्युर्व्याहृतीर्जुहोति १ अत्र राजसूयवन्मङ्गल्यनाम्न आहूय शिरो मे श्रीरिति यथालिङ्गमङ्गानि संमृश्य जङ्घाभ्यां पद्भ्यामिति प्रत्यवरुह्य प्रति क्षत्रे प्रतितिष्ठामि राष्ट्र इति जपित्वा त्रया देवा इत्याहुतीर्हुत्वा लोमानि प्रयतिर्ममेति यथालिङ्गमङ्गानि संमृशते २ स्विष्टकृत्प्रभृति समानमावभृथात् ३ यद्देवा देवहेडनमित्यवभृथे पञ्चाहुतीर्जुहोतीत्याश्मरथ्यः । आहवनीये हूयेरन्नित्यालेखनः ४ अवभृथ निचङ्कुणेत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आपो द्रुपदादिवेन्मुमुचान इत्याप्लुत्योद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यस्यति ५ पशुवत्समिध उपस्थानं च ६ समाववर्त्तीत्युपस्थाय भूः स्वाहेत्याहुतिं हुत्वा पूर्ववत्पितृयज्ञः ७ इन्द्राय वयोधसे पशुमालभते ८ ऋषभो दक्षिणा ९ आदित्यं चरुम् १० धेनुः ११ विज्ञायते च । वत्सं पूर्वस्यां ददाति । मातरमुत्तरस्याम् १२ संतिष्ठते कौकिली १३ तया स्वर्गकामो यजेत १४

इति दशमी कण्डिका

सावित्रं स्वर्गकामश्चिन्वीत १ पशुबन्धे चीयते २ चेष्यमाण उपकल्पयते पञ्चाशीतिशतं हिरण्येष्टका यावदुत्तममङ्गुलिपरु तावतीः शर्करा वाभ्यक्ता-श्चतस्रः स्वयमातृण्णा अपरिमिता लोकंपृणाः ३ षड्ढोतारमित्येतदादि पाशुकं कर्म प्रतिपद्यते ४ वेदितृतीये यजत इति विज्ञायते ५ प्रागुत्तरात्परिग्राहा-त्कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्वतः परिमण्डलं रथचक्रमात्रं सावित्रं परिलिख्य समूलं हरितं दर्भस्तम्बमाहृत्य मध्येऽग्नेर्निखाय जुह्वां प-ञ्चगृहीतं गृहीत्वा सजूरब्दोऽयावभिरिति दर्भस्तम्बे पञ्चाहुतीर्हुत्वोद्धत्यावोक्ष्य व्याघारणान्तामुतरवेदिं कृत्वा लेखाया अभ्यन्तरं नव परिमण्डला लेखा-लिखित्वा सिकताभिरवकीर्य दर्भैः प्रच्छाद्य दध्ना मधुमिश्रेण शर्कराभिरिति बाह्यां लेखां संपूर्य वसति ६ हुते प्रातरग्निहोत्रे प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इति द्वाभ्यामात्मन्नग्निं गृहीत्वा यास्ते अग्ने समिध इति स्वयं-चित्याभिमृश्याग्नेर्भस्मासीति सिकता निवपति । संज्ञानमित्यूषान् ७ तान्निवपन्यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ८ सं या वः प्रियास्तनुव इत्यूषान्सिकताश्च संसृज्य चित स्थ परिचित इत्यूषान्सिकताश्च संसृज्य चित स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्या प्यायस्व समेतु त इति सिकता व्यूहति ९ न लेखाः संलोभयन्ति १० अभ्यन्तरं जघनार्ध उदपात्रमुपदधाति वाक्त्वा समुद्र उपदधे सुप्रजाविनं रायस्पोषवनिं मह्यं वाजिनायेति ११

इत्येकादशी कण्डिका

नवम्यां बाह्यायां लेखायां पञ्चदश पूर्वपक्षस्याहान्युपदधाति संज्ञानं विज्ञा-नमिति १ तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मूहूर्तानुपदधाति चित्रः केतुरि-ति २ अथान्तरस्यां पञ्चदश पुर्वपक्षस्य रात्रीरुपदधाति दर्शा दृष्टेति ३ तासामन्तरालेष्वेंतासां रात्रीणां पञ्चदश मुहूर्तानुपदधाति दाता प्रदातेति ४ अथान्तरस्यां पञ्चदशापरपक्षस्याहान्युपदधाति प्रस्तुतं विष्टुतमिति ५ तेषा-मन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति सविता प्रसवितेति ६ अ-

थान्तरस्यां पञ्चदशापरपक्षस्य रात्रीरुपदधाति सुता सुन्वतीति ७ तासाम–न्तरालेष्वेतासां रात्रीणां पञ्चदश मुहूर्तानुपदधात्यभिशास्तानुमन्तेति ८ अ–थान्तरस्यां द्वादश पूर्वपक्षानुपदधाति पवित्रं पवयिष्यन्निति ९ अथान्तरस्यां द्वादशापरपक्षानुपदधाति सहस्वान्सहीयानिति १० अथान्तरस्यां त्रयोदश मासनामान्युपदधात्यरुणोऽरुणरजा इति ११ अथ सिकता उपदधात्येजत्का जोवत्का इति १२ अथान्तरस्यां पञ्चदश मुहूर्तानुपदधातीदानीं तदानीमिति १३ अथान्तरस्यां षडयज्ञक्रतूंस्त्रीणि चतुर्नामान्युपदधात्यग्निष्टोम उक्थ्यो ऽग्निर्ऋतुरिति १४ अथ नाभ्यां चत्वारि संवत्सरनामान्युपदधाति प्रजापतिः संवत्सरो महान्क इति १५ चतस्त्रः स्वयमातृणा दिक्षूपदधाति भूरग्निं च पृथिवीं च मां चेति १६ लोकं पृणेति लोकंपृणा उपदधाति १७ चात्वा–लात्पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्यर्चा चितावनुव्यूहति १८ सा चि–तिर्भवति १९ आरोहणं जपति अवरोहणं जपति २० उपस्थानेनोपतिष्ठते त्वमेव त्वां वेत्थ योऽसि सोऽसीति २१ साहस्रवत्करोति २२ धेनूः कृ–त्वा यजमानः संहारविहाराभ्यामुपतिष्ठते संवत्सरोऽसि परिवत्सरोऽसीति २३ उत्तरत उत्तमायामिष्टकायामर्कपर्णेनाजाक्षीरं जुहोति २४ त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपमसंचरे पशूनामर्कपर्ण उदस्यति वल्मीकवपायां वा–वदधाति २५ जघनेनाग्निं प्राङ्मुख उपविश्य संचितोक्थ्येन होतानुशंसति भूर्भुवः स्वरित्यनुवाकेन २६

इति द्वादशी कण्डिका

अग्निप्रणयनादि पाशुकं कर्म प्रतिपद्यते समानमातिमुक्तिभ्यः १ अतिमुक्ती–र्हुत्वा चतुर्गृहीतं जुहोति २ त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम् । अपरं चतुर्गृहीतम् ३ अग्नाविष्णू इति वसोर्धारायाः । अपरं चतुर्गृहीतम् ४ अन्नपत इत्यन्नहोमः । अपरं चतुर्गृहीतम् ५ सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः ६ अपरं चतुर्गृहीतं वसूनां त्वाधीतेन रुद्राणामूर्म्यादि–त्यानां तेजसा विश्वेषां देवानां क्रतुना मरुतामेम्ना जुहोमि स्वाहेति ७ ता–सां संस्रावेण यजमानो मुखं विमृष्टे राज्ञी विराज्ञीत्यनुवाकेन ८ अथैक–विंशतिमाहुतीर्जुहोत्यसवे स्वाहा वसवे स्वाहेत्यनुवाकेन प्रतिमन्त्रम् ९ बर्हिषः संभरणादि पाशुकं कर्म प्रतिपद्यते समानमा वपाया होमात् १०

हुतायां वपायामन्विष्टकं पष्ठौहीर्दक्षिणा ददाति ११ यद्येतावतीर्दक्षिणा नोत्सहेत मन्थानेतावतः पाययेद्ब्राह्मणान् । ओदनान्वाशयेत् १२ तेनो हैवास्य स काम उपाप्तो भवति १३ पष्ठौहीं त्वन्तर्वतीं दद्याद्धिरण्यं वासश्च १४ यत्प्राङ् मनोतायास्तत्कृत्वौदुम्बर पात्रेण यूष्णो मृत्यवे ग्रहं गृह्णाति १५ विपश्चिते पवमानायेति ग्रहणसादनौ १६ नाचिकेत एव मृत्युग्रहः स्यादित्यपरम् १७ तस्य स्विष्टकृतमनु होमः १८ होष्यन्नप उपस्पृशेद्विद्युदसि विद्य मे पाप्मानमिति १९ अथ जुहोत्यप मृत्युमप क्षुधमिति २० अथ हुत्वोपस्पृशेद्वृष्टिरसि वृश्च मे पाप्मानमिति २१ तस्येडामनु भक्षः २२ भक्षयति भक्षोऽस्यमृतभक्ष इति २३ भक्षयित्वा प्राणनिहवानात्मन्प्रतिष्ठापयते मन्द्राभिभूतिरित्यनुवाकशेषेण २४ समानमत ऊर्ध्वं पाशुकं कर्म २५ संतिष्ठते सावित्रः २६

इति त्रयोदशी कण्डिका

एतेन नाचिकेतो व्याख्यातः १ नात्र लेखा भवन्ति २ एकविंशतिर्हिरण्येष्टकाः शर्करा वाभ्यक्ता उपधानकाले नाभ्यामेवोपधीयन्ते चतुरश्रं परिमण्डलं वा लोकोऽसि स्वर्गोऽसीत्यनुवाकेन प्रतिमन्त्रम् ३ तं हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वत इति ब्राह्मणव्याख्याता विकाराः ४ताननुक्रमिष्यामः ५ पशुबन्धे सोमे सत्त्रे सहस्रे सर्ववेदसे वा यत्र वा भूयिष्ठा आहुतयो हूयेरंस्तत्र चेतव्यः ६ सत्त्रे प्रतिष्ठामीप्सन्यशः प्रजां पशून्स्वर्गमृद्धिमीप्सन्यथावकाशं यथासमाम्नातम् ७ सर्वत्र पुरस्तादुपक्रमः प्रदक्षिणमुत्तरतोऽपवर्गः ८ पशुकामः पाङ्क्तमेव चिन्वीत । पञ्चपञ्च प्रतिदिशमेकां मध्ये ९ ज्यैष्ठ्यमीप्सन्यशः प्रजां वा त्रिवृतमेव । सप्त पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्ये १० ज्यैष्ठ्यकामो मध्यात्प्रक्रम्योर्ध्वां रीतिं प्रतिपादयेत् ११ स्वर्गकामः पश्चात्प्रक्रम्य प्राचीं रीतिं प्रतिपादयेत् १२ स यदीच्छेत्तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति प्राग्दक्षिणेभ्यः प्राङा होतुर्धिष्ण्यादुत्सर्पेद्येयं प्रागाद्यशस्वती सा मा प्रोर्णोतु तेजसा यशसा ब्रह्मवर्चसेनेति १३ अथ यदीच्छेद्भूयिष्ठं मे श्रद्दधीरन्भूयिष्ठा दक्षिणा नयेयुरिति दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति १४ प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात् १५ स्वयमातृणादि

समानमुत्तरम् १६ संतिष्ठते नाचिकेतः १७ एतेन चातुर्होत्रो व्याख्यातः १८ यावत्पदं हिरण्येष्टकाः शर्करा वाभ्यक्ताः १९ उपधानकालेऽग्रेण द-र्भस्तम्बं दशहोतारं प्रतिमन्त्रमुदञ्चमुपदधाति । हृदयं ग्रहं चत्वारि पदानि संभाराणां द्वे पत्नीनाम् २० एवं दक्षिणतः प्राञ्चं चतुर्होतारम् २१ पश्चादुदञ्चं पञ्चहोतारम् २२ उत्तरतः प्राञ्चं षड्ढोतारम् २३ उपरिष्टात्प्राञ्चं सप्तहोतारम् २४ पञ्चात्र पदानि संभाराणामवशिष्टानि च पत्नीनाम् २५ स्वयमातृण्णादि समानमुत्तरम् २६ संतिष्ठते चातुर्होत्रः २७

इति चतुर्दशी कण्डिका

एतेन वैश्वसृजो व्याख्यातः १ यावन्मन्त्रं हिरण्येष्टकाः शर्करा वाभ्यक्ताः २ उपधानकालेऽग्रेणोत्तरनाभिं यच्चामृतं यच्च मर्त्यमित्येतैस्त्रिभिरनुवाकैर-भिदक्षिणमग्निं परिचिनोति ३ तिस्रो वा चितयस्त्रिभिरनुवाकैः ४ स्वय-मातृण्णादि समानमुत्तरमन्यत्रानुशंसनात् ५ ऋचां प्राची महती दिगुच्यत इत्यनेनानुवाकेनानुशंसति ६ रात्रिसत्त्रेषु शतरात्रान्तेषु समहाव्रतेषु त्रिषु च सारस्वतेषु सत्त्रेषु काठकचातुर्मास्येषु साध्यानां षडहवर्जितेषु विश्वसृजा-मयने प्रजापतेः सहस्रसंवत्सरयोश्च वैश्वसृजोऽग्निर्नियतः ७ अभिप्रयायं चे-दभिचिनुयुरुत्तरवेदिदेशमेतैर्मन्त्रैरभिमृशेत् ८ योऽस्य सुप्रियः सुविचित इव स्यात्तस्मै वैश्वसृजम् । तृतीये वा पर्याये ९ सावित्रनाचिकेतचातुर्होत्रवै-श्वसृजारुणकेतुकान्समस्यन्सौम्येऽप्यध्वरे चिन्वीत १० सावित्रः प्रथमा चितिः । लोकंपृणा द्वितीया । नाचिकेतस्तृतीया । लोकंपृणा चतुर्थी । चातुर्होत्रः पञ्चमी । वैश्वसृजः षष्ठी । आरुणकेतुकः सप्तमी ११ सवनी-ययूष्णो मृत्यवे ग्रहं गृह्णाति १२ य एतानग्नीन्पृथक् समासेन वा चिन्वान उभयीर्दक्षिणा ददाति क्रतुदक्षिणा यथासमाम्नातमग्निदक्षिणाश्चेति १३ अत्र पृथगप्रयुज्य न समस्यन्ते १४ अग्निं चित्वा सौत्रामण्या यजेत । मैत्राव-रुण्या वामिक्षया १५ आरुणकेतुको ब्राह्मणव्याख्यातः १६ दिवः श्येनी-भिरन्वहं स्वर्गकामो यजेत । अपाद्याभिश्च १७ ता ब्राह्मणव्याख्याताः १८

इति पञ्चदशी कण्डिका

काम्यैः पशुभिरमावास्यायां पौर्णमास्यां वा यजेत १ तेषां निरूढपशुबन्ध-

वत्कल्पः २ वायव्यं श्वेतमिति ते ब्राह्मणव्याख्याताः ३ तेषामावापिकेषु स्थानेषु यथादेवतं षड्चो निदधाति । वपायाः पुरोडाशस्य हविष इति द्वेद्वे ४ पीवोऽन्नां रयिवृधः सुमेधा इत्येतानि यथापूर्वं यथालिङ्गमाम्नातानि भवन्ति ५ सर्वेष्वाभिचरणिकेषु लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति मल्हा इति ६ मणिला इत्यर्थः ७ विषम आलभेतेति विषमं दैवते मीमांसा ९ आदित्या स्यात्प्राजापत्या वैकादशिनदेवता वा यद्देवता वा गर्भिणयः १० पर्यारिणीति परिहारसूर्भवति ११ स्फ्यो यूप इति स्फ्याकृतियूप अग्न्यागारिको वा १२ त्वाष्ट्रं वडबमिति यं पुमांसं सन्तमारोहति १३ अपां चौषधीनां च संधाविति प्रावृषि शरत्प्रतिपत्तौ वा । अपि वापां चौषधीनां च संधौ १४ विशाखो यूप इति यदूर्ध्वं रशनायास्तद्विशाखम् । यद्वोपरादुभे शाखे अष्टाश्री सचषाले स्याताम् १५ प्राश्टृङ्गोऽवाश्टृङ्ग उन्ना वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान्पुनरुत्सृष्टो गोमृग इति गव्याः १६ अन्नाय वेहतमालभते । वाचे वेहतम् । श्रद्धायै वेहतम् । ब्रह्मण ऋषभम् १७ आ गावो अग्मन्नित्युपहोमाः १८ मृत्यवे वेहतम् १९ तत्र भर्तारमुपजुहुयात् २० सूर्याचन्द्रमोभ्यां यमौ श्वेतं कृष्णं चैकयूपे २१ अद्भ्यो वेहतम् २२ तत्र सलिलमुपजुहुयात् २३ भगाय वाशितामिति २४ य ऊर्ध्वमाश्विनात्पशवस्तेषां सूक्तक्रमेण विधिः २५

इति षोडशी कण्डिका

ऋषभे गोषु जीर्णे यूनः कर्णमाजपेत्पिशङ्गरूपस्तन्नस्तुरीपमित्येताभ्याम् १ अथैनं गोष्वपिसृजत्येतं युवानमिति २ अथ जीर्णमालभते प्राजापत्यमैन्द्रं त्वाष्ट्रं वा ३ नमो महिम्न इत्युपाकरणेऽनुवर्तयते ४ तृतीयया वपां जुहोति । चतुर्थ्या हविः । पञ्चम्या सौविष्टकृतम् ५ आग्नेयमष्टाकपालं निरुप्याजां वशामालभते ६ वायव्यामालभेत भूतिकाम इत्युक्तानि दैवतानि ७ वायव्ययोपाकरोत्या वायो भूष शुचिपा इति ८ आकूत्यै त्वा कामाय त्वेति पर्यग्नौ क्रियमाणे जुहोति ९ त्वं तुरीया वशिनी वशासीत्युदीचीं नीयमानामनुमन्त्रयते १० अजासि रयिष्ठेति निहन्यमानाम् ११ तन्तुं तन्वन्निति वपां जुहोति १२ अनुल्बणं वयत जोगुवामप इति हविः १३ मनसो हविरसीति हविःशेषान्प्राश्नन्ति १४ सा वा एषा त्रयाणामेवावरुद्धेत्युक्तम्

१५ तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो भवति १६ यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत्सर्वां वा यजमान एवान्वहं प्राश्नीयात् १७ जयाभ्याताना राष्ट्रभृत इति ब्राह्मणव्याख्याताः १८ अस्मिन्ब्रह्मन्नित्यभ्यातानेष्वनुषजति १९ येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणेति विज्ञायते २०

इति सप्तदशी कण्डिका

काम्याभिरिष्टिभिरमावास्यायां पौर्णमास्यां वा यजेत १ ता ब्राह्मणव्याख्याताः २ समिध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपाजवत्यौ धाय्ये दधाति । यथादिष्टं वानुपदावाज्यभागौ ३ यत्कामेष्टिस्तत्प्रवादौ स्यातां तदर्थत्वात्तल्लिङ्गत्वात् । तद्देवतौ वा । प्राकृतौ वा ४ अनादेशे प्रकृतिः प्रत्येतव्या ५ अनुष्टुभौ संयाज्ये ६ त्वां चित्रश्रवस्तम । त्वामग्ने हविष्मन्तो देवं मर्तास ईडते । मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषगित्येते आम्नाते भवतः ७ उभा वामिन्द्राग्नी आहुवध्या इत्येतासां यथापूर्वमाम्नाता याज्यानुवाक्या लिङ्गैर्नियम्यन्ते ८ पूर्वस्मिन्नर्धर्चे देवता पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या । उपरिष्टाल्लक्ष्मा याज्या ९ एतद्वा विपरीतम् १० अवशिष्टा विकल्पार्थाः ११ उपहोमा वा तत्र संदिग्धाः १२ अनुक्रमिष्यामः १३ अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालममावास्यायां निशायां निर्वपेत्तस्याः साद्गुण्यसामर्थ्यात् १४ अमावास्यायाः कालापनयः स्यात् १५ कृणुष्व पाज इति रक्षोघ्नीः पराचीः सामिधेनीरन्वाह १६ वि ज्योतिषेति याज्यानुवाक्ये भवतः १७

इत्यष्टादशी कण्डिका

आदित्यं चरुं निर्वपेत्संग्राममुपप्रयास्यन् १ वैश्वानरं द्वादशकपालं निर्वपेत्संग्रामायतनं गत्वा २ यया रज्ज्वोत्तमां गामाजेत्तया भ्रातृव्यगवीमभिदध्याद्गोष्ठे वास्य न्यस्येत् ३ बल्बजानपीध्मे संनह्येत् ४ तान्सहेध्मेन प्रोक्षेत् ५ सरस्वत्याज्यभागेत्याज्यहविर्भवति ६ आज्यं प्रोक्षणमाज्येन मार्जयन्त इति सर्वप्रोक्षणमार्जनानीत्याज्येन ७ मानवी ऋचौ धाय्ये कुर्यात् । मक्षू देववत इत्येतासां द्वे ८ एतामेव निर्वपेदायतनं गत्वा ९ भ्रातृव्यक्षेत्रं ग-

त्वैतामिष्टिं निर्वपेत् १० तत्र दक्षिणमर्धं वेद्या उद्धत्य तदेवार्धेन बर्हिष स्तृणीयात् । अर्धमिध्मस्याभ्यादध्यात् ११ ऐन्द्रमेकादशकपालं निर्वपे-न्मारुतं सप्तकपालं ग्रामकामः १२ आहवनीय ऐन्द्रमधिश्रयति । गार्हपत्ये मारुतम् १३ काल ऐन्द्रमासादयति । सामिधेनीष्वनूच्यमानासु मारुतम् १४ अथ यत्रेन्द्रायानुब्रूहीत्यैन्द्री पुरोऽनुवाक्या । मरुतो यजेति मारुती या-ज्या । मरुद्भ्योऽनुब्रूहीति मारुती पुरोऽनुवाक्या । इन्द्रं यजेत्यैन्द्री याज्या १५ ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकामः १६ तत्रै-न्द्रस्य प्रथममवदानमवदायोभे वैश्वदेवस्यावद्येत् । अथैन्द्रस्यावशिष्टमुप-रिष्टात् १७ इन्द्राय विश्वेभ्यो देवेभ्योऽनुब्रूहीन्द्रं विश्वान्देवान्यजेति संप्रेष्यति १८ भरेष्विन्द्रमिति याज्यानुवाक्ये भवतः १९

इत्येकोनविंशी कण्डिका

उपाधाय्यपूर्वयं वासो दक्षिणा १ चित्रान्तमित्यर्थः २ संज्ञानीं पृथङ्नि-रुप्य सर्वतः समवदाय सर्वा देवता अनुद्रुत्य संप्रेष्यति ३ अग्निः प्रथमो वसुभिरिति सर्वदेवत्ये याज्यानुवाक्ये भवतः ४ अपरुद्धोऽपरुध्यमानो वा धारयद्वतीयं निरुप्यासीत यावदेनं नापरुन्ध्युः ५ अथापरुध्यमानोऽदिते ऽनुमन्यस्वेत्यपरोद्धुः पदमादाय गच्छेत् ६ यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेत् ७ शुक्लांश्च कृष्णांश्च विचिनुयात् ८ ये शुक्लाः स्यु-स्तमादित्यं चरुं निर्वपेत् ९ ये कृष्णास्तान्कृष्णाजिन उपनह्य निधाय हवि-ष्कृता वाचं विसृज्योप प्रेत मरुतः सुदानव इति यजमानमभ्यैति १० स-त्याशीरिति यजमानस्योत्तरे वाससि पदैकदेशं निवपति ११ इह मन इ-त्युरसि शेषं निनयति १२ सिद्धमिष्टिः संतिष्ठते १३ यदि नावगच्छेदि-ममहमादित्येभ्यो भागं निर्वपाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्यपरोद्धुर्नाम गृह्णीयात्तस्यै च विशः १४ यदि नावगच्छेदाश्वत्थान्मयूखान्सप्त मध्यमेषा-यामुपहन्यादिदमहमादित्यान्बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरिति । त्रीन्प्राचश्चतुर उदीचः १५ यदि नावगच्छेदेतमेवादित्यं चरुं निर्वपेत् १६ इध्मेऽपि मयूखान्संनह्येत् १७ तान्सहेध्मेनाभ्यादध्यात् १८ अवगतः कृ-ष्णानां व्रीहीणां वारुणं चरुं निर्वपति १९ सिद्धमिष्टिः संतिष्ठते २०

इति विंशी कण्डिका

प्राजापत्यां शतकृष्णलां निर्वपेदायुष्कामः १ शतं हिरण्यकृष्णलानि का-
किण्या माषेण वा संमितानि २ तानि पवित्रवत्याज्य आवपति ३ धर्म-
मात्रं श्रपणम् ४ प्रचरणकालेऽष्टौ देवताया अवद्यति । चत्वारि स्विष्ट-
कृति । द्वे प्राशित्रेष्टाविडायाम् ५ चतुर्धाकरनकाले सर्वाणि प्राशित्रे स-
मोप्यैकधा ब्रह्मण उपहरति ६ तानि ब्रह्मा भक्षयति ७ भक्षापनय इतरे-
षाम् ८ सौर्यं चरुं रुक्माभ्यां परिगृह्यासादयति ९ तस्य प्रयाजेप्रयाजे कृ-
ष्णलं जुहोति १० अपोह्य रुक्मौ चरुणा प्रचरति ११ एतावेव रुक्मौ दक्षि-
णा १२ अग्नये दात्रे पुरोडाशमष्टाकपालमिति त्रीणि १३ तेषां प्राजापत्यं
संसृष्टहविस्तृतीयं भवति १४ दधि मधु घृतमापो धानास्तण्डुला इत्येके
षामाज्यविकारः १५ मधूदके संसृष्टे मुख्ये स्वाधर्म्यम् १६ घृतं न पूतमुभे
सुश्चन्द्रेति याज्यानुवाक्ये भवतः १७ आग्नेयस्य च सौम्यस्य चैन्द्रे समा-
श्लेषयेदिति संहितानि हवींष्यधिश्रयेदित्यर्थः १८ लेपौ वास्मिन्समाश्ले-
षयेत् १९ ब्रह्मन्विशं विनाशयेयमिति सर्वं ब्राह्मणस्पत्यं भवति २० मा-
रुती याज्यानुवाक्ये कुर्यात् २१ अथैतं त्रिधातुमेकादशसूत्तानेषु कपालेष्व-
धिश्रयति २२

इत्येकविंशी कण्डिका

प्रथमं पुरोडाशमधिश्रित्य परितपनान्तं कृत्वा तस्मिन्नुत्तरं ज्यायांसमधिश्रित्य
तदन्तमेव कृत्वा तस्मिन्नुत्तरं ज्यायांसमधिश्रयति १ प्रचरणकाले दक्षिणा-
र्धात्प्रथमां देवतां यजेत् । मध्याद्द्वितीयाम् । उत्तरार्धात्तृतीयाम् २
सर्वेषामभिगमयन्नवद्यतीत्युक्तम् ३ प्राच्यां दिशि त्वमिन्द्रेति तिस्र ऋचो
व्यत्यासमन्वाह ४ प्रथमामनूच्य मध्यमया यजेत् । मध्यमामनूच्योत्तम-
या यजेत् । उत्तमामनूच्य प्रथमया यजेत् ५ एवं सर्वा याज्याः पुरोऽनु-
वाक्याश्च भवन्ति ६ सर्वपृष्ठां निर्वपति ७ यदिन्द्राय राथंतरायेति यथा-
समाम्नातं द्वादशसूत्तानेषु कपालेष्वधिश्रयति ८ प्रचरणकाले पूर्वार्धात्प्रथ-
मां देवतां यजति ९ एवमितराः प्रदक्षिणमुत्तरापवर्गम् १० समन्तं पर्यव-
द्यतीत्युक्तम् ११ अभि त्वा शूर नोनुम इति षड्चो व्यत्यासमन्वाह १२ न
बृहत्या वषट्कुर्यात् १३ अनुवाक्यायाश्चत्वार्यक्षराणि याज्यां गमयेत् १४

अनुष्टुभं च ह वा एतत्संपादयन्ति पङ्क्तिं चेति ते मन्यामहे १५ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः सुवर्दृशमीशानमोमि-त्यनूच्य न्द्र तस्थुष स्त्वामिद्धि हवामह इति यजेत् १६

इति द्वाविंशी कण्डिका

त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नर-स्त्वां काष्ठोमित्यनूच्य स्वर्वतोऽभि त्वा शूर नोनुम इति यजेत् १ कदा चन स्तरीरसीत्यासां चतुर्थीं दधाति २ अग्नये भ्राजस्वते पुरोडाशमष्टाकपाल-मित्युक्तम् ३ चतुर्धाकरणकाले सौर्यांस्त्रीन्पिण्डानुद्धृत्योदु त्यं जातवेदसं सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान्यजमानाय प्र-यच्छति ४ तान्यजमानः प्राश्नाति ५ वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्राम-कामः ६ नवनीते श्रपयति ७ ध्रुवोऽसीत्येतैः प्रतिमन्त्रं परिधीन्परिदधाति ८ आमनमसीत्युपहोमाः ९ यो ज्योगामयावी स्याद्यो वा कामयेत सर्व-मायुरियामिति तस्मा एतामिष्टिं निर्वपेत् । आग्नेयादीनि पञ्च १० पात्रसं-सादनकाले खादिरं पात्रं चतुःस्रक्ति प्रयुनक्ति । सौवर्नं च प्रवर्तं शतमान-स्य कृतम् ११ अथो खलु यावतीः समा एष्यन्मन्येत तावन्मानं स्यात् १२ यन्नवमैत्तन्नवनीतमभवदित्याज्यमवेक्ष्याज्यग्रहणकाले तूष्णीं खादिरे चतुर्गृ-हीतं गृहीत्वा सादनकाल उत्तरेण ध्रुवां खादिरं सादयित्वा तस्मिन्प्रवर्तम-वदधाति १३

इति त्रयोविंशी कण्डिका

उपहोमकालेऽश्विनोः प्राणोऽसीत्येतैः प्रतिमन्त्रं चतुर उपहोमाञ्जुहोति १ हु-त्वाहुत्वा प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीति २ यत्खादिर आज्यं तदग्रेणाहवनीयं पर्याहृत्य दक्षिणस्यां वेदिश्रोण्यां सादयति ३ तद्यजमानोऽवेक्षते घृतस्य धाराममृतस्य पन्थामिति ४ अथास्य ब्रह्मा दक्षिणं हस्तं गृह्णाति ५ ब्रह्मण इतर ऋत्विजो हस्तमन्वारभ्य यजमानं प-र्याहुः पावमानेन त्वा स्तोमेनेति ६ अथ यजमानो हिरण्याद्धृतं निष्पिबति ७ इममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते ८ उद्धृत्य हिरण्यं प्रक्षाल्यायुष्टे विश्वतो दधदिति यजमानाय प्रयच्छति ९ तद्यजमान आचम्य

प्रतिगृह्य प्रदक्षिणं दक्षिणे कर्ण आबध्नात्यायुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसि सर्वं म आयुर्भूयात्सर्वमायुर्गेषमिति १० अग्निरायुष्मानित्यनुवाकशेषेणास्याध्वर्युर्दक्षिणं हस्तं गृह्णाति ११ सिद्धमिष्टिः संतिष्ठते १२

इति चतुर्विंशी कण्डिका

ऐन्द्रावरुणं पुरोडाशं निरुप्यैन्द्रावरुणीं पयस्यां निर्वपेत् १ उद्वास्यालंकृत्य पयस्यायां पुरोडाशमवदधाति २ एतयैव प्रच्छाद्यासादयति ३ अथास्मात्प्रतिदिशं पयस्यां व्यूहति या वामिन्द्रावरुणा यतव्या तनूरिति ४ एतैरेव पुनः समूहति ५ अमुक्तमिति मन्त्रान्तान्संनमति ६ सहैव पयस्यायाः पुरोडाशस्यावद्यति ७ यो वामिन्द्रावरुणावग्नौ स्राम इत्युपहोमाः ८ अग्नये संवर्गाय पुरोडाशमष्टाकपालमित्युक्तम् ९ युद्वा हि देवहूतमानिनि पञ्चदश सामिधेनीरन्वाह १० नित्यया परिदधाति ११ कुवित्सु नो गविष्टय इति याज्यानुवाक्ये १२ यस्याजुषद्विद्या हि त इति संयाज्ये १३ चित्रापूर्णमासे चित्रामिष्टिं निर्वपेत् । आग्नेयादीनि सप्त १४ अग्ने गोभिर्न आ गहीत्युपहोमाः १५ पुष्कलेषु नक्षत्रेषूदवसाय कारीर्या वृष्टिकामो यजेत १६ अग्नीनन्वाधायापरेणाहवनीयं दक्षिणातिक्रम्योपविश्य यजमानो मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्ते १७ रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति १८ पुरोवातमेव जनयत्येहि वातेति १९ कृष्णोऽश्वः पुरस्तात्प्रत्यङ्मुखोऽवस्थितो भवति २० तमेतेन वाससाभिपिनष्ट्यभिक्रन्देति २१ यदि क्रन्देद्विधूनुयाच्छकृन्मूत्रं वा कुर्याद्वर्षिष्यतीति विद्यात् २२

इति पञ्चविंशी कण्डिका

पुरोवातो वर्षन्नित्यष्टौ वातनामानि हुत्वान्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्खर्जूरसक्तून्करीरसक्तून्वा मान्दा वाशा इति कृष्णमधुषा संयुत्य तिस्रः पिण्डीः कृत्वा पुष्करपलाशैः संवेष्ट्य समुद्यम्य कृष्णाजिनस्यान्तान्वृष्णो अश्वस्य संदानमसीति कृष्णेन दाम्नोपनह्यति १ उत्करे प्रागीषं त्रिगधमनोऽवस्थितं भवति २ छदींषीत्यर्थः ३ देवा वसव्या इति पूर्वस्यां गधायां कृष्णाजिनमाबध्नीयात् ४ अहोरात्रावासक्तं भवति ५ य-

दि वर्षेत्पिराडीरेव जुहुयात् ६ यदि न वर्षेद्देवाः शर्मरया इति मध्यमाया-
माबध्नीयात् ७ अहोरात्रावासक्तं भवति ८ यदि वर्षेत्पिराडीरेव जुहुयात्
९ यदि न वर्षेद्देवाः सपीतय इति जघन्यायामाबध्नीयात् २० अहोरात्रावा-
सक्तं भवति ११ यदि वर्षेत्पिराडीरेव जुहुयात् १२ यदि न वर्षेच्छो भूते
धामच्छदादीनि त्रीणि हवींषि निर्वपति कृष्णानां व्रीहीणाम् । १३ ता-
न्यासाद्योत्करे कृष्णाजिनमासादयति १४ कृष्णोष्णीषाः कृष्णवसना नि-
वीता ऋत्विजः प्रचरन्ति १५ त्वं त्या चिदच्युतेति याज्यानुवाक्याः १६
उपहोमकाले दिवा चित्तमः कृरावन्तीत्येतैः प्रतिमन्त्रं पिराडीराबध्नाति १७
जुहोतीत्येके १८ अथासां धूममनुमन्त्रयते १९

इति षड्विंशी करिडका

असितवर्णा हरयः सुपर्णा इति १ उत्करे कृष्णामपक्वां स्थालीमद्भिः पूर-
यति सृजा वृष्टिमिति २ यदि भिद्येत वर्षिष्यतीति विद्यात् ३ अनस उ-
पस्तम्भने शङ्कौ वा कृष्णाविर्बद्धा भवति ४ अब्जा असीति तां प्रोक्षति ५
तस्यामश्ववद्विज्ञानमुपैति ६ उत्करे वर्षाहूस्तम्बं प्रतिष्ठाप्योन्नम्भय पृथिवी-
मिति वर्षाह्वां जुहोति ७ अपां पूर्णां स्रुचं जुहोतीत्येके ८ अथैनमाहव-
नीयेऽनुप्रहरति ९ अथास्य धूममनुमन्त्रयते हिररायकेशो रजसो विसार इति
१० ये देवा दिविभागा इत्युपर्याहवनीये कृष्णाजिनमवधूनोत्यूर्ध्वग्रिवं ब-
हिष्टाद्विशसनम् ११ कृष्णं वासः कृष्णोऽश्वः कृष्णाविर्दक्षिणा १२ अथ
सवकारीर्याग्नेय एवाष्टाकपालोऽनुपसर्गः १३ तस्योपहोमा वातनामानि
याभिः पिराडीराबध्नाति जुहोति याभ्यां च धूममनुमन्त्रयते १४ पूर्ववत्त्रि-
धातुमधिश्रयति । यवमयस्तु मध्ये १५ ऐन्द्रावैष्णवं हविर्भवति १६ प्र
सो अग्न इत्युष्णिहककुभौ धाय्ये दधाति १७ अग्ने त्री ते वजिना त्री षध-
स्थेति त्रिवत्या परिदधाति १८ सं वां कर्मणोभा जिग्यथुरिति याज्यानुवा-
क्ये १९ उत्तरे संयाज्ये २० हिररायं तार्प्यं धेनुरिति दक्षिणा २१ ऐन्द्रा-
बार्हस्पत्यं चरुं निर्वपेद्राजन्ये जाते २२ हिररामयं दाम दक्षिणा दक्षिणा २३

इति सप्तविंशी करिडका

इत्येकोनविंशः प्रश्नः

राजा सार्वभौमोऽश्वमेधेन यजेत । अप्यसार्वभौमः १ चित्रा नक्षत्रं २ पुण्यनाम देवयजनमध्यवस्यति यत्रापः पुरस्तात्सुखाः सूपावगाहा अनपस्वरीः ३ चैत्र्यां पौर्णमास्यां सांग्रहण्येष्ट्या यजते । तस्या योत्तरामावास्या तस्यां संज्ञान्या ४ वैशाख्यां पौर्णमास्यां प्राजापत्यमृषभं तूपरं सर्वरूपं सर्वेभ्यः कामेभ्य आलभते ५ तस्या योत्तरामावास्या तस्यामपदातीन्महर्त्विज आवहन्ति ६ अन्वहमितरानावहन्त्या सुब्रह्मण्यायाः ७ अमावास्यामिष्ट्वा देवयजनमभिप्रपद्यते ८ केशश्मश्रु वपते ९ नखानि निकृन्तते १० दतो धावते ११ स्नाति १२ अहतं वासः परिधत्ते १३ वाचं यत्वोपवसति १४ ये रातयस्ते जागरयन्ति १५ वाग्यतस्यैतां रात्रिमग्निहोत्रं जुह्वति १६ द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे जमो वाचे नमो ब्रह्मणे नमस्तपसे नमः शान्ताय नम इत्येकशिंशत्या नमस्कारैरुद्यन्तमादित्यमुपतिष्ठते १७

इति प्रथमा कण्डिका

नमोऽग्नये पृथिविक्षित इत्येतैश्च यथालिङ्गम् १ ये ते पन्थानः सवितरिति पूर्वया द्वारा प्राग्वंशं प्रविश्याहवनीये वैतसमिध्ममभ्याधायैकादश पूर्णाहुतीर्जुहोति । हिरण्यगर्भः समवर्तताग्र इत्यष्टौ । देवा देवेषु पराक्रमध्वमिति तिस्रः २ चतुष्टय्य आपो दिग्भ्यः समाभृताः ३ तासु ब्रह्मौदनं पचति ४ पात्र्यां राजतं रुक्मं निधाय तस्मिन्ब्रह्मौदनमुद्धृत्य प्रभूतेन सर्पिषोपसिच्य सौवर्णं रुक्ममुपरिष्टात्कृत्वा कर्षन्ननुच्छिन्दंश्चतुर्भ्य आर्षेयेभ्यो महर्त्विग्भ्य उपोहति ५ प्राशितवद्भ्यश्चतुरः साहस्रान्सौवर्णान्निष्कान्ददाति चतुरश्चाश्वतरीरथानेतौ च रुक्मौ ६ द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी मौञ्जी वा रशना ७ तां ब्रह्मौदनोच्छेषेणानक्ति ८ अश्वस्य रूपाणि समामनन्ति । कृष्णः श्वेतः पिशङ्गः सारङ्गोऽरुणपिशङ्गो वा ९ यस्य वा श्वेतस्याल्पं कृष्णं स्यात्तमालभेत । मातृमन्तं पितृमन्तं पृष्ठे वहे च दान्तं सोमपं सोमपयोः पुत्रम् १० विज्ञायत एष वै सोमपो यं शिशुं जातं पुरा तृणाद्यात्सोमं पाययन्ति । एतौ वै सोमपौ यौ शिशू जातौ पुरा तृणाद्यात्सोमं पा-

ययन्तीति ११ अध्वर्युं राज्याय परिददाति १२

इति द्वितीया कण्डिका

ब्राह्मणा राजानश्चायं वोऽध्वर्यू राजा । या ममापचितिः सा व एतस्मिन् । यद्व एष करोति तद्वः कृतमसदिति १ यावद्यज्ञमध्वर्यू राजा भवति २ देवस्य त्वा सवितुः प्रसव इति रशनामादायेमामगृभ्णन्रशनामृतस्येत्यभिमन्त्र्य ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यो मेधाय प्रजापतये तेन राध्यासमिति ब्रह्माणमामन्त्रयते ३ तं बधान देवेभ्यो मेधाय प्रजापतये तेन राध्नुहीति प्रत्याह ४ अभिधा असीत्यश्वमभिदधाति ५ आनयन्ति श्वानं चतुरक्षं विष्वग्बन्धेन बद्धम् ६ पितुरनुजायाः पुत्रः पुरस्तान्नयति । मातुरनुजायाः पुत्रः पश्चात् ७ सैध्रकं मुसलम् ८ पौंश्चलेयः पेशसा जानु वेष्टयित्वा पश्चादन्वेति ९ अपोऽश्वमभ्यवगाहयन्ति श्वानं च १० यत्र शुनोऽप्रतिष्ठा तदध्वर्युः प्रसौति जहीति ११ यो अर्वन्तमिति सैध्रकेण मुसलेन पौंश्चलेयः शुनः प्रहन्ति १२ तमश्वस्याधस्पदमुपास्यति परो मर्तः पर श्वेति १३ दक्षिणापप्लाव्याहं च त्वं च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति १४ अभि क्रत्वेन्द्र भूरध ज्मन्नित्यध्वर्युर्यजमानं वाचयति १५ आहरन्त्यैषीकमुदूहं वरत्रया विबद्धम् १६ तस्मिन्नार्द्रा वेतसशाखोपसंबद्धा भवति १७ तं द्वे शते दक्षिणतो धारयतः । द्वे उत्तरतः १८ तेनाश्वं पुरस्तात्प्रत्यश्चमभ्युदूहन्ति १९

इति तृतीया कण्डिका

शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायं राजा वृत्रं वध्यादिति १ शतेनाराजभिरुग्रैः सह ब्रह्मा दक्षिणत उदङ् तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायं राजाप्रतिधृष्योऽस्त्विति २ शतेन सूतग्रामणिभिः सह होता पश्चात्प्राङ् तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायं राजास्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै राजास्त्विति ३ शतेन क्षत्तृसंग्रहीतृभिः सहोद्गातोत्तरतो दक्षिणा तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायं राजा सर्वमायुरेत्विति ४ अत्रैतमैषीकमपप्लाव्या

नुदकमश्वमाक्रमय्यान्तरा स्थानमाक्रमणं चेदं विष्णुः प्र तद्विष्णुर्दिवो वा विष्णवित्यश्वस्य पदे तिस्रो वैष्णवीर्युत्वाश्वस्य स्तोकाननुमन्त्रयतेऽग्नये स्वाहा सोमाय स्वाहेति ५ शकृत्व एतमनुवाकमावर्तयति दशदशसंपातम् । अपरिमितकृत्वो वा ६

इति चतुर्थी कण्डिका

अथैनं प्रतिदिशं प्रोक्षति १ प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात्प्रत्यङ् तिष्ठन् २ इन्द्राग्निभ्यां त्वेति दक्षिणत उदङ् ३ वायवे त्वेति पश्चात्प्राङ् ४ विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतो दक्षिणा ५ देवेभ्यस्त्वेत्यधस्तात् ६ सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात् ७ पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति शेषम् ८ विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानमश्वनामानि वाचयित्वाग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्वहोमान्हुत्वा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्यश्वमुत्सृज्य देवा आशापाला इति रक्षिभ्यः परिददाति ९ शतं कवचिनो रक्षन्ति १० अपर्यावर्तयन्तोऽश्वमनुचरन्ति ११ चतुःशता इत्येकेषाम् १२ शतं तल्प्या राजपुत्राः संनद्धाः संनद्धसारथिनः शतमुग्रा अराजानः संनद्धाः संनद्धसारथिनः शतं वैश्या विपथिनः शतं शूद्रा वरूथिनः १३ तेऽश्वस्य गोप्तारो भवन्ति १४ यद्यद्ब्राह्मणजातमुपेयुस्तान्पृच्छेयुः कियद्यूयमश्वमेधस्य वित्थेति १५ यो न विद्यात्तं जित्वा तस्य गृहात्खादं पानं चोपनिवपेयुः १६ यदब्राह्मणानां कृतान्नं तदेषामन्नम् १७ रथकारकुले वसतिर्भवति १८ इह धृतिः स्वाहेति सायमश्वस्य चतुर्षु पत्सु चतस्रो धृतीर्जुहोति १९

इति पञ्चमी कण्डिका

सवित्रे प्रातरष्टाकपालं निर्वपति १ तस्य पुरस्तात्स्विष्टकृत आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावाञ्जुहोति २ ईंकाराय स्वाहेंकृताय स्वाहेत्यश्वचरितानि ३ अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यष्टाचत्वारिंशतमश्वरूपाणि । एकमतिरिक्तम् ४ अत्र ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपच इति तिस्रः ५ सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने । सवित्र आसवित्रे द्वादशकपालमपराह्णे ६ दक्षिणेनाहवनीयं

होता हिरण्यकशिपावुपविशति पारिप्लवं भौवन्यवं चाचिख्यासन् ७ तं दक्षिणेन हिरण्यकशिपोर्ब्रह्मा यजमानश्च ८ पुरस्तादध्वर्युर्हैरण्ये कूर्चे ९ दक्षिणतो वीणागणकिन उपोपविशन्ति १० उपविष्टेष्वध्वर्यो३ इत्यध्वर्युं होतामन्त्रयते ११ हो३यि होतरित्यध्वर्युः प्रतिगृणाति । ओं होतरिति वा १२ संस्थितयोरध्वर्युः संप्रेष्यति वीणागणकिनः पूर्वैः सह सकृद्धी राजभिरिमं यजमानं संगायतेति १३ सायं धृतिषु हूयमानासु राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यथा इत्यमुं संग्राममहन्निति तिस्रः १४

इति षष्ठी कण्डिका

सायंप्रातर्ब्राह्मणौ वीणागाथिनौ गायेताम् १ एवमेतानि सावित्रादीनि संवत्सरं कर्माणि क्रियन्ते २ सकृद्वाश्वचरितानि जुहोति ३ त्रिंशिमास एष सम्वत्सरो भवति ४ अपवृत्तास्विष्टिषु वीणागाथिभ्यां शतमनोयुक्तं च ददाति ५ शते चानोयुक्ते चेत्येके ६ ऊर्ध्वमेकादशान्मासादाश्वत्थे व्रजेऽश्वं बध्नन्ति ७ तस्मै बद्धाय यवसमाहरन्ति ८ यद्यश्वमुपतपद्विन्देदाग्नेयमष्टाकपालं निर्वपेत्सौम्यं चरुं सावित्रमष्टाकपालम् ९ पौष्णं चरुं यदि श्लोणः १० रौद्रं चरुं यदि महती देवताभिमन्येत ११ वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि नागच्छेत् १२ यद्यधीयादग्नयेऽंहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः १३ यदि वडबामधीयात्प्राजापत्यं चरुं द्वादशकपालं वा १४ यदि नश्येद्वायव्यं चरुम् १५ यदि सेनामीत्वरी विन्देतेन्द्राय जयत एकादशकपालम् १६ यदि प्रासहा नयेयुरिन्द्राय प्रसह्वन एकादशकपालम् १७ यद्यन्धः स्यात्सौर्यं चरुमेककपालं वा १८ यदि श्वभ्रेऽवपतेद्वैष्णवं चरुम् १९ अद्यविज्ञातेन यक्ष्मणा म्रियेत प्राजापत्यं चरुं द्वादशकपालं वा २०

इति सप्तमी कण्डिका

यदमित्रा अश्वं विन्देरन्हन्येतास्य यज्ञः १ अथान्यमानीय प्रोक्षेयुः २ एतस्य संवत्सरस्य योत्तमामावास्या तस्यामुखां संभरति ३ त्रैधातवीया दीक्षणीया ४ आकूत्यै प्रयुजेऽग्नये स्वाहेति चत्वार्यौद्ग्रहणानि जुहोति ५ स्वाहाधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि ६ सोऽयं दीक्षा हुतिकालो विवृद्धः

७ सप्ताहमन्वहमौद्ग्रहणैर्वैश्वदेवैश्चोत्तरैः प्रचरति ८ षडुत्तमेऽहन्यौद्ग्रहणानि जुहोति । सर्वस्मै स्वाहेति पूर्णाहुतिमुत्तमाम् ९ षडहमाग्नावैष्णवेन प्रचरति १० सप्तम्यामाग्निक्या त्रिहविषेति वाजसनेयकम् ११ भुवो देवानां कर्मणेत्यृतुदीक्षाभिः कृष्णाजिनमारोहन्तमभिमन्त्रयते १२ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतां जज्ञि बीजमिति जातमुख्यमुपतिष्ठते १३ विसृष्टवाचि यजमाने संप्रेष्यति वीणागणकिनो देवैरिमं यजमानं संगायतेति १४ एवं सदौ पवसथात् १५ प्रजापतिना सुत्यास्ववभृथोदयनीयानूबन्ध्योदवसानीयास्विति १६ देवैरन्ततः १७

इत्यष्टमी कण्डिका

वेदिकाले द्विस्तावा वेदिः । त्रिस्तावोऽग्निरेकविंशो वा १ वैश्वानरेण प्रचर्याग्नये गायत्रायेति दशहविषं सर्वपृष्ठां निर्वपति २ समिद्दिशामाशया न इति यथालिङ्गं याज्यानुवाक्याः ३ कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन्युनक्ति ४ अस्य यज्ञस्यर्द्ध्यै मह्यं संनत्या इति सर्वत्रानुषजति ५ रथवाहने हविर्धाने राज्जुदालमेकविंशत्यरत्निमग्निष्ठं मिनोति ६ पौतुद्रवावभितः । त्रयो बैल्वा दक्षिणतः । त्रयः उत्तरतः । त्रयः खादिरा दक्षिणतः । त्रय उत्तरतः । त्रयः पालाशा दक्षिणतः । त्रय उत्तरतः ७ खादिराः पालाशा वान्तत इत्येके ८ एकादशैकादशिनीः प्राचीः संमिन्वन्तीति कालबविब्राह्मणं भवति ९ चतुष्टय्य आपो दिग्भ्यः समाभृताः १० तासां वसतीवरीर्गृह्णाति ११ श्वो भूते प्रतायते गोतमचतुष्टोमयोः पूर्वो रथंतरसामा १२ पशुकाल आग्नेयं सवनीयं पशुमुपाकरोति । ऐकादशिनान्वा १३ दक्षिणाकाले यदब्राह्मणानां दिक्षु वित्तं तत्र्यहे समशः प्रतिविभज्यान्वहं ददाति १४

इति नवमी कण्डिका

प्राचीं दिशमध्वर्यवे । दक्षिणां ब्रह्मणे । प्रतीचीं होत्रे । उदीचीमुद्गात्रे । यदन्यद्भूमेः पुरुषेभ्यश्च । अपि वा प्राचीं होत्रे । प्रतीचीमध्वर्यवे १ महिषीं ब्रह्मणे ददाति । वावातां होत्रे । परिवृक्तीमुद्गात्रे । पालाकलीमध्वर्यव इति विज्ञायते २ पत्नीसंयाजान्तमहः संतिष्ठते ३ संस्थितेऽहन्य-

भित आहवनीयं षट्त्रिंशतमाश्वत्थानुपतल्पान्मिन्वन्ति ४ अस्तमित आदित्ये षट्त्रिंशतमध्वर्यव उपतल्पानधिरुह्य खादिरैः स्रुवैः सर्वां रात्रिमन्नहोमाञ्जुह्वति । आज्यं मधु तण्डुलान्पृथुकांल्लाजान्करम्भान्धानाः सक्तून्मसूस्यानि प्रियङ्गुतण्डुलानिति ५ चतुष्टयमेके समामनन्ति । आज्येन जुहोति लाजैर्जुहोति धानाभिर्जुहोति सक्तुभिर्जुहोति ६ एकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेन । आज्येनान्ततः ७ अत्र प्रयुक्तानां प्रयोक्ष्यमाणानां च मन्त्राणां प्रयोगमेके समामनन्ति ८

इति दशमी कण्डिका

विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि १ आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावान् २ अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमान् ३ पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येतं हुत्वाग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षाः ४ पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंशिनीं दीक्षाम् ५ भुवो देवानां कर्मणेत्यृतुदीक्षाः ६ अग्नये स्वाहा वायवे स्वाहेत्येतं हुत्वार्वाङ्यज्ञः सं क्रामत्वित्याप्तीः ७ भूतं भव्यं भविष्यदिति पर्याप्तीः ८ आ मे गृहा भवन्त्वित्याभूः ९ अग्निना तपो न्वभवदित्यनुभूः १० स्वाहाधिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि ११ दद्भ्यः स्वाहा हनूभ्यां स्वाहेत्यङ्गहोमान् १२ अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि १३ ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमान् १४ वनस्पतिभ्यः स्वाहेति वनस्पतिहोमान् १५ मेषस्त्वा पचतैरवत्वित्यपाव्यानि १६ कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपां होमान् १७ अम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहेत्यम्भांसि नभांसि महांसि १८

इत्येकादशी कण्डिका

नमो राज्ञे नमो वरुणायेति यव्यानि १ मयोभूर्वातो अभि वातूस्रा इति गव्यानि २ प्राणाय स्वाहा व्यानाय स्वाहेति संततिहोमान् ३ सिताय स्वाहासिताय स्वाहेति प्रमुक्तीः ४ पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येतं हुत्वा दत्वते स्वाहादन्तकाय स्वाहेति शरीरहोमान् ५ यः प्राणतो य आत्मदा इति महिमानौ ६ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि

ब्रह्मवर्चसानि ७ जज्ञि बीजमित्येतं हुत्वाग्नये समनमत्पृथिव्यै समनमदि-ति संनतिहोमान् ८ भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ ९ यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं हुत्वैकस्मै स्वाहेत्येताननुवाका-न्पुनःपुनरभ्यासं रात्रिशेषं हुत्वोषसे स्वाहेत्युषसि । व्युच्छन्त्यै स्वाहेति व्युच्छन्त्याम् । व्युष्टयै स्वाहेति व्युष्टायाम् । उदेष्यते स्वाहेत्युपोदयम् । उद्यते स्वाहेत्युद्यति । उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहे-त्युदिते हुत्वा प्रज्ञातानन्नपरिशेषान्निदधाति १०

इति द्वादशी कण्डिका

प्रतायत एकविंश उक्थ्यो महानाम्नीसामा १ अन्तरेणाग्रयणोक्थ्यौ प्राकृतं सोममभिषुत्य यः प्राणतो य आत्मदा इति महिमानौ गृह्णाति । राजतेन पूर्वं सौवर्णेनोत्तरम् २ सूर्यस्ते हमिमेति पूर्वं सादयति । चन्द्रमास्ते महिमे-त्युत्तरम् ३ आयुर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभावसुः । दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रस इत्यश्वस्य ग्रीवासु सौवर्णनिष्कं प्रतिमुच्याग्निस्ते वाजिन्युङ्ङनु त्वारभ इति वालधावश्व-मन्वारभ्य बहिष्पवमानं सर्पन्त्यग्निर्मूर्धेति ४ उद्गातारमपरुध्याश्वमुद्गीथाय वृणीते ५ तस्मै वडबा उपरुन्धन्ति ६ ता यदभिहिङ्करोति स उद्गीथः । यत्प्रत्यभिहिङ्कुर्वन्ति स उपगीथः ७ उदगासीदश्वो मेध्यो यज्ञिय इति शतेन शतपलेन च निष्केणोद्गातारमुपशिक्ष्येमां देवतामुद्गायन्तीमनूद्गायेति संप्रेष्यति ८ तेन हिरण्येन स्तोत्रमुपाकरोति ९ बर्हिःस्थाने भवति १० नमो राज्ञे नमो वरुणायेति वेतसशाखयाश्वतूपरगोमृगानग्निष्ठ उपाकरोति ये-षां चानादिष्टो देशः ११ प्लक्षशाखाभिरितरान्पशूनश्वे पर्यङ्ग्यान् । आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे । पौष्णमन्वञ्चम् । ऐन्द्रापौष्णमुपरिष्टाद्ग्रीवासु । आग्नेयौ कृष्णग्रीवौ बाहुवोः । त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । शितिपृ-ष्ठौ बार्हस्पत्यौ पृष्ठे । सौर्ययामौ श्वेतं कृष्णं च पार्श्वयोः । धात्रे पृषोदरम-धस्तात् । सौर्यं बलक्षं पुच्छे १२ अन्यत्राग्निष्ठादष्टादशिनः १३

इति त्रयोदशी कण्डिका

रोहितो धूम्ररोहित इति नवनव प्रतिविभज्यैन्द्राग्नदशमानेके समामनन्ति १

एवमारण्यान् २ तान्यूपान्तरालेषु धारयन्ति ३ इन्द्राय राज्ञे सूकर इत्येकादश दशत आलभ्यन्ते ४ वसन्ताय कपिञ्जलानालभते । ग्रीष्माय कलविङ्कान् । वर्षाभ्यस्तित्तिरीन् । शरदे वर्तिकाः । हेमन्ताय ककरान् । शिशिराय विकिरान् ५ कृष्णा भौमाः । धूम्रा आन्तरिक्षाः । बृहन्तो दैवाः । शबला वैद्युताः । सिध्मास्तारका इति पञ्चदशिनः ६ कृष्णग्रीवा आग्नेयाः । बभ्रवः सौम्याः । उपध्वस्ताः सावित्राः । सारस्वत्यो वत्सतर्यः । पौष्णाः श्यामाः पृश्नयो मारुताः । बहुरूपा वैश्वदेवाः । वशा द्यावापृथिव्याः ७ कृष्णग्रीवा इत्युक्तम् ८ एता ऐन्द्राग्नाः । पृश्नयो मारुताः । कृष्णा वारुणाः । कायास्तूपराः ९ अग्नयेऽनीकवते प्रथमजानालभते । मरुद्भ्यः सांतपनेभ्यः सवात्यान् । मरुद्भ्यो गृहमेधिभ्यो बाष्कान् । मरुद्भ्यः क्रीडिभ्यः संसृष्टान् । मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् १० कृष्णग्रीवा इत्युक्तम् ११ एता ऐन्द्राग्नाः । प्राशृङ्गा ऐन्द्राः । बहुरूपा वैश्वकर्मणाः १२ पितृभ्यः सोमवद्भ्यो बभ्रून्धूम्रानूकाशान् । पितृभ्यो बर्हिषद्भ्यो धूम्रान्बभ्रवनूकाशान् पितृभ्योऽग्निष्वात्तेभ्यो धूम्रान्रोहितांस्त्रैयम्बकान् १३ कृष्णाः पृषन्त इत्येके १४

इति चतुर्दशी कण्डिका

श्वेता आदित्याः १ कृष्णग्रीवा इत्युक्तम् २ एता ऐन्द्राग्नाः । बहुरूपा वैश्वदेवाः । प्राशृङ्गाः शुनासीरीयाः । श्वेता वायव्याः । श्वेताः सौर्या इति चातुर्मास्याः पशवः ३ द्वयानैकादशिनानालभन्ते । प्राकृतानाश्वमेधिकांश्च ४ अग्नयेऽनीकवत इत्याश्वमेधिकान् । सोमाय स्वराज्ञ इति द्वंद्विनः ५ उपाकृताय स्वाहेत्युपाकृते जुहोति । आलब्धाय स्वाहेति नियुक्ते । हुताय स्वाहेति हुते ६ पत्नयोऽश्वमलं कुर्वन्ति । महिषी वावाता परिवृक्तीति ७ शतंशतमेकैकस्याः सचिवाः । राजपुत्रीर्दाराश्चोग्राणामराज्ञां सूतग्रामण्यामिति ८ सहस्रंसहस्रं मणयः सुवर्णरजतसामुद्राः ९ वालेसु मणीनावयन्ति । भूरिति सौवर्णान्महिषी प्राग्वहात् । भुव इति राजतान्वावाता प्रत्यग्वहात्प्राक् श्रोणेः । सुवरिति सामुद्रान्परिवृक्ती प्रत्यक् श्रोणेः १० वालेसु कुमार्यः शङ्खमणीनुपग्रथ्नन्त्यप्रस्रंसाय । न वा ११ अथास्य स्वदेशानाज्येनाभ्यञ्जन्ति । वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति

गौल्गुलवेन महिषी । रुद्रा इति कासाम्बवेन वावाता । आदित्या इति मौस्तकृतेन परिवृक्ती १२ गौल्गुलवेन सुरभिरश्वो मेधमुपाकृतः । देवाँ उपप्रेष्यन्वाजिन्वर्चोदा लोकजिद्भव । कासाम्बवेन सुरभिरश्वो मेधमुपाकृतः । देवाँ उपप्रेष्यन्वाजिन्वर्चोदा लोकजिद्भव । मौस्तकृतेन सुरभिरश्वो मेधमुपाकृतः । देवाँ उपप्रेष्यन्वाजिन्वर्चोदा लोकजिद्भवेत्येतैश्च प्रतिमन्त्रम् १३

इति पञ्चदशमी कण्डिका

युञ्जन्ति ब्रध्नमिति दक्षिणस्यां युगधुर्येतमश्वं युनक्ति १ युञ्जन्त्यस्य काम्येति प्रष्टी २ केतुं कृण्वन्नकेतव इति रथे ध्वजमवगूहति ३ जीमूतस्येवेति कवचमध्यूहते ४ धन्वना गा इति धनुरादत्ते ५ वक्ष्यन्तीवेति ज्यामभिमृशति ६ ते आचरन्तीति धनीरार्त्नी संमृशति ७ बह्वीनां पिता बहुरस्य पुत्र इति पृष्ठ इषुधिं निनह्यति ८ रथे तिष्ठन्नयति वाजिन इति सारथिमभिमन्त्रयते ९ तीव्रान्घोषान्कृण्वते वृषपाणय इत्यश्वान् १० स्वादुषंसदः पितरो वयोधा इति तिसृभिः पितॄनुपतिष्ठते ११ ऋजीते परि वृङ्धि न इत्यात्मानं प्रत्यभिमृश्या जङ्घन्तीत्यश्वाजनिमादायाहिरिव भोगैरिति हस्तघ्नमभिमन्त्रयते १२ वनस्पते वीड्वङ्गो हि भूया इति पञ्चमी रथम् १३ आमूरज प्रत्यावर्तयेमाः केतुमदिति दुन्दुभीन्संह्लादयन्ति १४ आक्रान्वाजी क्रमैरत्यक्रमीद्वाजीत्युदगुदकान्तमभिप्रयाय ये ते पन्थानः सवितरित्यध्वर्युर्यजमानं वाचयति १५ स्वयं वाजिन्नपोऽवजिघ्रेत्यपोऽश्वमवघ्राप्य यद्वातो अपो अगमदिति प्रदक्षिणमावर्तयति १६ यतः प्रायति तदवतिष्ठते १७ वि ते मुञ्चामीत्येतमश्वं विमुच्य रथवाहनं हविरस्य नामेति रथवाहने रथमत्याधाय द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठं संमार्ष्टि १८ लाजी३ञ्छाची३न्यशो ममां३ इति पत्नयोऽश्वायान्नपरिशेषानुपवपन्ति २९ ययोपन्युप्तमत्ति तस्यै प्रजा राष्ट्रं भवति २०

इति षोडशी कण्डिका

आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठमित्यश्वमभिमन्त्र्य यथोपाकृतं नियुज्य प्रोक्ष्योपपाययति १ यद्युपपाय्यमानो न पिबेदग्निः पशुरासीदित्युपपाययेत् २ समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याप्रियो भवन्ति ३ मेष-

स्त्वा पचतैरवत्विति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोति ४ पर्यग्निकृताना-रण्यानुत्सृजन्ति ५ वडबे पुरुषी च ६ अजः पुरो नीयतेऽश्वस्य ७ वेत-सशाखायां ताप्र्यं कृत्यधीवासं हिरण्यकशिपु चास्तीर्य सौवर्णं रुक्ममुपरि-ष्टात्कृत्वा तस्मिन्नश्वतूपरगोमृगान्निघ्नन्ति । प्लक्षशाखास्वितरान्पशून् ८ श्यामूलेन क्षौमेण वाश्वं संज्ञपयन्ति । स्पन्द्याभिरितरान्पशून् ९ प्राणाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमाने पशावाहुती जुहोति । संज्ञप्ते वा १० यामेन साम्ना प्रस्तोतानूपतिष्ठते ११ अम्बे अम्बाल्यम्बिक इति प्रतिप्रस्थाता पत्नीरुदानयति १२ ता दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानू-रूनाघ्नानाः सिग्भिरभिधून्वत्यस्त्रिः प्रदक्षिणमश्वं परियन्त्यवन्ती स्थेति १३ सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वत्यस्त्रिः प्रतिप-रियन्ति १४ प्रदक्षिणमन्ततो यथा पुरस्तात् १५ नवकृत्वः संपादयन्ति १६ अम्बे अम्बाल्यम्बिक इति महिष्यश्वमुपसंविश्य १७

इति सप्तदशी कण्डिका

गणानां त्वा गणपतिं हवामह इत्यभिमन्त्र्याहं स्यां त्वं स्याः सुरायाः कुलजः स्यात्तत्रेमांश्चतुरः पदो व्यतिषज्य शयावहा इति पदो व्यतिषजते १ तौ सह चतुरः पदः सं प्र सारयावहा इति पदः संप्रसारयते २ सुभगे काम्पीलवा-सिनीति क्षौमेण वाससाध्वर्युर्महिषीमश्वं च प्रच्छाद्य वृषा वामित्यभिमन्त्र-यते ३ उत्सक्थ्योर्गृदं धेहीति प्रजननेन प्रजननं संधायाम्बे अम्बाल्यम्बिक इति महिष्यश्वं गर्हते ४ ऊर्ध्वामेनामुच्छ्रयतादिति पत्नयोऽभिमेधन्ते ५ त्रिर्महिषी गर्हते । त्रिः पत्नयोऽभिमेधन्त उत्तरयोत्तरयर्चा ६ दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृचमन्ततो जपित्वापोहिष्ठीयाभिर्मार्जयित्वा गायत्री त्रिष्टुबिति द्वाभ्यां सौवर्णीभिः सूचीभिर्महिष्यश्वस्यासिपथान्कल्प-यति प्राक्क्रडात् । एवमुत्तराभ्यां राजतीभिर्वावाता प्रत्यक्क्रोडात्प्राङ्नाभेः । एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्ती शेषम् ७ तूष्णीं तूपरगोमृग-योरसिपथान्कल्पयन्ति ८ कस्त्वा छ्यति कस्त्वा वि शास्तीत्यश्वस्य त्व-चमाच्छ्यति ९ चन्द्रं नाम मेदः । तदुद्धरति १० नाश्वस्य वपा विद्यते ११ उद्धरतीतरेषाम् १२ कर्णं छित्त्वा त्र्यङ्गेषूपसंनह्यति १३ नाश्वस्य गुदो विद्यते १४ शृतासु वपासुत्तरत उपरिष्टादग्नेर्वेतसशाखायामश्वतूपरगोमृगाणां

वपाः सादयति १५

इत्यष्टादशी कण्डिका

दक्षिणतः प्लक्षशाखास्वितरेषां पशूनाम् १ पूर्वौ परिवप्यमहिमानौ हुत्वा-श्वतूपरगोमृगाणां वपाः समवदाय संप्रेष्यति २ प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य वपानां मेदसामनुब्रूहि । क्प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य व-पानां मेदसां प्रेष्येति संप्रैषौ । चन्द्रवपयोर्मेदसामनुब्रूहि चन्द्रवपयोर्मेदसां प्रेष्येति वा ३ समवदायेतरेषां वपाः संप्रेष्यति ४ विश्वेभ्यो देवेभ्य उ-स्राणां छागानां मेषाणां वपानां मेदसामनुब्रूहि । विश्वेभ्यो देवेभ्य उस्राणां छागानां मेषाणां वपानां मेदसां प्रेष्येति संप्रैषौ ५ उत्तरौ परिवप्यमहिमानौ हुत्वा चात्वाले मार्जयित्वाभितोऽग्निष्ठं ब्रह्मोद्याय पर्युपविशेते । दक्षिणो ब्रह्मा । उत्तरो होता ६ किं स्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृ-ष्टानि होतुः प्रतिज्ञातानि ब्रह्मणः ७ ब्रह्मण उदञ्चं विजयं संज्ञापयन्ति ८ प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्यास्थि लोम च तिर्यगसंभिन्दन्तः सूकर-विशसं विशसतेति संप्रैषवत्कुर्वन्ति ९ अश्वस्य लोहितं स्विष्टकृदर्थं नि-दधाति १० शफं गोमृगकण्टं च माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति ११ हि-रण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः पुरस्तादभिषेकस्य जुहोति । अयं पुरो भुव इति षट् च प्राणभृतः १२ व्याघ्रचर्मणि हिंहचर्मणि वाभिषि-च्यते १३

इत्येकोनविंशी कण्डिका

ऋषभचर्माभिषिच्यमानस्योपरि धारयन्ति १ सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्न-धिनिदधाति २ प्रजापतेस्त्वा प्रसवे पृथिव्या नाभावन्तरिक्षस्य बाहुभ्यां दिवो हस्ताभ्यां प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामीति महिम्नोः संस्स्रावेणाभिषिञ्चति ३ वायव्यैरभिषिञ्चतीत्येके ४ मधुश्च माधवश्चेति मासनामभिरभिषिच्यमानमभिजुहोति ५ वसन्ताय स्वाहा ग्रीष्माय स्वा-हेत्यृतुभ्यः षट् ६ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अ-स्माँ अभिदासत्यधरं गमया तमः । वि रक्षो वि मृधो नुद वि वृत्रस्य हनू

रुज । वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासत इति वैमृधीभ्यां यजमानो मुखं विमृष्टे ७ ऊर्ध्वा अस्य समिधो भवन्तीति प्राजापत्याभिराप्रीभिरभिषिच्यमानस्य हस्तं गृह्णाति ८ प्रजापतिश्चरति गर्भे अन्तः । प्रजापतिं प्रथमं यज्ञियानां देवानामग्रे यजतं यजध्वम् । स नो ददातु द्रविणं सुवीर्यं रायस्पोषं वि ष्यतु नाभिमस्मे । तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीवधन्य इदं नो देव प्रति हर्य हव्यमिति षट् प्राजापत्या उपरिष्टादभिषेकस्य जुहोति ९ प्राची दिशामिति षट् चापानभृतः १० अत्र यजमानो जागतान्विष्णुक्रमान्क्रामति ११

इति विंशी कण्डिका

पशुकाल उत्तरत उपरिष्टादग्नेर्वैतसे कटेऽश्वं प्राञ्चं यथाङ्गं चिनोति १ एवं पुरस्तात्प्रत्यञ्चं तूपरम् । पश्चात्प्राचीनं गोमृगम् २ दक्षिणतः प्लक्षशाखास्वितरान्पशूनासादयति ३ वपावच्चर्या ४ हविष इत्यन्तौ नमति ५ आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठमिति वैतसेन कटेनाश्वतूपरगोमृगान्सर्वहुतान्हुत्वेलुवर्दाय स्वाहा बलिवर्दाय स्वाहेत्यश्वमभिजुहोति ६ अत्र कटमनुप्रहरति ७ येऽश्वस्य हुतस्य गन्धमाजिघ्रन्ति सर्वे ते पुण्यलोका भवन्तीति विज्ञायते ८ हविषा प्रचर्याज्यमवदानं कृत्वा स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरित्येतैश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमाञ्जुहोति ९ दिवाकीर्त्यं पञ्चदशम् । अरण्येऽनुवाक्यं षोडशम् । द्यौस्ते पृष्ठमित्येतं सप्तदशमाज्येनैव १० यदक्रन्दः प्रथमं जायमान इत्येतैस्त्रिभिरनुवाकैः षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति ११ क्रमैरत्यक्रमीदित्येतां षट्त्रिंशीम् १२ अष्टादश जुहोतीत्येके १३ इमा नु कं भुवना सीषधेमेति द्विपदाः १४ अन्ततोऽश्वस्य लोहितेन शृतेन स्तिष्टकृतं यजति १५

इत्येकविंशी कण्डिका

गोमृगकण्ठेन प्रथमामाहुतिं जुहोति । अश्वशफेन द्वितीयाम् । अयस्मयेन कमण्डलुना तृतीयाम् १ पत्नीसंयाजान्तमहः संतिष्ठते २ श्वो भूते प्रतायते सर्वस्तोमोऽतिरात्रो बृहत्सामा ३ पशुकाले गव्यानैकादशिनानालभन्ते प्राजापत्यान्वैश्वदेवान्वा । प्राजापत्यमृषभं तूपरं सर्वरूपं सर्वेभ्यः कामेभ्यो

द्वादशमुपालम्भ्यम् ४ समानमावभृथात् ५ अवभृथेन प्रचर्यात्रियं शिपिविष्टं खलतिं विक्लिधं शुक्लं पिङ्गाक्षं तिलकावलमवभृथमभ्यवनीय तस्य मूर्धञ्जुहोति मृत्यवे स्वाहा भ्रूणहत्यायै स्वाहा जुम्बकाय स्वाहेति तिस्रः ६ तस्मै शतमनोयुक्तं च ददाति ७ शते चानोयुक्ते चेत्येके ८ सह पुण्यकृतः पापकृतश्च हस्तसंरब्धा ग्राममभ्युदायन्ति । सर्वे ते पुण्यलोका भवन्तीति विज्ञायते ९ सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति १० अथैकेषाम् । रोहिणीरैन्द्रीः सौरीः श्वेताः शितिपृष्ठा बार्हस्पत्याः ११ अत्र वा द्वंद्विन आलभते १२ छगलः कल्माषः किकिदीविर्विदीगय इति ते त्रयस्त्वाष्ट्राः १३ पात्नीवत आग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आलभ्यन्ते १४

इति द्वाविंशी कण्डिका

अथैकेषाम् । त्रैतानां प्रथमजं कालकाभ्रुमश्विभ्यां मध्यमे विशालयूप आलभते । तेषामेव मध्यमजमूर्जे दक्षिणे । उत्तमजं पृथिव्या उत्तरे १ तेषां पशुपुरोडाशानग्नयेंऽहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति २ समानं तु स्विष्टकृदिडम् ३ अग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्याः ४ त्रैधातवीययो दवस्यति ५ तस्यां सहस्रं ददाति ६ उदवसाय विशालयूपमेके समामनन्ति ७ तदाहुर्द्वादश ब्रह्मौदनान्संस्थिते निर्वपेद्द्वादशभिर्वेष्टिभिर्यजेतेति ८ तदु तथा न कुर्यात् । द्वादशैव ब्रह्मौदनान्संस्थिते निर्वपेत् । तेष्वन्वहं द्वादशानि शतानि ददाति ९ पिशङ्गास्त्रयो वासन्ता इत्यृतुपशुभिः संवत्सरं यजते १० अथैकेषाम् । आग्नेया वासन्ताः । ऐन्द्रा ग्रैष्माः । मारुताः पार्जन्या वा वार्षिकाः । ऐन्द्रावारुणाः शारदाः । ऐन्द्राबार्हस्पत्या हैमन्तिकाः । ऐन्द्रावैष्णवाः शैशिराः ११ संवत्सराय निवक्षस इति द्वयोर्द्वयोर्मासयोः पशुबन्धेन यजते १२ संतिष्ठतेऽश्वमेधः १३

इति त्रयोविंशी कण्डिका

पञ्चाहः पुरुषमेधः १ ब्राह्मणो राजन्यो वा यजेत २ ओजो वीर्यमाप्नोति । सर्वा व्यष्टीर्व्यश्नुते ३ एकादशसु यूपेष्वेकादशाग्नीषोमीयाः ४ पञ्चशारदीयवदहानि । अग्निष्टोमो वोपोत्तमः ५ देव सवितः । तत्सवितुः ।

विश्वानि देव सवितरिति तिस्रः सावित्रीर्हुत्वा मध्यमेऽहन्पशूनुपाकरोति ६ द्वयानैकादशिनानुपाकृत्य पुरुषान् ७ ब्रह्मणे ब्राह्मणमालभत इत्येतद्यथासमाम्नातम् ८ तान्यूपान्तरालेषु धारयन्ति ९ उपाकृतान्दक्षिणतोऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन परा चानुशंसति १० पर्यग्निकृतानुदीचो नीत्योत्सृज्याज्येन तद्देवता आहुतीर्हुत्वा द्वयैरैकादशिनैः संस्थापयति ११ दक्षिणाकाले यदब्राह्मणानां दिक्षु वित्तं तत्सभूमि ददाति यथाश्वमेधे १२ ब्राह्मणो यजमानः सर्ववेदसम् १३ एतस्मिन्नेवाहन्यश्वमेधवदभिषेकः १४ एकादशानूबन्ध्याः सौरीर्वैश्वदेवीः प्राजापत्या वा १५ त्रैधातवीययोदवसाय पृथगरणीष्वग्नीन्समारोप्योत्तरनारायणेनादित्यमुपस्थायारण्यमवतिष्ठेत १६ ग्रामं वा प्रविश्य त्रैधातवीयया यजेत १७

इति चतुर्विंशी कण्डिका

सौत्रामण्या मैत्रावरुण्या चामिक्षया साकंप्रस्थायीयेन पञ्चबिलेन चरुणा पञ्चशारदीयेनेति १ पञ्चबिलस्य चरोर्विज्ञायते । आज्य आग्नेयः पूर्वस्मिन्बिले । दधन्यैन्द्रो दक्षिणे । शृते प्रतिदुहि नीतमिश्रे वा वैश्वदेवः पश्चिमे । अप्सु मैत्रावरुण उत्तरे । पयसि बार्हस्पत्यो मध्यमे २ सर्वमेधो दशरात्रः ३ राजा यजेत यः कामयेत सर्वमिदं भवेयमिति ४ एकशतविधोऽग्निः ५ अग्निष्टुदग्निष्टोमः ह्प्रथममहः । सर्वमाग्नेयं भवति ६ इन्द्रस्तुदुकथ्यो द्वितीयः । सर्वमैन्द्रम् ७ सूर्यस्तुदुकथ्यस्तृतीयः । सर्वं सौर्यम् ८ वैश्वदेव उकथ्यश्चतुर्थः । सर्वं वैश्वदेवम् ९ आश्वमेधिकं मध्यमं पञ्चममहः । तस्मिन्नश्वं मेध्यमालभते १० पौरुषमेधिकं मध्यमं षष्ठम् । तस्मिन्पुरुषान् ११ अप्तोर्यामः सप्तमः । तस्मिन्सर्वान्मेध्यानालभते १२ वपा वपावतां जुहोति । त्वच उत्कृत्यावपानाम् १३ शुष्कानार्द्रांश्चौषधिवनस्पतीन्संवृश्च्याहवनीयेऽनुप्रकिरन्ति १४ प्रातःसवने सन्नेषु नाराशंसेष्वन्नमन्नं जुहोति १५ सर्वस्याप्त्यै सर्वस्यावरुद्ध्या इति विज्ञायते १६ एवं माध्यंदिने तृतीयसवने च १७ अष्टमं त्रिणवम् १८ नवमं त्रयस्त्रिंशम् १९ विश्वजित्सर्वपृष्टोऽतिरात्रो दशममहः २० दक्षिणाकाले यदब्राह्मणानां दिक्षु वित्तं तत्सभूमि सपुरुषं ददाति यथाश्वमेधे यथाश्वमेधे २१

इति पञ्चविंशी कण्डिका

इति विंशः प्रश्नः

द्वादशाहेन प्रैव जायतेऽभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति १ साग्निचित्यो भवति २ सत्रमहीनश्च ३ दीक्षितमदीक्षिता याजयेयुरहीने । एत एवर्त्विजो यजमानश्च सत्रे ४ तस्माद्द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्या इति विज्ञायते ५ ऋध्नोति यो द्वादशाहेन यजते ६ ऋध्नोति यः प्रतिगृह्णातीत्येके ७ ऋत्विजो यजमानं चाधिकृत्य वदति ८ पीवा दीक्षते । कृशो यजते । यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते ९ योऽतपस्वी स्यादसंश्लिष्टोऽस्य यज्ञः स्यात् । तपस्वी स्यात् । यज्ञमेव तत्संश्लेषयत इति विज्ञायते १० एको द्वादशाहेन यजेत । त्रयः षड् द्वादश त्रयोदश वा ११ तेषामुपसत्सु त्रयोदशं दीक्षयन्ति १२ तस्माद्द्वादशाहे त्रयोदशेन न ब्रह्मणा भवितव्यमित्येके १३ पञ्चदश दीक्षेरन्नर्धमासायतनाः । सप्तदश प्रजाकामाः पशुकामा वा । एकविंशतिं प्रतिष्ठाकामा रुक्कामा वा । त्रिंशतं मासायतनाः । त्रयस्त्रिंशतमोजस्कामा वीर्यकामा वा । चत्वारिंशतं यज्ञकामाः । चतुश्चत्वारिंशतमिन्द्रियकामाः । अष्टाचत्वारिंशतं पशुकामाः १४ अपरिमिता दीक्षेरन्नित्यन्ततो वदति १५ येऽन्ये सप्तदशभ्यो वादा अहीन एव ते स्थानिनः १६ सप्तदशानामेव याथाकामी १७ सर्वे याजमाने स्थानिनः १८ सर्वे याजमानं कुर्युर्यत्किंचार्त्विज्येनाविबाधकम् १९ विबाधमान आर्त्विज्यं बलीयः २०

इति प्रथमा कण्डिका

सर्व इष्टप्रथमयज्ञाः । अपि वा गृहपतिरेव १ गृहपतेरेव परार्थानि यथा यूपाञ्जनमृतुयाज्येति २ गृहपतेरेव सामिधेनीकल्पेनावदानकल्पेनेति प्रक्रामेयुर्यानि चान्यान्येवंरूपाणि स्युः ३ त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया ४ आजुहोतेतीतरेषां गोत्राणाम् ५ नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् ६ तनूनपादितरेषां गोत्राणाम् ७ शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्ति ८ शिशिरे वा एतस्य प्रयाणं वसन्त उत्थानम् ९ ऋध्नोति य एवंविद्वाञ्शिशिरे दीक्षते वसन्त उत्तिष्ठत इति विज्ञायते १० षड् व्युष्टाश्चैत्रस्यापूर्यमाणपक्षस्याथ दीक्षेरन् ११ सावित्राणि होष्यमाणा निर्मथ्य

संनिवपेरन् । ततो विनिवपेरन् १२ पञ्चपशुभिर्यक्ष्यमाणाः संनिवपेरन् । ततो विनिवपेरन् १३ दीक्षिष्यमाणाः संनिवपेरन् १४ तेषामेतत्संन्युप्ता एवाग्नयो भवन्त्योदवसानीयायाः १५ अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । तत उद्गातारम् । ततो होतारम् १६ ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्धिनो दीक्षयति १७ ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति १८ ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति १९ ततस्तं प्रतिप्रस्थाता दीक्षयति २०

इति द्वितीया कण्डिका

अन्यो वा ब्राह्मणः १ दीक्षित आ तन्त्रीभावादेकैकमपवर्जयति २ एवमनुपूर्वा एवैषां याजमाना धर्मा ये केचाविभविनः ३ नानागोत्रव्यवायादेव समानगोत्राणामार्षेयवरणमभ्यावर्तेतेत्येकम् । व्यवेतेऽपि तन्त्रमेवेत्य परम् ४ सद्यो दीक्षामेके समामनन्ति । अन्वहं दीक्षामेके ५ द्व्यहे दीक्षेत त्र्यहे दीक्षेतेत्येवं क्रामत्या द्वादशाहात् ६ उपदीक्षमाणे सर्वं सदीक्षणीयमावर्तेतेत्याश्मरथ्यः ७ अग्नीनुपन्युप्यात्मसंस्कारेणैव प्रतिपद्येत तन्त्रमाहुतयः स्युरित्यालेखनः ८ पत्नीनामेव स्थाने पत्नीर्दीक्षयन्ति ९ तासां याजमानैरेव धर्मानुपूर्व्यं व्याख्यातम् १० अध्वर्युं दीक्षिता अन्वारभन्ते । दीक्षितान्पत्नयः ११ अथ समन्वारब्धेषु गार्हपत्ये जुहोत्यपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिवाभि नः शीयतां रयिः । सचतां नः शचीपतिः स्वाहेति १२ ऋते पत्नीभ्य इतरयोः १३

इति तृतीया कण्डिका

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरानिति दक्षिणाग्नौ १ इदमू नु श्रेयो ऽवसानमागन्म यद्गोजिद्धनजिदश्वजिद्यत् । पर्णं वनस्पतेरिवाभि नः शीयतां रयिः । सचतां नः शचीपतिः स्वाहेत्याहवनीये २ द्वादशाहं दीक्षिता भवन्ति ३ न सनीहारान्प्रहिण्वन्ति सत्त्रे ४ प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधाति द्वादशाहायाप्तम् ५ षोडशिवत्सोमक्रयणी ६ उपसत्सु द्वादशाहे संभारयजूंषि व्याचष्टे ७ यजमानं वाचयतीत्येके ८

द्वादशोपसदः ९ चतुरहंचतुरहमेकैकेनोपसन्मन्त्रेण जुहोति १० अनूपसद-मग्निं चिनोति ११ द्व्यहंद्व्यहमेकैका चितिः १२ चतुरहमुत्तमा १३ चतु-स्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्र्यहं त्र्यहं व्रतानि १४ य एषां व्रतमि-च्छेदभिपूरयितुं दध्न एकं स्रुवमुन्नीय नापरमुन्नयेत १५ एकविंशतिच्छदिः सदः १६ संतृणे अधिषवण फलके भवतः १७ ऋजुरुपवसथः १८

इति चतुर्थी कण्डिका

श्वो भूते प्रतायते ज्योतिष्टोमः १ वैश्वानरः प्रायणीयोऽतिरात्रः २ समानमा राज्ञ उपावहरणात् ३ यावन्तमेकस्मा अह्न आप्तं मन्यते ४ तमन्यस्मि-न्वासस्युपनह्य प्रत्युपनह्येतरमुपावहरति ५ एवमहरहस्तन्त्रमग्नेर्योगविमोकौ ६ प्रथमेऽहनि युनक्ति । उत्तमे विमुञ्चति ७ अन्वहमेके योगविमोकौ समामनन्ति ८ दक्षिणाकालेऽन्वहं द्वादशानि शतानि ददात्यहीने ९ सत्रे तु दाक्षिणौ होमौ हुत्वेदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकाय दक्षिणां नयामीति यजमानाः कृष्णाजिनानि धून्वन्त उदञ्चो दक्षिणापथेनातियन्ति १० एवमहरहः ११ उत्तम एवाहनि सख्यानि विसृजन्ते १२ कृष्णवि-षाणाश्च प्रविध्यन्ति १३ पूर्वस्मिन्नेवाहन्युत्तरस्मा अह्ने वसतीवरीर्यज्ञायज्ञियं प्रति गृह्णाति १४ वर्तमान एवातिरात्र उत्तरस्मा अह्ने पयांसि विशास्ति १५ यत्र मैत्रावरुणस्याभिजानाति श्वःसुत्यामिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्म-णेभ्यः सोम्येभ्यः सोमेपेभ्यः सोमं प्रब्रूतात्सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति १६

इति पञ्चमी कण्डिका

तदाग्नीध्र आग्नीध्रागारं प्रविश्य संप्रेष्यति श्वःसुत्यामिन्द्राग्निभ्यां विश्वेभ्यो दे-वेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपभ्यः सोमं प्रब्रवीमि सुब्रह्मण्य सुब्रह्म-ण्यामाह्वयेति १ स वै खलु श्वःसुत्यामिति ब्रूयादित्याश्मरथ्यः । अद्य-सुत्यामित्यालेखनः २ तत ऊर्ध्वं श्वःसुत्यामित्येव ब्रूयात् ३ पत्नीसंया-जान्तमहः संतिष्ठते ४ संस्थितेऽहनि ब्रह्मा वाचं विसृजते ५ परिहरन्ति पत्नीभ्य उदकम् ६ यन्ति समिद्धाराः ७ एत्याहवनीयेऽभ्यादधति ८ एवमहरहः ९ तदानीमेव त्रिवृतमग्निष्टोमं रथंतरसामानमुपयन्ति १० रथ-शब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति ११ शब्दो मन्त्रस्थाने भवति १२ श्वो

भूते पञ्चदशमुकथ्यं बृहत्सामानमुपयन्ति १३ दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति १४ यद्यु वै स्तनयित्नुः स्यात्स एव स्याच्छब्दो मन्त्रस्थाने १५ श्वो भूते सप्तदशमुकथ्यं वैरूपसामानमुपयन्ति १६ बर्हिः स्थान आधावेन माहेन्द्रस्य स्तोत्रमुपाकरोति १७ उपाकृतं सामाप्रस्तुतं भवति १८ अथोद्गाताधावेनाधूनुते १९

इति षष्ठी कण्डिका

श्वो भूत एकविंशं षोडशिनं वैराजसामानमुपयन्ति १ न्यूङ्ख्यमेतदहर्भवति २ बर्हिःस्थानेऽरणीभ्यां माहेन्द्रस्य स्तोत्रमुपाकरोति ३ उपाकृतं सामाप्रस्तुतं भवति ४ अथोद्गातुर्दक्षिणमूरुमवकाभिः प्रच्छाद्य तस्मिन्नग्निं मन्थति ५ तं जातमुद्गाताभिहिङ्कृत्य प्रस्तोत्रे प्रयच्छति । तं सोऽध्वर्यवे ६ तमध्वर्युरुत्तरेण धिष्णियान्पर्याहृत्याहवनीये प्रहृत्य प्रेद्धो अग्ने दीदिहीति विराजाभिजुहोति ७ श्वो भूते त्रिणवमुकथ्यं शाक्वरसामानमुपयन्ति ८ बर्हिःस्थानेऽद्भिरवकावास्ताभिर्माहेन्द्रस्य स्तोत्रमुपाकरोति ९ उपाकृतं सामाप्रस्तुतं भवति १० अथ तिस्रः सहर्षभा अग्रेण सदोऽपरेणाग्नीध्रमुदीचीनं दक्षिणापथेनातियन्ति ११ श्वो भूते त्रयस्त्रिंशमुकथ्यं रैवतसामानमुपयन्ति १२ न्यूङ्ख्यमेतदहर्भवति १३ स्वयमध्वर्युर्ऋतुयाजं यजति । स्वयं गृहपतिः १४ अध्वर्यू यजतं गृहपते यजेत्यभिज्ञायाध्वर्युर्हविर्धानं प्रविश्य प्रैषोत्तरयर्चा यजति । ऋगुत्तरेण वा प्रैषेण १५ अश्विना पिबतं सुतं दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा । ऋतुना सोमं पिबतं वौषडिति यद्यव्यूढः १६ ब्यूढे त्ववर्ञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् । पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू । ऋतुना सोमं पिबतं वौषडिति तस्य प्रचरितं मरुत्वतीयैर्भवति १७

इति सप्तमी कण्डिका

अगृहीतो माहेन्द्रः १ अथ प्रतिप्रस्थातोत्तरेणाग्नीध्रमुदीचीं तन्तिं वितत्य तस्यां वत्सान्बध्नाति २ दक्षिणेन मार्जालीयं मातृरुपरुन्धन्ति ३ बर्हिःस्थानेऽद्भिर्दूर्वावास्ताभिर्माहेन्द्रस्य स्तोत्रमुपाकरोति ४ उपाकृतं सामाप्रस्तुतं भवति ५ अथैतान्वत्सान्मातृभिः संसृज्य सांवाशिनं कुर्वन्ति ६ ता अग्रेण

सदोऽपरेणाग्नीध्रमुदीचीनं दक्षिणापथेनातिविच्छयन्ति ७ संतिष्ठते पृष्ठ्यः षडहण् ८ संस्थिते घृतं मधु वा प्राश्नन्ति ९ यथोहुषो वहं प्रत्यञ्चयात्ता-दृक्तदिति विज्ञायते १० ततस्त्रींश्छन्दोमानुकथ्यानन्वहमुपयन्ति । चतु-र्विंशं चतुश्चत्वारिंशमष्टाचत्वारिंशमिति ११ रथंतरसामा प्रथमः । बृह-द्रथंतरसामा द्वितीयः । बृहत्सामा तृतीयः १२

इत्यष्टमी कण्डिका

ततो दशममहरविवाक्यमुपयन्ति । चतुर्विंशमग्निष्टोमं रथंतरसामनम् १ नात्र कश्चन कस्मैचनोपहताय व्याहते २ ये बाह्या दृशीकवः स्युस्ते विब्रू-युः ३ यदि तत्र न विन्देयुरन्तःसदसाद्व्युच्यम् ४ यदि तत्र न विन्देयुर्गृ-हपतिना व्युच्यम् ५ तद्व्युच्यमेवेत्यन्ततो वदति ६ अनुष्टुभा व्याहेति विज्ञायते ७ अनुष्टुभमुक्त्वाथ तद्ब्रूयात् ८ यस्मिन्नुपहतः स्यादनुष्टुभा वा एतत्संपादयति ९ द्वयीरेतदहः समिध आहरन्ति । नित्या औदुम्बरीश्च १० अभ्यादधति नित्याः ११ उत्तरेणाहवनीयमौदुम्बरीरुपसादयन्ति १२ अथ समन्वारब्धेषु द्वाभ्यां गार्हपत्ये जुहोति । अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् । इह रतिरिह रन्तिरिह रमतिरिह रमध्व-मिह वो रमतिः स्वाहेति १३ उपसृजन्धरुणमित्येताभ्यामथाहवनीयं गत्वा १४ अतिच्छन्दसोपतिष्ठन्तेऽयं सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्वि-धर्मा । ब्रध्नः समीचीरुषसः समैरयत् । अरेपसः समोकसः सचेतसः सरेतसः स्वसरे मन्युमन्तश्चिदाकोरिति १५

इति नवमी कण्डिका

ततः प्राजापत्याय मनोग्रहाय संप्रसर्पन्ति १ प्रसृप्तेषूपांशुपात्रेण गृह्णात्यनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामीति २ आकाशा-द्गृह्णीयादित्येकम् । तार्तीयसवनिकस्य सोमस्य परिशाययेद्यावन्तमेकस्मै चमसगणाय सग्रहायाप्तं मन्येतेत्यपरम् ३ मनसा स्तोत्रोपाकरणः प्रस्ताव उद्गीथः प्रतिहारश्च ४ मनसा तिसृणां सर्पराज्ञीनां षट्कृत्वः प्रतिगृणाति यद्यर्धर्चशः शंसति । नवकृत्वो यदि पच्छः ५ होता चतुर्होतॄन्व्याचष्टे ६ ओमिति दशहोतुः प्रतिगरः । तथेति चतुर्होतुः । ओमिति पञ्चहोतुः ।

तथेति षड्ढोतुः । अरात्स्म होतरिति सप्तहोतुः ७ मनसाश्रुतप्रत्याश्रुते या-ज्या वषट्कारानुवषट्कारौ च ८ मनसा हुत्वा हरति भक्षम् ९ ते यत्स-मीक्षन्ते स समुपहवः १० मनसा भक्षयन्ति ११ ब्रह्मवाद्यं वदन्तीति वि-ज्ञायते १२ विनिविश्य कथा स्यादित्येकम् । गृहपतिमेव महर्त्विजः प-र्युपविश्य पृच्छेयुरित्यपरम् १३ तमध्वर्युः पृच्छति १४

इति दशमी कण्डिका

यद्दशहोतारः सत्रमासत केन ते गृहपतिनार्ध्नुवन्केन प्रजा असृजन्तेति १ प्रजापतिना वै ते गृहपतिनार्ध्नुवंस्तेन प्रजा असृजन्तेति प्रतिवचनः २ ब्रह्मा पृच्छति यच्चतुर्होतारः सत्रमासत केन ते गृहपतिनार्ध्नुवन्केनौषधीरसृजन्तेति ३ सोमेन वै ते गृहपतिनार्ध्नुवंस्तेनौषधीरसृजन्तेति प्रतिवचनः ४ होता पृ-च्छति यत्पञ्चहोतारः सत्रमासत केन ते गृहपतिनार्ध्नुवन्केनैभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त केनैषां पशूनवृञ्जतेति ५ अग्निना वै ते गृहपतिनार्ध्नुवंस्तेनै-भ्यो लोकेभ्योऽसुरान्प्राणुदन्त तेनैषां पशूनवृञ्जतेति प्रतिवचनः ६ होत्रकाः पृच्छन्ति यत्षड्ढोतारः सत्रमासत केन ते गृहपतिनार्ध्नुवन्केनर्तूनकल्पयन्तेति ७ धात्रा वै ते गृहपतिनार्ध्नुवंस्तेनर्तूनकल्पयन्तेति प्रतिवचनः ८ उद्गाता पृच्छति यत्सप्तहोतारः सत्रमासत केन ते गृहपतिनार्ध्नुवन्केन सुवरायन्केने-मांल्लोकान्समतन्वन्निति ९ अर्यम्णा वै ते गृहपतिनार्ध्नुवंस्तेन सुवरायंस्ते-नेमांल्लोकान्समतन्वन्निति प्रतिवचनः १० अपि वा यदे वैतत्तुष्णीकं मानसं तस्यैष वादः ११ यद्वा होता चतुर्होतॄन्व्याचष्टे १२ प्रजापतिं परिवदन्तीति विज्ञायते १३

इत्येकादशी कण्डिका

अकुशलो वा अयं प्रजापतिर्यो दंशमशकान्ससृजे य स्तेनानिति प्रजापतिप-रिवादः १ अपि वा प्रजापतिपरिवादान्मन्त्रानधीयते २ ते प्रत्येतव्याः । यदरण्यानि प्रजापतिः पुरश्च ससृजे गिरीन् । कर्तानि च न तद्भद्रं यद्भद्रं तन्म आसुव । यदूषा तमसा युक्ता दिने तेद्विणष्ठमातपत् । अभ्भश्चात्यति घर्मश्च तथा तप्ते प्रजापतेः । यत्स्तेनान्यद्वृकान्दंशान्मशकान्यदघायवः । तदु ते वृजिनं त्वेतद्वतमेतन्न मे मतम् । प्रजापतिं दशममहर्भजध्वं मतिं

कवीनामृषभं जनानाम् । स सुष्टुतिं सुद्रविणं दधानः पूतो विपाप्मा वि-
जहाति लोक इति ३ अथ वरं वृणीतेऽदो नोऽस्त्विति यत्कामयते । उत
वै ब्राह्मणोऽनेककामो भवति ४ भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सु-
वीरो वीरैः सुवर्चा वर्चसा सुपोषः ह्पोषैरित्येतद्विदधाति ५ चतुर्होतॄन्व्या-
ख्याय द्वारौ संवृत्य यथाधिष्णियं पत्नीर्व्यासाद्याथाभ्यो वाचमुपाकरोति ६
इह धृतिरिह स्वधृतिरिह रन्तिरिह रमतिरित्यौदुम्बरीं परिष्वज्योदरैरुपस्पृश-
न्तो वाग्यतास्तिष्ठन्ति ७ अधिवृक्षसूर्ये प्राञ्चः समन्वारब्धाः सर्पन्ति ८
युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम्
। दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकं शत्रून्परि शूर विश्वतो दर्मा
दर्षीष्ट विश्वत इत्युत्तरेण हविर्धानं दक्षिणैर्हस्तैः कटांस्तेजनीर्वा निषेवमाणाः
प्राञ्चो गत्वा पञ्च वचांसि व्याहरन्ति वाग्वागैतु वागुपैतु वाक् समैतूप मैतु
वाग्भूर्भुवः सुवरिति ९ अह्ना रात्रिं ध्यात्वाधिवृक्षसूर्ये सुब्रह्मण्यया वाचं
विसृज्यौदुम्बरीः समिध आदधाति १० संतिष्ठते दशममहः ११

इति द्वादशी कण्डिका

प्रायणीयवदुदयनीयमुपयन्ति १ नात्राहीनसंततयो भवन्ति २ यत्पूर्वस्मि-
न्नहन्युत्तरस्मा अह्ने क्रियते ता अहीनसंततयः ३ सत्रं चेद्वपनकाले सशि-
खानि वपन्ते ४ उदवसानीययेष्ट्वान्यानृत्विजो वृत्वा पृष्ठशमनीयेन यजन्ते
ज्योतिष्टोमेनाग्निष्टोमेन सहस्रदक्षिणेन ५ अथ ग्रहक्लृप्तिः ६ प्रायणीयो-
दयनीययोर्दशमेऽहन्निति पृश्निप्राणग्रहान्गृह्णाति । व्यतिषङ्गं सोममानैः ७
प्राकृतं यजुर्मानमनुद्रुत्य वायुरसि प्राणो नामेति दशभिः पृश्निग्रहाणां मन्त्रै-
र्दश मानानि मिमीते ८ उत्तरं यजुर्मानमनुद्रुत्यायं पुरो भुव इति दशभिः
प्राणग्रहाणां मन्त्रैर्दश मानानि मिमीते ९ एवमुत्तराणि मानानि व्यतिषजति
१० नवनवांशवो दश मन्त्राः ११ अपि वा नवभिर्नवभिर्मिमीते १२ अ-
वशिष्टा विकल्पार्थाः १३ अपि वा मानमनुद्रुत्य पृश्नी अथ प्राणेन निवपेत्
१४ अथ प्राणं मानं पृश्निभ्यां निवपेत् १५ अथ पृश्नी प्राणं मानेन निव-
पेत् १६ एवं विहितावुत्तरौ पर्यायौ १७ यः प्रथमः स चतुर्थः । यो द्वि-
तीयः स पञ्चमः १८ नवनवांशून्गृह्णाति १९ उत्तरेषु त्रिषु पृष्ठाहःसु त्रीन-
तिग्राह्यान्गृह्णाति आग्नेयमेकविंश ऐन्द्रं त्रिणवे सौर्यं त्रयस्त्रिंशे २० पूर्व-

स्मिंस्त्र्यहे वाजसनेयिनः समामनन्ति २१ यत्र गौरिवीतं साम तद्बहूनति-ग्राह्यान्गृह्णाति २२

इति त्रयोदशी कण्डिका

त्र्यनीकां व्याख्यास्यामः १ ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः २ ग्रथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः । ग्रथ शुक्राग्रम् । ग्रथा-ग्रयणाग्रम् ३ एवंविहिता त्रिस्त्र्यनीका परिवर्तते यद्यव्यूढः ४ व्यूढे त्वै-न्द्रवायवाग्रौ प्रायणीयोदयनीयौ । ग्रथेतरेषां दशानामैन्द्रवायवाग्रं प्रथम-महः । ग्रथ शुक्राग्रम् । ग्रथ द्वे ग्राग्रयणाग्रे । ग्रथैन्द्रवायवाग्रम् । ग्रथ द्वे शुक्राग्रे । ग्रथाग्रयणाग्रम् । ग्रथ द्वे ऐन्द्रवायवाग्रे ५ ग्रथ प-शुक्लृप्तिः ६ ग्राग्नेयं प्रायणीय ग्रालभन्ते । श्वो भूते सारस्वतीं मेषीम् ७ एवंविहितानैकादशिनानन्वहमालभन्ते ८ ग्राग्नेयमुदयनीये । ऐन्द्राग्नं वा ९ सौर्यं ब्रह्मवर्चसकामः १० यदि यूपैकादशिनी स्यादन्वहमेकैकशो यू-पान्संमिनुयात् । सर्वान्वौपवसथ्ये ११ ग्रहरहरुपशय उपावर्तते १२ ग्रग्निष्ठ उदयनीये पशुमुपाकरोति १३ द्वादशाग्निष्टोमा रथंतरसामानः १४ स भरतद्वादशाहः १५

इति चतुर्दशी कण्डिका

गवामयनेन प्रजां भूतिं भूमानं गच्छन्त्यभि स्वर्गं लोकं जयन्त्येषु लोकेषु प्र-तितिष्ठन्ति १ तस्य द्वादशाहेन सत्त्रभूतेन कल्पो व्याख्यातः २ सप्तदशैके दीक्षाः समामनन्ति ३ संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नि-त्युक्तम् ४ चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन् ५ माघ्या इत्याश्मरथ्यः । चैत्र्या इत्यालेखनः ६ समानमा प्रायणीयात् ७ प्रायणीयमतिरात्रमुपेत्य चतुर्विंशमुकथ्यमारम्भणीयमुपयन्ति ८ ते द्वे शये ग्रहनी भवतः ९ ग्र-थाभिप्लवं षडहमुपयन्ति । ज्योतिषमग्निष्टोमं रथंतरसामानम् । गामुक्थ्यं बृहत्सामानम् । ग्रायुषमुक्थ्यं रथंतरसामानम् । गामुक्थ्यं बृहत्सामानम् । ग्रायुषमुक्थ्यं रथंतरसामानम् । ज्योतिषमग्निष्टोमं बृहत्सामानम् १० ए-वंविहितांश्चतुरोऽभिप्लवानुपयन्ति । पृष्ट्यं षडहं समासे ११ एवं विहि-तान्पञ्च मासानुपयन्ति १२ ततः संभार्यम् १३ त्रीनभिप्लवान् । पृष्ट्यं

षडहम् । अभिजितमग्निष्टोमम् । त्रीन्परःसाम्न उक्थ्यानग्निष्टोमान्वा । परे द्वे शये अहनी १४ इति षण्मासाः १५ ततो विषुवन्तमुपयन्त्येकविं-शमग्निष्टोमं दिवाकीर्त्यसामानम् १६ तस्योदित आदित्ये प्रातरनुवाकमुपा-करोति १७ दिवाकीर्त्यमेतदहर्भवति १८ उत्तरे पक्ष आवृत्ता गणा अन्यत्र द्वादशाहीयाद्दशरात्रात् १९ ततस्त्रीनर्वाक्साम्न उक्थ्यानुपयन्ति । अग्नि-ष्टोमान्वा २० विश्वजितमग्निष्टोमम् २१ तानि चत्वारि शयान्यहानि २२ आवृत्तं पृष्ट्यं षडहमुपेत्य चतुरोऽभिप्लवानावृत्तान्समासे २३ एवंविहिता-न्पञ्च मासानुपयन्ति २४

इति पञ्चदशी कण्डिका

ततः संभार्यम् १ द्वावभिप्लवौ । गोआयुषी । द्वादशाहस्य दशाहानि । पराणि चत्वारि शयान्यहानि । महाव्रतमतिरात्रश्च २ इति द्वादश मासाः ३ इति शाट्यायनकम् ४ अथ ताण्डकम् ५ उत्तरस्य पक्षस उपरिष्टा-द्विश्वजित आवृत्तं पृष्ट्यं षडहमुपेत्य त्रीनभिप्लवानावृत्तान् ६ तानि सह पू-र्वैरष्टाविंशतिः शयान्यहानि ७ आवृत्तं पृष्ठ्यं षडहमुपेत्य
चतुरोऽभिप्लवा-नावृत्तान्समासे ८ एवंविहितांश्चतुरो मासानुपयन्ति ९
ततः संभार्यौ १०
त्रयोऽभिप्लवा आयुर्गौर्द्वादशाहस्य दशाहानि ११ पराण्यष्टाविंशतिः श-यान्यहानि महाव्रतमतिरात्रश्च १२ इति द्वादश मासाः १३ इति ताण्डकम् १४ अथ भाल्लविकम् १५ पूर्वस्य पक्षसः पुरस्तादुत्तमात्पृष्ठ्यादभिजित-मग्निष्टोमम् १६ उत्तरस्य पक्षस उपरिष्टात्प्रथमात्पृष्ठ्याद्विश्वजितमग्निष्टोमम् १७ समानमितरच्छाट्यायनकेन १८ अपि वा संवत्सरं संपाद्योत्तमे मासि द्वादशाहीये दशरात्रे सकृत्पृष्ठान्युपेयुः १९ तत्र पृष्ठ्यानां स्थानेऽभिप्लवा निधीयेरन् २० उपरिष्टाद्द्वादशाहीयाद्दशरात्रान्महाव्रतम् २१

इति षोडशी कण्डिका

ततो महाव्रतमुपयन्ति पञ्चविंशमग्निष्टोमम् १ अनु श्लोकेन स्तुवते २ न-वभिरैन्द्रीभिरप्रतिहृताभिरध्वर्युरुद्गायति । न वा ३ भद्रं साम पत्नय उप-गायन्ति ४ तस्य प्रचरितं मरुत्वतीयैर्भवति ५ अगृहीतो माहेन्द्रः ६ अथ

प्रतिप्रस्थाता महाव्रतिकानि शिल्पानि व्यायातयति ७ औदुम्बरस्य वीणादण्डस्य दशातिमथितानि ८ एकैकस्मिन्नतिमथिते दशदश मौञ्जांस्तन्तून्प्रवयति ९ स वाणः शततन्तुः १० अथैकेषाम् । भूस्त्रयस्त्रिंशत्तन्तव इति त्रयस्त्रिंशतमध्वर्युः प्रतनोति । भुवस्त्रयस्त्रिंशत्तन्तव इति त्रयस्त्रिंशतं होता । सुवस्त्रयस्त्रिंशत्तन्तव इति त्रयस्त्रिंशतमुद्गाता । गृहपतिरुत्तमम् ११ औदुम्बरीमासन्दीमुद्गात्र उपनिदधाति मौञ्जविवानामध्यधि होतृषदने १२ औदुम्बरं प्लेङ्खं होत्रे प्रबध्नाति मौञ्ज्या रज्ज्वा १३ औदुम्बरे फलके अध्वर्यव उपनिदधाति । कूर्चौ वा १४ कूर्चेषु होत्रका उपगातारः पत्नय इत्यासते १५ निकल्पन्ते पत्नयोऽपाघाटलिकास्तम्बलवीणाः पिच्छोला इति १६ निकल्पन्ते वीणावादाः शङ्खान्नाळीस्तूणवानिति १७ निकल्पेते ब्रह्मचारी पुंश्चली चाग्रेण सदसो दक्षिणां द्वार्बाहुमार्तिष्यमाणौ १८ उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै मागधाय च परिश्रयन्ति १९

इति सप्तदशी कण्डिका

दिक्षु दुन्दुभीन्प्रबध्नन्ति । स्रक्तिषु वा महावेदेः १ अपरेणाग्नीध्रं भूमिदुन्दुभिमवटं खनन्ति । अर्धमन्तर्वेद्यर्धं बहिर्वेदि २ तमार्द्रेण चर्मणोत्तरलोम्नाभिवितत्य शङ्कुभिः परिणिहत्यात्रैतत्पुच्छकाण्डमाहननार्थं निदधाति ३ अग्रेणाग्नीध्रं शूद्रार्यौ निकल्पेते चर्मकर्ते व्यायंस्यमानौ ४ उत्तरेणाग्नीध्रं कटसंघाते तेजनसंघाते वार्द्रं चर्म व्यधनार्थं वितत्योच्छ्रयन्ति ५ अग्रेणाहवनीयं रथेषु कवचिनः संनह्यन्ते ६ मार्जालीयन्यन्तेऽष्टौ दासकुमार्य उदकुम्भैर्निकल्पन्ते ७ वाग्भद्रं मनो भद्रं मानो भद्रं तन्नो भद्रमिति त्रिः पर्वयेत् ८ कटशलाकयेक्षुकाण्डेन वेणुकाण्डेन वेतसकाण्डेन वा वाणं संह्लाद्य तेन माहेन्द्रस्य स्तोत्रमुपाकरोति ९ उद्गाता वादयतीति विज्ञायते १० तमुद्गाता प्रस्तोत्रे प्रयच्छति । तं सोऽध्वर्यवे । तमध्वर्युरन्यस्मै ११ तं सोऽग्रेण सदसो दक्षिणां द्वार्बाहुं प्रतिवादयन्नास्ते १२

इत्यष्टादशी कण्डिका

उपाकृते माहेन्द्रस्य स्तोत्रे सर्वा वाचो वदन्ति १ उत्क्रोदं यजमानाः कुर्वते २ अपाघाटलिकास्तम्बलवीणाः पिच्छोला इति पत्नयो वादयन्ति ३ सं-

प्रवदन्ति वीणावादाः शङ्खान्नाळीस्तूणवानिति ४ ऋतीयेते ब्रह्मचारी पुंश्चली च दक्षिणां द्वार्बाहुमाश्लिष्यमाणौ ५ संवर्त्तेते पुंश्चलीमागधश्च ६ आजिं धावन्ति ७ दुन्दुभीन्समाघ्नन्ति । पुच्छकाण्डेन भूमिदुन्दुभिम् ८ शूद्रार्यौ चर्मकर्ते व्यायच्छेते आर्द्रे श्वेते परिमण्डले । अन्तर्वेदि ब्राह्मणो बहिर्वेदि शूद्रः ९ आक्रोशति शूद्रः । प्रशंसति ब्राह्मणः १० इमेऽरात्सुरिमे सुभूतमक्रन्निति ब्राह्मणः । इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति शूद्रः ११ तं ब्राह्मणः संजित्याग्नीध्रे चर्माध्यस्यति १२ विपरियान्त्येतच्चर्म कवचिनः १३ तेषामेकैकं संशास्ति मापरात्सीर्मातिव्यात्सीरिति १४ तते विद्ध्या नातिपातयन्ति १५ राजपुत्रा विध्यन्तीत्येकेषाम् १६ उदञ्चोऽपरिमितमध्वानं यात्वा प्रत्यायाय विमुञ्चन्ति १७ अत्रैता दासकुमार्य उदकुम्भानधिनिधाय त्रिः प्रदक्षिणं मार्जालीयं परिनृत्यन्ति दक्षिणान्पदो निघ्नन्तीरिदंमधुं गायन्त्यः १८ इदमेव सारघं मध्वयं सोमः सुतो इह । तस्येह पिब तातृपुर्हैमहा इदं मध्विदं मध्वित्येव गायेयुरित्याश्मरथ्यः १९ अथालेखनः २०

इत्येकोनविंशी कण्डिका

हिल्लुकां द्वे गायेताम् । हिम्बिनीं द्वे । हस्तावारां द्वे । संवत्सरगाथां द्वे १ वाग्वेद हिल्लुकां सैनां गायतु प्राणस्य वादिते । सेमान्गीता यजमानानिहावतु । वाग्वेद हिम्बिनीं सैनां गायतु प्राणस्य वादिते । सेमान्गीता यजमानानिहावतु । वाग्वेद हस्तावारां सैनां गायतु प्राणस्य वादिते । सेमान्गीता यजमानानिहावत्विति २ ततः सम्वत्सरगाथा । गाव एव सुरभयो गावो गुल्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीः । ननु गावो मङ्कीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वतीं नदीं प्राचीश्चोज्ञगाहिरे । इमा वयं प्लवामहे शम्याः प्रतरतामिव । निकीर्य तुभ्यं मध्य आकर्श्ये शर्श्यो यथा । यदा भङ्ग्यश्विनौ वदत ऋत पर्णक योऽवधीः । आविष्कृतस्य दूषणमुभयोरकृतस्य च । यदा राखाट्यौ वदतो ग्राम्यमङ्कीरदाशकौ । क्षेमे व्यृद्धे ग्रामेणा नड्वांस्तप्यते वहन् । इदं कल्माष्यो अपिबन्निदं सोमो असूयत । इदं हिरण्यैः खीला आवायन्साक्थिभञ्जनम् ३ हैमहा इदं मधु हिल्लु हिल्ल्विति सर्वासामृगन्तेषु समयः ४ अत्रैता दासकुमार्य उदकुम्भानुपनिनीय यथार्थं गच्छन्ति ५ मा-

हेन्द्रस्य स्तुतमनु घोषाः शाम्यन्ति ६ अर्कः पवित्रं रजसो विमानः पुनाति देवानां भुवनानि विश्वा । द्यावापृथिवी पयसा संविदाने घृतं दुहाते अमृतं प्रपीने । पवित्रमर्को रजसो विमानः पुनाति देवानां भुवनानि विश्वा । सुवर्ज्योतिर्यशो महदशीमहि गाधमुत प्रतिष्ठामिति फलके कूर्चौ वाधिरुह्याध्वर्युः शस्त्रं प्रतिगृणाति ७ संतिष्ठते महाव्रतम् ८

इति विंशी कण्डिका

व्याख्यात उदयनीयः पृष्ठशमनीयश्च १ अथ ग्रहक्लृप्तिः २ त्रिषु परःसामसु त्रीनतिग्राह्यान्गृह्णाति ३ उपयामगृहीतोऽस्यग्नयस्त्वौषधीभ्यो जुष्टं गृह्णामीति प्रथमेऽहनि गृह्णाति । ओषधीभ्यस्त्वा प्रजाभ्य इति द्वितीये । प्रजाभ्यस्त्वा प्रजापतय इति तृतीये ४ एतानेवावृतानर्वाक्सामसु ५ तानूर्ध्वानावृत्तांश्च विषुवति ६ तेषां मध्ये सौर्यमुदु त्यं जातवेदसमिति ७ एतस्मिन्नेवाहनि वैश्वकर्मणमतिग्राह्याणामष्टमं गृह्णाति वाचस्पतिं विश्वकर्माणमूतय इति ८ श्वो भूत आदित्यं महीमू षु मातरमिति ९ तावेवमेव व्यत्यासं गृह्णात्या महाव्रतात् १० तौ सह महाव्रते । प्राजापत्यं च पञ्चपात्रम् ११ त्रयस्त्रिंशतमेतदहरतिग्राह्यान्गृह्णाति १२ दशाग्नेया दशैन्द्रा दश सौर्या वैश्वकर्मन आदित्यः पञ्चपात्र इति त्रयस्त्रिंशत् १३ अतिग्राह्यायतने चत्वार्यतिग्राह्यपात्राणि प्रतिदिशं निहितानि भवन्ति । मध्ये पञ्चमम् १४ पूर्वार्धे गृह्णाति १५ इन्द्रमिद्गाथिन इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वार्कवते जुष्टं गृह्णामीति गृहीत्वैष ते योनिरिन्द्राय त्वार्कवत इति सादयति १६ एवं सर्वत्र ग्रहनसादनौ संनमति १७ अभि त्वा शूर नोनुम इति दक्षिणार्धे १८

इत्येकविंशी कण्डिका

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः । यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु । आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करदिति पश्चार्धे १ त्वामिद्धि हवामह इत्युत्तरार्धे २ तदिदास भुवनेषु ज्येष्ठं यतो यज्ञ उग्रस्त्वेषनृम्णः । सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमा इति मध्यमे ३ तानन्यस्मिन्पात्र आनीय सर्वान्मध्यमे गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्व इति ४ अथैकेषाम् । यन्नाना जुहुयादात्मनो

ऽङ्गानि विच्छिन्द्यात् । यत्समाहृत्याहुतीः संरुन्ध्यात्तदनु यजमानाः संरुन्ध्येरन् । स्तोका एवात्मन्प्रत्यानीय होतव्याः । प्रत्यहाङ्गानि ददाति नाहुतीः संरुणद्धि न यज्ञं विच्छिनत्तीति विज्ञायते ५ तं भक्षयति महस्ते भक्षयामि बर्गं ते भक्षयामि भुजं ते भक्षयाम्यन्नाद्यं ते भक्षयामीति ६ त्र्यनीकां व्याख्यास्यामः ७ ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रम् ८ एवंविहिता त्र्यनीका परिवर्तत इत ऊर्ध्वा प्राग्विषुवतः ९ ऊर्ध्वं विषुवत आवृत्तावृत्तेषु १० शुक्राग्रो विषुवान् ११ अथ पशुक्लृप्तिः १२ आग्नेयं प्रायणीय आलभन्ते । श्वो भूते सारस्वतीं मेषीम् १३ एवंविहितानैकादशिनानन्वहमालभन्ते १४

इति द्वाविंशी कण्डिका

सौर्यं विषुवत्युपालम्भ्यम् १ तेषामेवमुपाकुर्वतां द्वादशाहीयस्य दशरात्रस्य सप्तदश उक्थ्ये द्वात्रिंशतमेकादशिन्योऽपवृज्यन्ते २ नवाहान्यतिरिच्यन्ते ३ तेषु गव्यानतिरिक्तपशूनालभन्ते । वैष्णवं वामनमेकविंशे । ऐन्द्राग्नं त्रिणवे । वैश्वदेवं त्रयस्त्रिंशे । द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे । तस्या एव वायव्यं वत्सं मध्यमे । आदित्यामविं वशामुत्तमे । मैत्रावरुणीमविवाक्ये । प्राजापत्यमृषभं तूपरं महाव्रते । आग्नेयमुदयनीये ४ इति पालिङ्गायनिकाः ५ अथ काठकाः ६ ऐकादशिनान्प्रतिविभज्याप्रतिविभज्य वा प्रायणीयोदयनीययोरालभन्ते ७ आग्नेयमन्तर्धौ रथंतरपृष्ठेष्वैन्द्रं बृहत्पृष्ठेषु ८ अपि वाग्नेन्द्रं रथंतरपृष्ठेष्वैन्द्राग्नं बृहत्पृष्ठेषु ९ तेष्वेव नवसु गव्यान् १० तत्र विकारः ११ बार्हस्पत्यं शितिपृष्ठं त्रयस्त्रिंशे । वाचे पृश्निमुत्तमे । वैश्वकर्मणमृषभं तूपरं महाव्रते द्विरूपमुभयतएतम् १२ क्रतुपशूनेव समभ्युच्चयवदन्वहमालभेरन्यदि विभवः पशवः स्युः । ऐकादशिनान्वा विहृतानिति वाजसनेयकम् १३ ऐन्द्राग्नं वा सर्वत्र १४

इति त्रयोविंशी कण्डिका

उत्सर्गिणामयनं गवामयनं गुणविकृतम् १ उत्सृज्यां३ नोत्सृज्या३मित्युक्तम् २ यद्यहान्युत्सृजेयुः प्रथमं पृष्ठ्यं संस्थाप्यापरस्मा अह्ने वसतीवरीः परिहृत्य वसतीवरीषु मृत्पिण्डमवधायैन्द्रं सांनाय्यं निरुप्योपवसन्ति ३ श्वो भूतेऽह-

रुत्सृज्य प्राजापत्यं पशुमालभन्ते ४ तस्य यथाकालं वपया प्रचर्याग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपत्यैन्द्रं च दधि ५ तयोः समानं स्विष्टकृदिडम् ६ उपहूतायामिडायां सांनाय्यं समुपहूय भक्षयन्ति ७ माध्यंदिनकाले पशुपुरोडाशेन प्रचर्येन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपत्यैन्द्रं च चरुम् ८ हविराहुतिप्रभृतीडान्तं संस्थाप्य तृतीयसवनकाले पशुना प्रचर्य वैश्वदेवं द्वादशकपालं निर्वपति वैश्वदेवं च चरुम् ९ पूर्ववद्धविषी संस्थापयेत् १० ग्रपि वा सवनीयानेव पुरोडाशानेतेषां हविषां स्थाने । ग्रध्वरकल्पान्वा ११ ग्रग्नीदौपयजानङ्गारानाहरेत्येतदादि पाशुकं कर्म प्रतिपद्यते १२

इति चतुर्विंशी कण्डिका

एवमत ऊर्ध्वं षडहैर्मासान्संपाद्य सप्तममुत्सृज्यैतत्कुर्वन्ति १ पञ्च ज्योतींषि प्राग्विषुवत उत्सृज्यन्ते २ चत्वारस्त्रयस्त्रिंशा उपरिष्टादेकं च ज्योतिः संभार्ये ३ प्रथमसप्तमयोरेव नोत्सृजेयुरित्येके ४ ग्रथैकेषाम् । यान्यहान्युत्सर्गप्राप्तान्येकत्रिकस्तोत्राण्येव स्युः ५ एकैकां वैषां स्तोत्रीयामुत्सृजेयुः । उक्थानि वा ६ संवत्सरस्योत्तमेऽहन्नेकामेव स्तोत्रीयामुत्सृजेयुः । तदुत्सृष्टं चानुत्सृष्टं च भवतीति ७ ग्रथैकेषाम् । यदहरुत्सृजेयुस्तदेव श्वो भूत उपेयुः ८ तदु तथा न कुर्यात् विकस्तिः सा संवत्सरस्य भवतीति ९ ग्रवभृथादुदेत्य तान्येवोपेयुः १० द्वादश यद्यमावास्यायामुत्सृजेयुः । यद्युभयत्र चतुर्विंशतिः ११ तदेतत्पौत्रीयं पशव्यमायुष्यं स्वर्ग्यम् १२ संतिष्ठत उत्सर्गिणामयनमुत्सर्गिणामयनम् १३

इति पञ्चविंशी कण्डिका

इत्येकविंशः प्रश्नः

एकाहेष्वहीनेष्विति प्राकृतीर्दक्षिणा ददाति । यथासमाम्नातं वा १ सर्वक्रतूनां प्रकृतिरग्निष्टोमः । निकायिनां तु प्रथमः सर्वत्र । यथादिष्टं वा २ ज्योतिर्गौरायुरिति त्रिकद्रुकाः ३ प्रथमोऽग्निष्टोम उक्थ्या वा सर्वे ४ ज्योतिषि सहस्रं ददातीति ५ श्यैतनियमाद्बृहत्पृष्ठः ५ गौर्भ्रातृव्यवतः । ग्रायुः स्वर्गकामस्य । ग्रग्निष्टोमस्तु भ्रातृव्यवतः । विश्वजिदग्निष्टोमः श्रै-

ष्ट्यकामस्य ६ सहस्रं दक्षिणा सर्ववेदसं वा यावतीर्वा क्रतोः स्तोत्रीयाः ७ सर्ववेदसे ज्येष्ठं पुत्रमपभज्य संविदो विपरियाचेत ८ यद्दक्षिणाकाले सर्वस्वं तद्दद्याद्यदन्यद्भूमेः पुरुषेभ्यश्च ९ उत्तमां दक्षिणां नीत्वोदवसाय वा दक्षिणेनौदुम्बरीं प्राङ्ङिनषद्य ब्रूयाद्यन्मेऽद ऋणं यददस्तत्सर्वं ददामीति १० उदवसाय रोहिणीं वत्सच्छवीमिति समानम् ११ इन्द्रस्याभिजिदग्निष्टोमो ऽनभिजितस्याभि-जित्यै १२ उभे बृहद्रथंतरे भवतः परोऽक्षपृष्ठो वा १३ बृहत्तु होतुः पशवश्चैकादशैकयूपे १४ सहस्रं दक्षिणा वराणां वा द्वादशं शतम् १५ सर्वजिताग्निष्टोमेन सर्वमाप्नोति सर्वं जयति १६

इति प्रथमा कण्डिका

अन्नादश्च भवति १ तस्य महाव्रतं पृष्ठ्यमर्क्यं शस्यते २ सहस्रं दक्षिणा विंशतिर्वाष्टाविंशतीनाम् ३ चत्वारः साहस्राः ४ ज्योतिरग्निष्टोमो रथंत-रसामा प्रथमः । प्राणेष्वन्नाद्ये च प्रतितिष्ठति । गौरुक्थ्यो बृहत्सामा द्वि-तीयः । पशुषु प्रतितिष्ठति । सर्वज्योतिरग्निष्टोम उभयसामा तृतीयः । सर्वमाप्नोति सर्वं जयति । त्रिरात्रसंमितोऽग्निष्टोमो बृहत्सामा चतुर्थः । त्रिरात्रस्य फलमाप्नोति ५ चत्वारः साद्यस्क्राः ६ तेषां विशेषः ७ रथं-तरसामा बृहत्सामोभयसामा वा प्रथमः ८ तस्मिन्कामाः स्पर्धायां भ्रातृ-व्यतिस्तीर्षा स्वर्गः पशवो वा ९ तेषां पूर्वेद्युराग्नेयः सौम्यो बार्हस्पत्यश्च पशवः १० तेषामेकादशिन्यां रूपाणि ११ तदलाभ एतासां देवतानाम-ष्टाकपालः प्रथमश्चरू चेतरौ १२ धारयत्याहवनीयम् १३ व्याघारयत्युत्त-रवेदिम् १४ सर्पिष्मदशनम् १५ हिरण्यं मुखे न्यस्यान्तरोरू प्रियायै भा-र्यायै ब्रह्मचारी शेते श्व इष्ट्या पशुना वा यक्ष्य इति १६ ऋत्विजः समोढाः १७ तान्यथालोकं विनिधाय सर्वा दिशः सक्षीरदृतयोऽश्वरथाः सोमप्रवाका विधावन्ति १८ तेभ्यो यन्नवनीतमुदियात्तदाज्येऽवनयेत् १९ चतुर्युजा यो-जने प्राच्यां दिशि । त्रियुजोत्तरतस्त्रिक्रोशे । द्वियुजा पश्चाद्द्विक्रोशे । दक्षिणैकयुक्तेन क्रोशे २० अश्वतरीरथो वैकः २१ प्रदक्षिणं पूर्वेणोत्सर्गः २२ योजनादीनि वाद्विक्रोशानि २३ अश्वरथेन दक्षिणोत्सर्गः २४ त्रिव-त्सः साण्डः सोमक्रयणः २५

इति द्वितीया कण्डिका

उदित आदित्ये दीक्षिते प्रागस्तमयादवभृथः १ उपसत्सु त्रिः संमीलेत् । संमील्य वा प्रचरेत् । अपि वा नापराह्णिक्य उपसदः २ यवोर्वरा वेदिः ३ यवानां खल उत्तरवेदिः ४ आरोहणे हविर्धाने ५ विमितं सदः ६ स्फ्यो यूपः स्फ्याग्रो वा खलेवाली लाङ्गलेषा वा ७ कलापि चषालम् ८ अग्नीषोमीयकाल ईजानस्य गृहाद्वसतीवरीर्गृह्णीयात् ९ सवनीयकाले सह पशूनालभतेऽग्नीषोमीयं सवनीयमनूबन्ध्यां च १० अग्नीषोमीयस्य स्थानेऽग्नीषोमीय एकादशकपालः । अनूबन्ध्यास्थाने मैत्रावरुणयामिक्षा ११ तस्या दक्षिणाकाले सदश्वः श्वेतो दक्षिणा १२ तमाङ्गिरसाय भ्रातृव्याय वा दद्यात् १३ द्वेष्यं वा ब्राह्मणं वृत्वा तस्मा अश्वं रुक्मप्रतिमुक्तं दद्यात् १४ तदलाभे गौः श्वेतः १५ संवत्सरमुपरिष्टात्पादावनेजनं मांसं स्त्रियमनृतमुपरिशय्यामाञ्जनाभ्यञ्जने च वर्जयेत् १६ सा दीक्षा १७ यदि संवत्सरं न शक्नुयाद्द्वादशाहम् १८

इति तृतीया कण्डिका

एतेनोत्तरे व्याख्याताः १ द्वितीयस्य पञ्चदशमग्निष्टोमसाम कृत्वामयाविनमन्नाद्यकामं प्रजाकामं पशुकामं वा याजयेत् २ हीनानुजावरोऽनुक्रिया ३ तस्याष्टादशावुत्तरौ पवमानौ ४ अश्वसादः सोमप्रवाको दधिदृतिश्च त्रिक्रोशेऽन्ततः प्राह ५ स्त्रीगौः सोमक्रयणी ६ प्रक्ष्णुताग्रो यूपः ७ व्रीह्युर्वरा वेदिः ८ व्रीहीणां खल उत्तरवेदिः ९ भारद्वाजो होता १० विश्वजिच्छिल्पश्चतुर्थः सर्वपृष्ठः सर्वस्तोमः सर्ववेदसदक्षिणः ११ सर्वस्यान्नाद्यस्य प्रसवं गच्छति १२ श्येनेनाभिचरन्यजेत १३ रथौ हविर्धाने १४ तैल्वको बाधको वा स्फ्याग्रो यूपः १५ शवनभ्ये अधिषवणफलके भवतः १६ अग्नये रुद्रवते लोहितः पशुः १७ सादयन्त्युपांश्वन्तर्यामौ १८ शरमयं बर्हिः १९ औद्बवः प्रस्तरः २० वैभीतक इध्मः २१ बाणवन्तः परिधयः २२ लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति २३ नवनव दक्षिणाः कूटाः कर्णाः काणाः खण्डा बण्डाः २४ ता दक्षिणाकाले कण्टकैर्वितुदेयुः २५ इच्छन्हन्येतेति रथंतरं पवमाने कुर्याद्बृहत्पृष्ठम् । जीयेतेत्येतद्विपरीतम् २६ परां परावतं गच्छेन्न प्रतितिष्ठेदिति पूर्ववत्प्लवं च

ब्रह्मसाम कुर्यात् २७ प्रजापतेरेकत्रिकोऽग्निष्टोमः सर्वस्य पाप्मनो निर्दिश्य गच्छति २८ चतुर्विंशतिं गा दक्षिणा ददाति २९

इति चतुर्थी कण्डिका

त्रयो वाचः स्तोमाः १ पूर्वावग्निष्टोमौ रथंतरसामानौ । सर्वस्तोमोऽतिरात्र उत्तरः २ तस्मिन्सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि प्रयुज्यन्ते ३ व्रात्यानां प्रवासे व्रात्यस्तोमा उक्थ्या रथंतरसामानः । द्वितीयो वाग्निष्टोमः ४ उष्णीषं प्रतोदो ज्याह्लोडो रथो विपथः फलकास्तीर्णोऽश्वोऽश्वतरश्च युग्यौ कृष्णशं वासः कृष्णबलक्षे अजिने रजतो निष्कः ५ तद्गृहपतेः ६ बलूकान्तानि दामतूषाणीतरेषाम् ७ द्वे द्वे दामनी भवतः । द्वे द्वे उपानहौ ८ द्विषंहितान्यजिनानि ९ त्रयस्त्रिंशतात्रयस्त्रिंशता गृहपतिमभि समायन्ति १० ता दक्षिणा भवन्ति ११ अपि वा षट्षष्टिं गा वन्वीरन् १२ अथो खल्वाहुर्यदेवैषां सातं स्यात्तद्दद्युस्तद्धि व्रात्यधनमिति १३ षट्षोडशी निन्दितानाम् । द्विषोडशी कनिष्ठानाम् । ऊर्ध्वस्तोमो ज्येष्ठानाम् । चतुःषोडशी सर्वेषाम् १४ आदित्यानां प्रयतिरुक्थ्यो नाकसदां प्रथमः १५ व्यावृत्तिं पाप्मना भ्रातृव्येण गच्छन्ति १६ अग्निष्टोमा इतरे । अङ्गिरसां द्वितीयः । साध्यानां तृतीयः । मरुतां चतुर्थेनौजो वीर्यमाप्नोति । त्रयस्त्रिंशः पञ्चमः १७ स्वर्गकामोऽभिभुवा भ्रातृव्यमभिभवति । विनुत्त्या भ्रातृव्यं विनुदते १८

इति पञ्चमी कण्डिका

चितिस्तोमः प्रजननकामः १ गायत्रेणाग्निष्टोमेन रथंतरसाम्ना ब्राह्मणो ब्रह्मवर्चसकामः २ गायत्रावग्निष्टोमौ प्रथमयज्ञौ ३ प्रथमेन ब्राह्मणस्य तेजो ब्रह्मवर्चसम् । द्वितीयेन क्षत्रियस्य राष्ट्रमुग्रमव्यथ्यम् । न तु बहुपशू इव भवतः ४ त्रिवृताग्निष्टुताग्निष्टोमेनापूतो यजेत ५ आग्नेय्यः पुरोरुचः । आग्नेयी सुब्रह्मण्या ६ आग्नेयीषु स्तुवतेऽजा हिरण्यं च दक्षिणा ७ एतमेव चतुष्टोमं कृत्वा श्रोत्रियोऽक्षहतः स्त्रीहतः कामहतश्चरणहतो वा यजेत ८ अश्वः श्यावो दक्षिणा । स ब्रह्मणे देयः ९ एतस्यैव वायव्यासु पञ्चदशमग्निष्टोमसाम कृत्वामयाव्विनमन्नाद्यकामं प्रजाकामं पशुकामं वा याजयेत्

। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामम् । एतमेव चतुष्टोमं कृत्वा ग्रामकामम् १० अप्रवर्ग्या भवन्तीत्येके ११ त्रिवृतान्नाद्यकामः १२ पञ्चदशेन वीर्यकामः १३ सप्तदशेनाग्निष्टुताग्निष्टोमेन यज्ञविभ्रष्टो यजेत यस्मिन्वा क्रतौ विभ्रंशेत १४ त्रिवृदवाद्यं वदतः १५ पञ्चदशो निहत्यस्य निरुक्तः १६ सप्तदशोऽनाश्यान्नस्य भोजने १७ एकविंशो जनं यतो गन्धारिकलिङ्गमगधान्पारस्करान्सौवीरान्वा १८ त्रिणव ओजस्कामः १९ त्रयस्त्रिंशः स्वर्गकामः । अपि वा ज्योतिष्टोम एव २० अग्निष्टोमे सर्वान्कामान्कामयेत २१

इति षष्ठी कण्डिका

चत्वारस्त्रिवृतोऽग्निष्टोमा रथंत्रसामानः १ तेषां प्रथमेनानिरुक्तेन ग्रामकामो यजेत २ निरुक्तं प्रातःसवनमित्येके ३ अश्वः श्वेतो दक्षिणा । स ब्रह्मणे देयः ४ बृहस्पतिसवो द्वितीयः ५ ब्राह्मणो ब्रह्मवर्चसकामः पुरोधाकामो वा यजेत यं वा स्थापत्यायाभिषिञ्चेयुः ६ परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्रः ७ बृहस्पते जुषस्व न इति बार्हस्पत्यमतिग्राह्यं गृह्णाति ८ बार्हस्पत्यः पशुरुपालम्भ्यः ९ प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा व्यादिशति १० आज्येन माध्यंदिने सवने कृष्णाजिन आसीनमभिषिञ्चति शुक्रामन्थिवोर्वा संस्रावेण बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य । धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा न इति ११ अश्वद्वादशा माध्यं दिने । एकादश तृतीयसवने १२ ता उभयीरपाकरोति १३ अपि वाष्टौ प्रातः सवन एकादश माध्यंदिने द्वादश तृतीयसवने । सर्वा वा माध्यंदिने १४ अश्वं तृतीयशोऽनुसवनं नयन्ति १५ अपि वा मनसेतरयोः सवनयोर्ध्यायित् । न वा मनसा चन १६ तृतीयस्येषुं विष्टुतिं कृत्वाभिचरन्यजेत १७ समानमितरच्छ्येनेन १८ अश्वः श्यावो दक्षिणा । स ब्रह्मणे देयः १९ चतुर्थः सर्वस्वारः शुनस्कर्णस्तोमः २० मरणकामो यजेत यः कामयेतानामयता स्वर्गं लोकमियामिति २१ याम्यः पशुः शुकहरित उपालम्भ्यः २२ कृतान्नं दक्षिणा २३ आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं पत्तोदशेनाहतेन वाससा दक्षिणाशिराः प्रावृतः संविशन्नाह ब्राह्मणाः समापयत मे यज्ञमिति २४ तदैव संतिष्ठते २५ भुवो-

क्थ्येन रथंतरसाम्ना भूतिकामो यजेत २६ धेनुर्दक्षिणा २७

इति सप्तमी कण्डिका

अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति १ वैश्वदेवस्य लोके त्रिवृदग्निष्टोमः २ वैश्वदेवः पशुः । बार्हस्पत्यानूबन्ध्या ३ प्रातःसवनीयान्वैश्वदेवहवींष्यनुनिर्वपति ४ समानं तु स्विष्टकृदिडम् ५ न यूपं मिन्वन्ति । नोत्तरवेदिमुपवपन्ति ६ परिधौ पशुं नियुञ्जन्ति । उल्मुके बर्हिषि वा ७ मिन्वन्त्युत्तरेषु यूपान् । उत्तरवेदिमुपवपन्ति ८ ततश्चतुर्षु मासेषु वरुणप्रघासानां लोकेऽग्निष्टोम उक्थ्यः । उक्थ्यावग्निष्टोमौ वा ९ मारुतः पशुः । वारुणो द्वितीये । मैत्रावरुण्यनूबन्ध्या १० वैश्वदेववद्वारुणप्रघासिकानि हवींषि ११ मार्जालीये करम्भपात्रैश्चरन्ति १२ ततश्चतुर्षु मासेषु साकमेधानां लोकेऽग्निष्टोम उक्थ्योऽतिरात्रः १३ आग्नेयः पशुः । ऐन्द्राग्नो द्वितीये । ऐकादशिनास्तृतीये प्राजापत्यो वा । सौर्यनूबन्ध्या १४ आनीकवतः प्रथमेऽहनि प्रातःसवनीयान् । सांतपनो माध्यंदिनीयान् १५ वसतीवरीषु परिहृतासु गृहमेधीयेन चरन्ति १६ उत्तरस्याह्न उपाकृते प्रातरनुवाके पूर्णदर्व्येण चरन्ति १७ क्रैडिनः प्रातःसवनीयान् । स्वातवसो माध्यं दिनीयान् । महाहविस्तार्तीयसवनिकान् १८ सन्नेषु नाराशंसेषु परिश्रिते मार्जालीये पितृयज्ञेन चरन्ति १९ त्रैयम्बकैश्चरित्वा प्रत्येत्यादित्येन चरन्ति २०

इत्यष्टमी कण्डिका

ततश्चतुर्षु मासेषु शुनासीरीयस्य लोके ज्योतिरग्निष्टोमः १ वायव्यः पशुः । आश्विन्यनूबन्ध्या २ वैश्वदेववच्छुनासीरीयहवींषि ३ चातुर्मास्यवदन्तरालव्रतानि ४ सर्वत्राहतं वसानोऽवभृथादुदेति ५ अन्वहं पञ्चाशत्पञ्चाशद्वा दक्षिणा ददाति । द्वादशं शतमुत्तमे ६ यथर्तुजा वा यथास्वं चातुर्मास्येषु । वत्सांस्तृतीयसवने सह मातृभिः ७ उपहव्येनाग्निष्टोमेनानिरुक्तेन ग्रामकामो यजेत ८ निरुक्तं प्रातःसवनमित्येके ९ अश्वः श्वेतो दक्षिणा । स ब्रह्मणे देयः १० ऋतपेयेनाग्निष्टोमेन बृहत्साम्ना स्वर्गकामः ११ षड् दीक्षा नव वा षडुपसदः १२ घृतव्रतो भवति १३ यावत्प्रथममङ्गुलिकाण्डं ता-

वत्क्रीते सोमे व्रतम् १४ उत्तरेणोत्तरेण काण्डेन व्रतमुपैति १५ नक्तमाहवनीयमभ्यावृत्यास्ते । दिवादित्यम् १६ ऋतमुक्त्वा प्रसर्पन्ति । ऋतं वदन्तो भक्षयन्ति १७ औदुम्बरश्चमसश्चतुःस्रक्तिः सोमस्य पूर्णः सगोत्राय प्रियाय ब्रह्मणे देयः १८ बहुहिरण्येनाग्निष्टोमेनानडुहो लोकमाप्नोति ज्योतिष्मतो लोकाञ्जयति १९ द्वादशमानं हिरण्यं दीक्षणीयायां ददाति । द्विस्तावत्प्रायणीयायाम् २० एवमत ऊर्ध्वं द्विगुणाभ्यासेनातिथ्यायामुपसत्प्रयोगेष्व ग्नीषोमीयस्य वपायामग्नीषोमये सवनीयस्य वपायां सवनीये प्रातःसवने २१ सन्नेषु नाराशंसेष्वनडुच्छतमधिकं ददाति २२

इति नवमी कण्डिका

हिरण्यस्रजमुद्गात्रे षट्पुष्करां द्वादशपुष्करां वा यज्ञायज्ञीयस्य स्तोत्रेऽवभृथेष्ट्यामुदयनीयायामनूबन्ध्यायामुदवसानीयायां च १ त्रिवृताग्निष्टुताग्निष्टोमेन रथंतरसाम्ना ब्राह्मणो ब्रह्मवर्चसकामः २ पञ्चदशेनेन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येन बृहत्साम्ना राजन्य वीर्यकामः ३ सप्तदशेनाग्निष्टुताग्निष्टोमेन कण्वरथंतरसाम्ना वैश्यः पशुकामः ४ प्रतिधुषा प्रातःसवन इत्युक्तम् ५ तीव्रसुतोक्थ्येन रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वामयाविनमन्नाद्यकामं प्रजाकामं पशुकामं श्रिया वा प्रत्यवरूढं याजयेत् ६ शतमाशिरे दुहन्ति ७ ता दक्षिणा भवन्ति ८ वैश्यसववच्छ्रयणानि ९ नीतमिश्रेण वा तृतीयसवने १० अभि सोमानुन्नयन्ति ११ अवजिघ्रन्त्यृत्विजो न भक्षयन्ति १२ तानच्छावाकस्य स्तोत्रे भक्षयन्ति १३ ब्रह्मणि होत्रका उपहवमिच्छन्ते १४ उभावध्वर्यू सर्वे चमसाध्वर्यवोऽच्छावाकाय प्रतिगृणन्ति १५ प्राच्येकादशिनी संमीयते १६ यावद्यूपं वेदिमुद्धन्ति १७ वडबा श्वेता गर्भिणी दक्षिणा १८ मरुत्स्तोमेन राजपुरोहितौ सायुज्यम् १९ अथैष राड् । यो राज्यमाशंसमानो न लभेत स एतन २० विराजान्नाद्यकामः । स्वराजा प्रतिष्ठाकामः २१

इति दशमी कण्डिका

बहु प्रतिगृह्य यो गरगीरिव मन्येत स पुनस्तोमेन । अनाश्यान्नस्य वा भुक्त्वा १ अयाज्यं वा याजयित्वेत्येके २ यो लघुरिवाप्रतिष्ठितः स्यात्स

एतेन ३ एकविंशेनो पच्छदेन प्रजाकामः ४ स्तोत्रेस्तोत्र एकैका स्तोत्री-
योपजायते ५ गन्धर्वाप्सरसो मादयन्तामिति प्रातःसवने ६ सन्नेषु नारा-
शंसेष्वधस्तात्पूतनृतोंऽशुमुपास्यति ७ गन्धर्वा देवा मादयन्तामिति माध्यं-
दिने । गन्धर्वाः पितरो मादयन्तामिति तृतीयसवने ८ छदेन भ्रातृव्यवान्
९ स्तोत्रेस्तोत्र एकैका स्तोत्रीयापध्वंसते १० तामस्यापध्वंसमानां भातृव्यो
ऽन्वपध्वंसत इति विज्ञायते ११ सर्वतोमुखेन यः कामयेत सर्वमिदं भवे-
यमिति १२ मध्ये गार्हपत्यः । प्रतिदिशं सौमिका विहाराः । त्रिवृत्प्रा-
च्यां दिशि । पञ्चदशो दक्षिणतः । सप्तदशः पश्चात् । एकविंश उत्तरतः
१३ राशिमरायू चतुष्टोमावन्नाद्यकामस्य १४ धान्यराशिं पूर्वस्मिन्ददाति ।
धान्यमरायुमुत्तरे १५ गोतमचतुष्टोमाभ्यां पशुकामः १६ उक्थ्यः षोडशि-
मानुत्तरः १७ नपुंसकपशू इव भवतः १८ उद्भिद्वलभिद्भ्यां पशुकामः १९
उद्भिदेष्ट्वा संवत्सरे वलभिदा यजेत २० आग्नेयेनाष्टाकपालेनान्तरालं प्रति-
पद्यते २१ उभयत्र गायत्रीः संपूर्णा दक्षिणा ददाति २२

इत्येकादशी कण्डिका

अष्टावष्टौ १ अपचितिकामोऽपचितिभ्याम् २ उभयसामानौ भवतः ३
तयोरश्वरथश्चतुर्युग्दक्षिणा ४ सर्वे शतक्रियोऽश्वाः ५ स रुक्मी प्रावेपी स-
र्वाभरण्यंशुमान् ६ तस्य वैयाघ्रः परिवारो द्वैपो धन्वधिरार्क्षः कवचः ७
अध्यास्थाता संनद्धः संनद्धसारथिरावृतः प्रतिहिताभ्याम् ८ निष्की स्रग्वी
संग्रहीता भवतीति विज्ञायते ९ पक्षिभ्यां साग्निचित्याभ्यां यः कामयेत प-
क्षी ज्योतिष्मतः स्वर्गाल्लोकाननुसंचरेयमिति १० ऋषभेणाग्निष्टोमेन रथं-
तरसाम्ना राजानं संग्रामे संयत्ते याजयेत् ११ यत्तत्र विन्देरंस्ततो द्वादशशतं
दक्षिणा १२ व्योम्ना स्वर्गकामः १३ उभे बृहद्रथंतरे भवतः १४ सर्वः
सप्तदशो भवति १५ एकविंशमग्निष्टोमसाम १६ गोसवेन षट्त्रिंशेनो-
क्थ्येन रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वा स्वाराज्यकामः १७ कण्वरथं-
तरं पवमाने १८ अयुतं दक्षिणा १९ दक्षिणेनाहवनीयमनुद्धते वेद्यै बृहतः
स्तोत्रं प्रत्यभिषिच्यते प्रतिधुषा रेवज्जातः सहसा वृद्धः क्षत्राणां क्षत्रभृत्तमो
वयोधाः । महान्महित्वे तस्तभानः क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा
परमेष्ठिनः स्वाराज्येनाभिषिञ्चामीति २०

इति द्वादशी कण्डिका

तेनेष्ट्वा संवत्सरं पशुव्रतो भवति १ उपवहायोदकं पिबेत्तृणानि चाच्छिन्द्यात् उप मातरमियादुप स्वसारमुप सगोत्राम् २ यत्रयत्रैनं विष्ठा विन्देत्तद्वितिष्ठेत ३ मरुतां स्तोमेनानन्तां श्रियं जयति ४ एतेन द्वौ त्रीन्वा याजयेत् ५ अग्नेः कुलायावन्नाद्यकामस्य ६ इन्द्राग्नियोः कुलायौ स्वर्गकामस्य ७ इन्द्रस्तु-तेन्द्रस्तोमेनोक्थ्येन बृहत्साम्ना राजन्यो वीर्यकामः ८ ऋषभो दक्षिणा ९ इन्द्राग्नियोः स्तोमेन राजपुरोहितावुभावेकर्द्धि याजयेत् १० तेजो ब्रह्मवर्चसं ब्राह्मणस्य । विशं राजा प्रविशति ११ विघनेन वि पाप्मानं भ्रातृव्यं हते । तेन सर्वा मृधो विहते १२ वज्रेण षोडशिनाभिचरन् । संदंशेनाभिच-रन् १३ तयोः श्येनेन कल्पो व्याख्यातः १४ त्रयोदशातिरात्राः १५ ज्योतिषर्द्धिकामः १६ सर्वस्तोमेन बुभूषन् १७ ऐकादशिनाः पशवः १८ यस्मात्पशवः प्र प्रेव भ्रंशेरन्नप्तोर्यामेण । सर्वमाप्नोति सर्वं जयति १९ न-वसप्तदशेन प्रजाकामः २० विषुवता ज्यैष्ठिनेयः । ज्यैष्ठ्यमाप्नोति २१ गोष्टोमेन बुभूषन् २२ आयुषा स्वर्गकामः २३ अभिजिता पशुकामः २४ विश्वजिता भ्रातृव्यवान् २५ त्रिवृतान्नाद्यकामः २६ पञ्चदशेन वीर्यकामः २७ सप्तदशेन प्रजाकामः २८ एकविंशेन प्रतिष्ठाकामः २९

इति त्रयोदशी कण्डिका

द्विरात्रप्रभृतय उपरिष्टादतिरात्रा अहीना ऐकादशरात्रात् १ तेषां द्वादशाहे-नाहीनभूतेन कल्पो व्याख्यातः २ द्विरात्रस्यैन्द्रवायवाग्रं प्रथममहः शुक्रा-ग्रमुत्तरम् ३ त्रिरात्रस्यैतच्चैवाग्रयणाग्रं च ४ चतूरात्रस्यैतच्चैवैन्द्रवायवाग्रं च ५ पञ्चरात्रस्यैतच्चैव शुक्राग्रं च ६ षड्रात्रे द्विः परिवर्तते ७ सप्तरात्र-स्यैतच्चैवैन्द्रवायवाग्रं च ८ अष्टरात्रस्यैतच्चैव शुक्राग्रं च ९ नवरात्रे त्रिः परिवर्तते १० दशरात्रस्यैतच्चैवैन्द्रवायवाग्रं च ११ एकादशरात्रस्यैतच्चैव शुक्राग्रं च १२ द्वादशरात्रे चतुः परिवर्तते १३ षोडशिनो ग्रहणं द्विरात्र-स्योत्तरेऽहन् १४ ग्राह्यो मध्यमे त्रिरात्रस्य । चतुर्थेचतुर्थे चतूरात्रप्रभृतिषु नानाहीनेषु १५ चत्वारो द्विरात्राः १६ व्युष्टिद्विरात्रः प्रथमः । स व्या-ख्यातः १७ आङ्गीरसेन यः पुण्यो हीन इव स्यात्स एतेन १८ ज्योतिष्टो-

मोऽग्निष्टोमः पूर्वः । सर्वस्तोमोऽतिरात्र उत्तरः १९ कापिवनेन यं कामं कामयते तमभ्यश्नुतेऽलूक्षो भवति २० ज्योतिरुक्थ्योऽग्निष्टोमो वा पूर्वः अतिरात्र उत्तरः २१ चैत्ररथेन प्राणेष्वन्नाद्ये च प्रतितिष्ठति २२ अग्निष्टोमः पूर्वः । अतिरात्र उत्तरः २३

इति चतुर्दशी कण्डिका

गर्गत्रिरात्रेण प्रजातिं भूमानं गच्छत्यभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति वसून्रुद्रानादित्यानन्वारोहति १ त्रैधातवीया दीक्षणीया २ रोहिणी वभ्रुर्वा पिङ्गलैकहायनी द्विहायनी वा सोमक्रयणी ३ अग्निष्टोम उक्थ्यो ऽतिरात्रः ४ रथंतरं वामदेव्यं बृहदिति पृष्ठानि ५ सहस्रं दक्षिणा ६ त्रीणि शतानि त्रयस्त्रिंशतं च प्रथमेऽहनि ददाति । एवं द्वितीये तृतीये च ७ साहस्र्यतिरिच्यते रोहिण्युपध्वस्ता द्विरूपोभयत एन्यन्यतरतो वा ८ यैव वरः कल्याणीत्युक्तम् ९ उद्धृष्टिः प्रथमेऽहनि मुख्यः १० तमभिमन्त्रयते त्वमग्न सहस्रमा नयोद्वलस्याभिनत्त्वचम् । स नः सहस्रमा नय प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति ११ वेहद्द्वितीये १२ तामभिमन्त्रयते त्वमपामोषधीनां रसेन रसिनी बभूविथ । सा मा सहस्र आ भज प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति १३ वामनस्तृतीये १४ तमभिमन्त्रयते सहस्रस्य प्रतिष्ठासि वैष्णवो वामनस्त्वम् । स नः सहस्र आ धेहि प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति १५ तामुत्तरेणाग्नीध्रमित्युक्तम् १६

इति पञ्चदशी कण्डिका

दक्षिणेन वा वेदिं नीत्वान्तरा यूपमाहवनीयं च द्रोणकलशमवघ्रापयेदा जिघ्र कलशमिति । आग्नीध्रे हविर्धाने वा १ तामुदीचीमाग्नीध्रं नीत्वा तस्याः पृष्ठे तार्प्यमध्यस्यति २ तस्मिन्धिष्णियानां रूपं विग्रथितं भवति ३ अथ पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादुभा जिग्यथुरिति ४ रूपाणि जुहोति यानि तस्यां भवन्ति ५ आश्वमेधिकान्येके समामनन्ति ६ प्रतीचीं सदसः स्रक्तिमानीय तस्या उपोत्थाय दक्षिणं कर्णमाजपेदिडे रन्ते इति ७ उत्सृज्य विज्ञानमुपैति ८ यद्यपुरुषाभिवीता प्राचीयादरात्सीदयं यजमानः कल्याणं

लोकमजैषीदिति विद्यात् । यदि दक्षिणा क्षिप्रेऽस्माल्लोकात्प्रैष्यति । यदि प्रतीची बहुधान्यो भविष्यति । यद्युदीची श्रेयानस्मिंल्लोके भविष्यतीति ९ तां यजमानोऽभिमन्त्रयते सा मा सुवर्गं लोकं गमयेति १० यास्तिस्रस्तिस्रस्त्रिंशत्यधि तास्वेनामुपसमाहृत्य तामग्नीधे ब्रह्मणे होत्र उद्गात्र उन्नेत्रेऽध्वर्यवे वा दद्यात् ११ द्वौ वोन्नेतारौ वृत्वा यतरो नाश्रावयेत्तस्मै वा १२ द्विभागं वा ब्रह्मणे तृतीयमग्नीधे १३ सर्वेभ्यो वा सदस्येभ्यः १४ उदाकृत्या वा सा वशं चरेत् । यस्तामविद्वान्प्रतिगृह्णातीत्युक्तम् १५ तां शतमानेन हिरण्येन निष्क्रीय यजमानस्य गोष्ठे विसृजति १६

इति षोडशी कण्डिका

दश प्रथमेऽहन्नाशिरं दुहन्ति । विंशतिं द्वितीये । त्रिंशतं तृतीये १ कृतान्नं प्रथमेऽहनि देयम् । हिरण्यं गौर्वास इति द्वितीये । अनो रथोऽश्वो हस्ती पुरुष इति तृतीये २ न साहस्रेऽधि किं चिद्दद्यात् ३ दद्यादित्येके ४ यदि दद्यादनूबन्ध्यावपायां हुतायां दक्षिणा नयन्नन्यूना दशतो नयेत् ५ यस्मा एकां गां दास्यन्स्याद्दशभ्यस्तेभ्यो दशतमुपाकुर्यात् ६ यस्मै द्वे पञ्चभ्यः । यस्मै पञ्च द्वाभ्याम् ७ एवमा शतादा वा सहस्रात् ८ उत्तमां दक्षिणां नीत्वोदवसाय वा शबली ९ समुद्रोऽसि विश्वव्यचा ब्रह्मा देवानां प्रथमजा ऋतस्य । अन्नमसि शुक्रमसि ज्योतिरस्यमृतमसि । तां त्वा विद्म शबलि दीद्यानाम् । तस्यास्ते पृथिवी पादोऽन्तरिक्षं पादो द्यौः पादः समुद्रः पादः । एषासि शबलि तां त्वा विद्म सा न इषमूर्जं धुक्ष्व वसोर्धारां शबलि प्रजानां शविष्ठा व्रजमनुगेषं स्वाहेति शबलीहोमं जुहोति १०

इति सप्तदशी कण्डिका

अश्वमेधस्याग्निष्टोम उक्थ्योऽतिरात्रः १ रथंतरं महानाम्नी बृहदिति पृष्ठानि २ राजा यजेत यः कामयेत सर्वमिदं भवेयमिति ३ बैदत्रिरात्रेण स्वाराज्यकामः ४ त्रयस्त्रिवृतोऽतिरात्राः षोडशिमन्तः ५ रथंतरं वामदेव्यं बृहदिति पृष्ठानि ६ गर्गत्रिरात्रेणोत्तरेषां त्रयाणामहानि पृष्ठानीति व्याख्यातानि ७ छन्दोमपवमानेन पशुकामः ८ अन्तर्वसुना पशूनाप्नोति ९ पराकेण स्वर्गकामः १० चत्वारश्चतूरात्राः ११ अत्रेः प्रथमश्चतुर्वीरः १२ चत्वारो

ऽस्य वीराः कुल आजायन्ते सुहोतेत्युक्तम् १३ अग्निष्टोम उक्थ्यावतिरात्रो ऽत्रैव चत्वारश्चतुष्टोमाः १४ अत्रिं श्रद्धादेवमित्युक्तम् १५ जामदग्नयेन पुष्टिकामः १६ पुरोडाशिन्य उपसदो भवन्ति १७ आग्नेय एककपाल आश्विनो द्विकपालो वैष्णवस्त्रिकपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालः १८ दर्विहोमा भवन्ति १९

इत्यष्टादशी कण्डिका

अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुषतां हविः स्वाहा । देवावश्विना मधुकशयाद्यास्मिन्यज्ञे यजमानाय मिमिक्षतम् । देव विष्णवुर्वद्येमं यज्ञम् यजमानायानुविक्रमस्व । देव सवितः सुषावित्रमद्यास्मिन्यज्ञे यजमानायासुवस्व । देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधि । देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदत । देव्यदितेऽन्वद्येमं यज्ञं यजमानायैधि । देव्यनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्व । दिव्या आपो नन्नम्यध्वमद्यास्मिन्यज्ञे यजमानाय । सदःसदः प्रजावानृभुर्जुषाणः । देवेन्द्रेन्द्रियमद्यास्मिन्यज्ञे यजमानायैधि । देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीति प्रतिनिगद्य होमाः १ इन्द्राय देवेभ्यो जुषतां हविः स्वाहेति सर्वत्रानुषजति २

इत्येकोनविंशी कण्डिका

वसिष्ठस्य संसर्पः । यः पुण्यो हीन इव स्यात्स एतेन १ विश्वामित्रस्य संजयः । भ्रातृव्यवान्यजेत २ पञ्च पञ्चाहाः ३ संवत्सरो वा इदमेक आसीदित्युक्तम् ४ अभ्यासङ्ग्यो द्वितीयः ५ यं कामं कामयते तमभ्यश्नुते ६ अग्निष्टोमस्त्रय उक्थ्या अतिरात्रः ७ त्रिवृती द्वे सवने पञ्चदशमेकम् । पञ्चदशे द्वे सप्तदशमेकम् । सप्तदशे द्वे एकविंशमेकम् । एकविंशे द्वे त्रिणवमेकम् । त्रिनवे द्वे त्रयस्त्रिंशमेकम् ८ पञ्चशारदीयेन बहोर्भूयान्भवति ९ अनुसंवत्सरं पशुबन्धेन यजते १० सप्तदश पृश्नीनुक्षणः पञ्चवर्षानानयन्ति । सप्तदश पृश्नीर्वत्सतर्यस्त्रिवत्सा अप्रवीताः ११ प्रो-

क्षितान्पर्यग्निकृतानुक्ष्ण उत्सृजन्ति । वत्सतरीरालभन्ते १२ वर्णाननुक्रमिष्यामः १३ राजीवा नवनीतपृश्नीररुणाः पिशङ्गीः सारङ्गीरुत्तमीरालभ्य दीक्षन्ते १४ त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशोऽतिरात्रः १५ एत उक्षाणः सवनीयाः १६ त्रींस्त्रीनन्वहमालभन्ते । पञ्चोत्तमेऽहन् १७ ऐन्द्रमारुता उक्षाणः । मारुत्यो वत्सतर्यः १८ यद्युक्ष्णो रुद्रोऽभिमन्येत १९

इति विंशी कण्डिका

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेत् १ अपोनप्त्रीयं चरुं यद्यप्सु पतेत् २ नैर्ऋतं चरुं यद्यवसीदेत् ३ भौमं चरुमेककपालं वा यद्यवसन्नः संशीर्णो वा ४ बार्हस्पत्यं चरुं यदि श्लोणः कूटो वा ५ यदि नश्येद्वायव्यं चरुम् ६ यदि सेनाभीत्वरी विन्देतेन्द्राय जयत एकादशकपालम् ७ यदि प्रासहा नयेयुरिन्द्राय प्रसह्वन एकादशकपालम् ८ यद्यन्धः स्यात्सौर्यं चरुमेककपालं वा ९ यदि श्वभ्रं प्रपतेद्वैष्णवं चरुम् १० यद्यविज्ञातेन यक्ष्मणा म्रियेत प्राजापत्यं चरुं द्वादशकपालं वा ११ चतुर्थोऽन्तर्महाव्रतः १२ भ्रातृव्यवान्यजेत १३ त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यो महाव्रतं सप्तदश उक्थ्य एकविंशोऽतिरात्रः १४ पुरुषमेधः पञ्चमः १५ पञ्चशारदीयवदहानि १६ अयुतं प्रथमेऽहनि ददाति । नियुतं द्वितीये । अर्बुदं न्यर्बुदम् च तृतीये । यथा प्रथमयोरेवमुत्तरयोः १७

इत्येकविंशी कण्डिका

चत्वारः षडहाः १ साध्यानां प्रथमः २ साध्या वै देवाः सुवर्गकामा इत्युक्तम् ३ ऋतूनां द्वितीयेन प्रजाकामः ४ पृष्ठः षडहः ५ तृतीयेनोपरिष्टात्त्रिकद्रुकेण यं कामं कामयते तमभ्यश्नुते ६ त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्रः ७ चतुर्थेन प्रैव जायते प्रजया पशुभिः ८ अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः ९ अष्टौ सप्तरात्राः १० कौसुरुबिन्देन पशुकामः ११ स व्याख्यातः १२ सप्तर्षीणां द्वितीयेन स्वर्गकामः १३ पृष्ठ्यः षडहो महाव्रतवानतिरात्रः १४ प्राजापत्येन प्रजाकामः १५ पृष्ठ्यः षडहः प्राजापत्यं महाव्रतमतिरात्रे १६ छन्दोमपवमानेन

पशुकामः १७ पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रे १८ पृ-
ष्ठ्यावलम्बेनान्नाद्यकामः १९ पृष्ठ्यस्तोमः षडहो महाव्रतवानतिरात्रः २०

इति द्वाविंशी कण्डिका

सत्रसंमितेनान्नाद्यकामः १ कौसुरुबिन्दवदहानि २ ऐन्द्रेणौजस्कामः ३
ज्योतिर्गौरायुरथाभिजिद्विश्वजित्सर्वजित्सर्वस्तोमोऽतिरात्रः ४ जनकसप्तरा-
त्रेण प्रजातिं भूमानं गच्छत्यभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति ५
चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि विश्वजिन्महाव्रतं ज्योतिष्टोमो वैश्वान-
रोऽतिरात्रः ६ अष्टरात्रेण ब्रह्मवर्चसकामः । स व्याख्यातः ७ त्रयो न-
वरात्राः ८ प्रथमेनायुष्कामः ९ पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्रः १०
द्वितीयेन ब्रह्मवर्चसकामः ११ त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उ-
क्थ्योऽभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः १२ शललीपिशङ्गेनान्नाद्यकामः
१३ ज्योतिर्गौरायुर्ज्योतिर्गौरायुर्गौर्ज्योतिरतिरात्रः १४ चत्वारो दशरात्राः
१५ दशरात्राय दीक्षिष्यमाणो दशहोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहु-
यात् १६ त्रिककुत्प्रथमः । त्रिककुत्प्रजानां समानानां च भवति १७
त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश
उक्थ्यः सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवोऽग्निष्टो-
मो विश्वजित्सर्वपृष्ठोऽतिरात्रः १८

इति त्रयोविंशी कण्डिका

देवपुराभिचर्यमाणः १ त्रिष्टोमोऽग्निष्टोमो ज्योतिरुक्थ्यस्त्रिष्टोमोऽग्निष्टोमो
ऽभिजिदग्निष्टोमो गौरुक्थ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोम आयुरुक्थ्यो
विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः २ छन्दोमवता पुरुषं पशूनोजो वी-
र्यमाप्नोति ३ अभ्यासङ्ग्यः षडहस्त्रयश्छन्दोमा अतिरात्रः ४ अथैकेषाम् ।
अभ्यासङ्ग्यः पञ्चाहश्चत्वारश्छन्दोमा अतिरात्रः ५ कौसुरुबिन्देन बहोर्भूया-
न्भवति ६ त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदश उक्थ्यास्त्रयः सप्तदशा उ-
क्थ्या एकविंशोऽतिरात्रः ७ पौण्डरीक एकादशरात्रोऽयुतदक्षिणः ८ अ-
न्वहं सहस्राणि ददाति । अश्वसहस्रमुत्तमेऽश्वशतं वा ९ तेन सर्वामृद्धि-
मृध्नोति परमेष्ठितां गच्छत्यभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति १०

अभ्यासङ्ग्यः षडहश्चतुष्टोमोऽग्निष्टोमस्त्रयश्छन्दोमा अतिरात्रः ११ अथैके-
षाम् । अभ्यासङ्ग्यः पञ्चाहश्चत्वारश्छन्दोमा महाव्रतं विश्वजित्सर्वपृष्ठो
ऽतिरात्रः १२

इति चतुर्विंशी कण्डिका

अथ सवानां व्याख्यातो बृहस्पतिसवः १ वैश्यः पुष्टिकामः २ आग्नेया-
दीनि सप्त हवींषि निर्वपति ३ पृश्निः पष्ठौही मारुत्यालभ्यते ४ तस्याः
पुरस्तात्स्विष्टकृतो यजमानायतन ऋषभचर्म प्राचीनग्रीवमुत्तरलोमास्तीर्य त-
स्मिन्नासीनं यजमानं दध्नाभिषिञ्चति ५ ब्राह्मणो ब्रह्मवर्चसकामः ६ आ-
ग्नेयादीन्यष्टौ हवींषि निर्वपति ७ पुरस्तात्स्विष्टकृतो हिरण्येन घृतमुत्पूय
तेन कृष्णाजिन आसीनमभिषिञ्चति ८ अथ सोमसवः ९ यत्किंच राज-
सूयमृते सोमं तत्सर्वं भवति १० मैत्राबार्हस्पत्यं संस्थाप्य सौमीं सूतवशा-
मालभते ११ तस्याः पुरस्तात्स्विष्टकृतोऽषाढं युत्सु पृतनासु पप्रिमिति सौ-
म्यर्चाद्भिरभिषिञ्चति १२ शेषं संस्थाप्य संसृपां हविर्भिर्दिशामवेष्ट्या द्वि-
पशुना पशुबन्धेन सात्यदूतानां हविर्भिः प्रयुजामिति यजते १३ पृथिसवेन
पशुकामः १४ यत्किंच राजसूयमनुत्तरवेदिकं तत्सर्वं भवति १५ मैत्रा-
बार्हस्पत्यस्य पुरस्तात्स्विष्टकृतो ये मे पञ्चाशतमिति नाराशंस्यर्चाद्भिरभिषि-
ञ्चति १६ समानमुत्तरं पूर्वेण पशुबन्धवर्जम् १७ व्याख्यातो गोसवः १८
ओदनसवेनान्नाद्यकामः १९ रोहिण्यां यजतोपव्युषं श्रपयति २० दर्विहोमो
भवति २१ उदित आदित्ये सिंहे व्याघ्र इति चतस्र आहुतीरोदनाद्धुत्वा
राडसि विराडसीत्येतैः प्रतिमन्त्रम् २२

इति पञ्चविंशी कण्डिका

मन्थान्कल्पयन्ति । आज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य
उदमन्थं शूद्रः १ इन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामीति ब्राह्मणः स-
क्तुभिराज्यं श्रीत्वा तेजोऽसीत्यभिमन्त्र्य तत्ते प्रयच्छामीति यजमानाय प्रय-
च्छति २ तेजस्वदस्तु मे मुखमिति प्रतिगृह्य भक्षयति ३ एवमितरेषामुत्त-
रउत्तरः श्रयणोऽभिमन्त्रणः प्रदानो भक्षणश्च यथालिङ्गम् ४ सर्वान्यजमानो
भक्षयित्वा हिरण्यं ब्राह्मणाय ददाति । तिसृधन्वं राजन्याय । अष्ट्रां वै-

श्याय । माषकमण्डलुं शूद्राय ५ ओदनशेषं यजमानः प्राश्नाति ६ इ-
ममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते ७ हिरण्यं यजमानाया-
बध्नाति ८ आयुरसि विश्वायुरसीत्याबध्यमाने जपति ९ अपां ग्रहान्गृह्णन्ति
ये मन्थान्कल्पयन्त्यपां यो द्रवणे रस इत्येतैः प्रतिमन्त्रम् १० तैरेनं संसृष्टैर-
भिषिञ्चति यतो वातो मनोजवा इति ११ समुद्र इवासि गह्मनेत्येनमभिम-
न्त्र्याथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति १२ अवभृथप्रत्याम्नायो भवतीति वि-
ज्ञायते १३ अग्रेणाहवनीयं रथोऽवस्थितो भवति १४ अभि प्रेहीति तं य-
जमानोऽभ्येति १५ आतिष्ठ मित्रवर्धन इत्यारोहन्तमभिमन्त्रयते १६ अङ्कौ
न्यङ्काविति रथचक्रे अभिमृशति । पत्नसी वा १७ आतिष्ठ वृत्रहन्निति
पञ्चभिरारूढम् १८ दिदृक्षेण्यो दर्शनीयो भवति य एतेन यजत इति वि-
ज्ञायते १९

इति षड्विंशी कण्डिका

संतिष्ठत ओदनसवः १ व्याख्यातः पञ्चशारदीयः २ तथाग्निष्टुत ३ तस्य
पुरोरुचः ४ अस्याजरासोऽग्न आयूंषि पवस इत्यैन्द्रवायवस्य । द्वितीया
मैत्रावरुणस्य । तृतीयाश्विनस्य । चतुर्थी पञ्चमी च शुक्रामन्थिनोः ष-
ष्ठ्याग्रयणस्य ५ अन्यामाग्नेयीमुक्थ्यस्य नियुनक्ति ६ नित्या ध्रुवस्य ७
नियुनक्त्यैन्द्राग्नवैश्वदेवयोः ८ अग्निश्रिय इति तिस्त्रो मरुत्वतीयानाम् ।
श्रुधि श्रुत्कर्णेत्युत्तरां माहेन्द्रस्य । विश्वेषामदितिरिति तिस्त्र आदित्यग्रहस्य ।
उत्तमा सावित्रस्य ९ नियुनक्ति वैश्वदेवस्य १० नित्या पात्नीवतस्य ११
नियुनक्ति हारियोजनस्य १२ इन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येनेन्द्रियकामो वीर्य-
कामो वा यजेत १३ ऐन्द्रियः पुरोरुचः १४ तिष्ठा हरी कस्य वृषेत्यैन्द्रवा-
यवस्य । तृतीया मैत्रावरुणस्य । चतुर्थ्याश्विनस्य । पञ्चमी षष्ठी च
शुक्रामन्थिनोः । सप्तम्याग्रयणस्य १५ नित्योक्थ्यस्य १६ नियुनक्ति ध्रु-
वैन्द्राग्नवैश्वदेवानाम् १७ नित्या मरुत्वतीयमाहेन्द्राणाम् १८ आ नो वि-
श्वाभिरूतिभिरिति तिस्त्र आदित्य ग्रहस्य । उत्तमा सावित्रस्य १९ नियु-
नक्ति विश्वश्वदेवपात्नीवतयोः २० नित्या हारियोजनस्य २१ व्याख्यातो
ऽप्तोर्यामः २२

इति सप्तविंशी कण्डिका

राजाभिषेद्त्यमाणो जनपदेषु समवेतेषु द्वयोः पुण्याहयोः पूर्वस्मिन्स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरिस्तीर्य वसति १ उदित आदित्ये ये केशिनो नर्ते ब्रह्मण इति द्वे आहुती हुत्वा राडसि विराडसीति यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति २ तां राजारोहति ३ आरोह प्रोष्ठमित्यारोहन्तमभिमन्त्रयते ४ अत्र वरं ददाति ५ तस्यामासीनः केशान्वापयते येनावपत्सविता क्षुरेणेति ६ मा ते केशानिति केशान्प्रकीर्यमाणाननुमन्त्रयते ७ तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानमिति ८ अथैनमाज्यमिश्रेण पयसानक्ति । बलं ते बाहुवोरिति बाहू । यत्सीमन्तमिति शिरः ९ व्याघ्रोऽयमग्नाविति सप्ताहुतीर्हुत्वा द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमास्तृणाति १० तस्मिन्राजोपविशति ११ व्याघ्रो वैय्याघ्र इत्यासीनमभिमन्त्रयते १२ अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिर्वाद्भिरभिषिञ्चति या दिव्या आप इति प्रतिपद्या पाङ्कात् १३ अरुणं त्वा वृकमित्येनमभिमन्त्र्य प्र बाहवेति बाहू प्रसार्येन्द्रस्य ते वीर्यकृत इत्युपावहरति १४ अग्रेणाग्निं रथोऽवस्थितो भवति १५ अभि प्रेहीति तं राजाभ्येति १६ आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते १७ अङ्क्तो न्यङ्काविति रथचक्रे अभिमृशति । पक्षसी वा १८ नमस्त ऋष इति पुरोहितमभिमन्त्रयते १९ तिष्ठा रथ इति सारथिम् २० आ रश्मीनिति रश्मीनालभते २१ आतिष्ठ वृत्रहन्निति षड्भिरारूढम् २२ परि मा सेन्या इति द्वे वाचयित्वोत्तराभिस्तिसृभिरभिमन्त्र्योदसावेत्वित्यादित्यमुदीक्षयति २३ अन्नवतामिति जनपदाननुवीक्षते २४ संतिष्ठते राजाभिषेकः २५ व्याख्यातो विघनः २६ संतिष्ठन्ते सवाः सवाः २७

इत्यष्टाविंशी कण्डिका

इति द्वाविंशः प्रश्नः

चतुर्विंशतिपरमाः सत्त्रमासीरन् १ तेषां द्वादशाहेन सत्त्रभूतेन कल्पो व्याख्यातो यानि पुरस्तात्संवत्सरात् । गवामयनेनेतरेषाम् २ उभयतोऽतिरात्राणि भवन्ति ३ तृतीयं पञ्चदशरात्रं परिहाप्य कुण्डपायिनां च सत्त्रम् ४ ऋतूनामेकादशरात्रेण प्रजां सृजन्ते प्रजामवरुन्धते प्रजां विन्दन्ते प्रजावन्तो

भवन्ति ५ ज्योतिरतिरात्रः पृष्ठ्यः षडहस्त्रयश्छन्दोमा अतिरात्रः ६ द्वौ त्रयोदशरात्रौ ७ यं कामं कामयन्ते तमभ्यश्नुवते ८ अतिरात्रः पृष्ठ्यः ष-डहः सर्वस्तोमोऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः ९ द्वितीयं ब्रह्मवर्चस-कामा उपेयुः १० अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ११ त्रयश्चतुर्दशरात्राः १२ यं कामं कामयन्ते तमभ्यश्नुवते १३ अतिरात्रः पृ-ष्ठ्यः षडह आवृत्तः पृष्ठ्यः षडहोऽतिरात्रः १४ द्वितीयं यांस्तल्प उदके वि-वाहे वा मीमांसेरन् १५ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आ-युर्गौर्ज्योतिरतिरात्रः १६ तृतीयमृद्धिकामा उपेयुः १७ अतिरात्रो गोआयुषी
द्वादशाहस्य दशाहान्यतिरात्रः १८

इति प्रथमा कण्डिका

चत्वारः पञ्चदशरात्राः १ देवत्वं गच्छति २ अमावास्यायां प्रायणीयोऽष्ट-म्यां महाव्रतं पौर्णमास्यामुदयनीयः । एतद्वा विपरीतम् ३ अतिरात्रः पृ-ष्ठ्यः षडहो महाव्रतमावृत्तः पृष्ठ्यः षडहोऽतिरात्रः ४ द्वितीयं ब्रह्मवर्चस-कामा उपेयुः ५ अतिरात्रस्त्रिवृदग्निष्टुज्ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः ६ तृतीयेनोभौ कामाववरुन्धते यः सत्त्रे यश्चाहीने ७ त्रिवृदग्निष्टुज्ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः ८ च-तुर्थेन प्रैव जायन्ते प्रजया पशुभिः ९ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वाद-शाहस्य दशाहान्यतिरात्रः १० ऐन्द्रं षोडशरात्रमोजस्कामा उपेयुः ११ एता एव समहाव्रताः १२ सप्तदशरात्रमन्नाद्यकामा उपेयुः १३ अतिरात्रो ज्यो-तिर्गौरायुर्गौरायुःपञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः १४ अष्टादशरात्रं प-शुकामा उपेयुः १५ अतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यति-रात्रः १६ एकान्नविंशतिरात्रेण प्र प्रजया पशुभिर्जायन्ते १७ एता एव स-महाव्रताः १८ विंशतिरात्रेण ब्रह्मवर्चसिनोऽन्नादा भवन्ति १९ अतिरात्रो ऽभिप्लवः षडहोऽभिजिद्विश्वजितौ द्वादशाहस्य दशाहान्यतिरात्रः २०

इति द्वितीया कण्डिका

द्वावेकविंशतिरात्रौ १ यं कामं कामयन्ते तमभ्यश्नुवते २ अतिरात्रोऽभि-

प्लवः षडहोऽतिरात्रो द्वावभिप्लवावतिरात्रः ३ द्वितीयं ब्रह्मवर्चसकामा उपेयुः ४ सोमापौष्णः पशुरुपालम्भ्यः ५ मनोर्ऋचह् सामिधेन्यः ६ निदाघ उपयन्ति ७ अप तमो घ्नते ८ अतिरात्रः पृष्ठ्यः षडहस्त्रयः स्वर-सामानो दिवाकीर्त्यमहस्त्रयः स्वरसामान आवृत्तः पृष्ठ्यः षडहोऽतिरात्रः ९ द्वाविंशतिरात्रेण संवत्सरादेभ्यो लोकेभ्योऽमुष्मादादित्यादन्नाद्यमवरुन्धते १० अतिरात्रो ज्योतिर्गौरायुस्त्र्यहोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महा-व्रतमतिरात्रश्च ११ त्रयोविंशतिरात्रं पशुकामा उपेयुः १२ अतिरात्रो ज्यो-तिर्गौरायुर्गौरायुः पञ्चाहोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रह् १३ द्वौ चतुर्विंशतिरात्रौ १४ यं कामं कामयन्ते तमभ्यश्नुवते १५ अतिरात्रो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः १६

इति तृतीया कण्डिका

संसदा चतुर्विंशतिरात्रेण स्वर्गे लोके सीदन्ति १ अतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्वा पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशं निरु-क्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमनिरुक्तं पृष्ठ्य-स्तोमः षडह्ः प्रत्यङ्ङ त्रिवृदहरनिरुक्तं ज्योतिष्टोमो वैश्वानरोऽतिरात्रः २ प-ञ्चविंशतिरात्रं पशुकामा उपेयुः ३ अतिरात्रो द्वावभिप्लवौ द्वादशाहस्य द-शाहानि महाव्रतमतिरात्रश्च ४ षड्विंशतिरात्रं स्वर्गकामा उपेयुः ५ अ-तिरात्रो गोआयुषी द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः ६ सप्तविं-शतिरात्रमन्नाद्यकामा उपेयुः ७ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः ८ अष्टाविंशतिरात्रं पशुकामा उपेयुः ९ एता एव समहाव्रताः १० एकान्नत्रिंशद्रात्रेणापरिमितां श्रियं जयन्ति ११ अतिरात्रो ज्योतिर्गौरायुर्गौरायुःपञ्चाहो द्वावभिप्लवौ द्वादशाहस्य दशाहान्य-तिरात्रः १२ त्रिंशद्रात्रमन्नाद्यकामा उपेयुः १३ अतिरात्रस्त्रयोऽभिप्लवा द्वा-दशाहस्य दशाहान्यतिरात्रः १४

इति चतुर्थी कण्डिका

एकत्रिंशद्रात्रमन्नाद्यकामा उपेयुः १ एता एव समहाव्रताः २ द्वात्रिंशद्रात्रं प्रतिष्ठाकामा उपेयुः ३ अतिरात्रो गोआयुषी त्रयोऽभिप्लवा द्वादशाहस्य द-

शाहान्यतिरात्रः ४ त्रयस्त्रयस्त्रिंशद्रात्राः ५ यं कामं कामयन्ते तमभ्यश्नुवते ६ अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ७ द्वितीयं ब्रह्मवर्चसकामा उपेयुः ८ अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ९ तृतीयमृद्धिकामा उपेयुः १० अतिरात्रस्त्रयः पञ्चाहा अतिरात्रस्त्रयः पञ्चाहा अतिरात्रः ११ चतुस्त्रिंशद्रात्रमिन्द्रियकामा उपेयुः १२ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहस्त्रयोऽभिप्लवा द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च १३

इति पञ्चमी कण्डिका

पञ्चत्रिंशद्रात्रं पशुकामा उपेयुः १ अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहस्त्रयोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः २ षट्त्रिंशद्रात्रं स्वर्गकामा उपेयुः ३ अतिरात्रश्चत्वारोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः ४ सप्तत्रिंशद्रात्रमन्नाद्यकामा उपेयुः ५ एता एव समहाव्रताः ६ अष्टात्रिंशद्रात्रं पशुकामा उपेयुः ७ अतिरात्रो गोआयुषी चत्वारोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः ८ एकान्नचत्वारिंशद्रात्रेणानन्तां श्रियं जयन्ति ९ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चत्वारोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः १० चत्वारिंशद्रात्रेण परमायां विराजि प्रतितिष्ठन्ति ११ एता एव समहाव्रताः १२

इति षष्ठी कण्डिका

सप्तैकस्मान्नपञ्चाशद्रात्रा विधृतयः १ प्रथमेन वि पाप्मना भ्रातृव्येणावर्तन्ते २ अतिरात्रस्त्रयस्त्रिवृतोऽग्निष्टोमा अतिरात्रो दश पञ्चदशा उक्थ्याः षोडशिमद्दशममहरतिरात्रो द्वादश सप्तदशा उक्थ्या अतिरात्रह् पृष्ठ्यः षडहोऽतिरात्रो द्वादशैकविंशा उक्थ्या अतिरात्रः ३ यमातिरात्रो द्वितीयः ४ यमेवैषां श्रीर्भवति मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्चेन्द्रश्च विवस्वांश्चैतासां देवतानामृद्धिमृध्नुवन्ति ५ अतिरात्रो द्वावभिप्लवौ गोआयुषी द्वावभिप्लवावभिजिद्विश्वजिच्चातिरात्रावेकोऽभिप्लवः सर्वस्तोमो नवसप्तदशाश्चातिरात्रौ द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ६ आञ्जनाभ्यञ्जनस्तृतीयः ७

यान्न जानीयुर्यदा चाञ्जतेऽभि चाञ्जते जानन्त्येनान् । शुभमेवात्मन्दधते ८ गौल्गुलवेन प्रातःसवने सौगन्धिकेन माध्यंदिने पौतुद्रवेण तृतीयसवने ९ अतिरात्रश्चत्वारोऽभिप्लवाः सर्वस्तोमोऽतिरात्रो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः १० संवत्सरसंमितश्चतुर्थः ११ संवत्सरस्यर्द्धिमृध्नुवन्ति १२ अतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्वा त्रयोऽभिप्लवा अभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिदेकोऽभिप्लव आबृत्त आयुर्गौर्द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च १३

इति सप्तमी कण्डिका

सवितुः ककुभः पञ्चमः १ सर्वस्यान्नाद्यस्य प्रसवं गच्छन्ति २ अतिरात्रो नव त्रिवृन्त्यहान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यग्निष्टोमावभित उक्थ्यं मध्ये तथैव नव पञ्चदशानि तथैव नव सप्तदशानि तथैव नवैकविंशानि द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ३ षष्ठं प्रतिष्ठाकामा उपेयुः ४ अतिरात्रश्चत्वारोऽभिप्लवा महाव्रतं द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः ५ सप्तमेनात्यन्याः प्रजा भवन्त्योजिष्ठा भवन्ति ६ अतिरात्रः षडभिप्लवा द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ७ एकषष्टिरात्रमृद्धिकामा उपेयुः ८ देव वरुण देवयजनं मे देहीति देवयजनमध्यवसाय जुहोति ९ अतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्वा पृष्ठ्यः षडहस्त्रयोऽभिप्लवा अभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिदावृत्तः पृष्ठ्यः षडह एकोऽभिप्लव आवृत्त आयुर्गौर्द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च १० देवानां शतरात्रेण सर्वमायुर्यन्ति वसीयांसो भवन्ति ११ अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चतुर्दशाभिप्लवा द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च १२ अभिप्रयायाभिषुण्वन्ति समानत्र वा १३

इत्यष्टमी कण्डिका

आदित्यानामयनेन प्रजातिं भूमानं गच्छन्त्यभि स्वर्गं लोकं जयन्त्येषु लोकेषु प्रतितिष्ठन्ति १ गवामयनेन व्याख्यातम् २ सर्वेऽभिप्लवाः ३ मासास्त्रिवृत्पञ्चदशा मध्येपृष्ठ्या भवन्ति ४ अभिजितः स्थाने त्रिवृद्बृहस्पतिसवः । विश्वजितः स्थाने पञ्चदश इन्द्रस्तोम इक्थ्यः ५ तस्मादनन्तरं पृष्ठ्याभिप्ल-

वावेपेत्य द्वादशाहीयस्य दशरात्रस्य व्यूढा ग्रग्निष्टोमास्त्रिवृतः ६ उद्भिद्व-लभिद्भ्यामिति द्व्यूनो मासः पूर्यते ७ ग्रायुषं गां चोपेत्य छन्दोमदशरात्रः प्रत्यङ्ङष्टाचत्वारिंशं चतुश्चत्वारिंशं चत्वारिंशं षट्त्रिंशं द्वात्रिंशं त्रिंशं द्वे ग्र-ष्टाविंशे पञ्चविंशं चतुर्विंशम् ८ महाव्रतोदयनीयाभ्यामिति द्व्यूनो मासः पूर्यते ९ एतेनाङ्गिरसामयनं व्याख्यातम् १० स्वर्गकामा उउपेयुः ११ त्रिवृतोऽभिप्लवाः १२ मासाः पुरस्तात्पृष्ठ्या भवन्ति प्राग्विषुवतः । ऊ-र्ध्वं विषुवत उपरिष्टात्पृष्ठ्याः पञ्चदशिनः १३ छन्दोमदशरात्र ऊर्ध्वस्तोम-श्चतुर्विंशं पञ्चविंशं द्वे ग्रष्टाविंशे त्रिंशं द्वात्रिंशं षट्त्रिंशं चत्वारिंशं चतुश्च-त्वारिंशमष्टाचत्वारिंशम् १४ महाव्रतोदयनीयाभ्यामिति द्व्यूनो मासः पू-र्यते १५ ग्रथैकेषाम् । पृष्ठ्या ग्राद्यन्ति चादित्यानामयनमभिप्लवा ग्रा-द्यन्ति चाङ्गिरसामयनम् । यदन्यत्पृष्ठाभिप्लवेभ्यस्तान्याद्यन्तीत्याचक्षते १६

इति नवमी कण्डिका

दृतिवातवतोरयनेन यं कामं कामयन्ते तमभ्यश्नुवते १ ग्रतिरात्रावभितः २ त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासम् ३ ग्रथ विषुवान्महाव्रतं वा ४ एत एवोत्तरे मा-सास्त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः ५ कुण्डपायिनामयने मासं दीक्षिता भवन्ति ६ प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधति ७ द्वादश-भिरुपसद्भिश्चरित्वा हविर्यज्ञैर्यजन्ते ८ मासमग्निहोत्रं जुह्वति । मासं द-र्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधैर्मासं शुनासीरीयेण । त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासम् । ग्रष्टादश त्रयस्त्रिंशान्यहानि द्वादशाहस्य दशाहा-नि महाव्रतमतिरात्रश्चेति द्वादश मासाः ९ सर्व एव भवन्ति सर्वामृद्धिमृ-ध्नुवन्ति १० ग्रत्सरुकैश्चमसैर्भक्षयन्ति ११ यो होता सोऽध्वर्युः स पोता । य उद्गाता स नेष्टा सोऽच्छावाकः । यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता । यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत । यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता । गृहपतिर्गृहपतिः । सुब्रह्मण्यः सुब्रह्मण्यः १२

इति दशमी कण्डिका

तपश्चितामयनं स्वर्गकामा उपेयुः १ संवत्सरं दीक्षाः । संवत्सरमुपसदः २ चतुरश्चतुरो मासानेकैकेनोपसन्मन्त्रेण जुहोति ३ अनूपसदमग्निं चिनोति ४ द्वौद्वौ मासावेकैका चितिः । चतुर उत्तमा ५ चतुस्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्रींस्त्रीन्मासान्व्रतानि ६ संवत्सरं प्रसुताः ७ प्रजापतेर्द्वादशसंवत्सरेण प्रजापतेर्ऋद्धिमृध्नुवन्ति ८ त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः ९ एतदेव नैमिषीयाणां स्वर्गकामा उपेयुः १० नव त्रिवृतः संवत्सरा नव पञ्चदशा नव सप्तदशा नवैकविंशाः शाक्त्यानां षट्त्रिंशत्संवत्सरं तरसपुरोडाशं काप्याध्वर्यवमागस्त्यगृहपतिकम् ११ संस्थितेसंस्थितेऽहनि गृहपतिर्मृगयां याति १२ स यान्मृगान्हन्ति तेषां तरसाः पुरोडाशा भवन्ति १३ एतेन ह वै शाक्त्यो गौरिवीतिस्तरसपुरोडाश आर्ध्नोद्देवलोके च मनुष्यलोके चर्द्धिमृध्नुवन्ति १४ पञ्चविंशतिस्त्रिवृतः संवत्सराः पञ्चविंशतिः पञ्चदशाः पञ्चविंशतिः सप्तदशाः पञ्चविंशतिरेकविंशाः १५

इत्येकादशी कण्डिका

साध्यानां शतसंवत्सरेण सगवाः सपुरुषाः स्वर्गं लोकं यन्ति १ अग्नेः सहस्रसाव्येन सर्वस्यान्नाद्यस्य प्रसवं गच्छन्ति २ अतिरात्रः सहस्रं त्रिवृन्त्यहान्यतिरात्रः ३ त्रीणि सारस्वतानि सत्त्राणि । मित्रावरुणयोः प्रथममिन्द्राग्नियोर्द्वितीयमर्यम्णस्तृतीयम् ४ सरस्वत्या उपमज्जने दीक्षन्ते ५ प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधति ६ द्वादशभिरुपसद्भिश्चरित्वा प्रायणीयमतिरात्रमुपेत्य तदहर्वत्सानपाकुर्वन्ति ७ संस्थिते प्रायणीये सांनाय्येन यजन्ते ८ तस्मिन्संस्थितेऽध्वर्युः शम्यां प्राचः प्रास्यति ९ सा यत्र निपतति तद्गार्हपत्यः १० तस्मात्षट्त्रिंशतं प्राचः प्रक्रमान्प्रक्रामति ११ तदाहवनीयः १२ चक्रीवन्ति सदोहविर्धानान्याग्नीध्रं च १३ आश्वत्थि हविर्धानमाग्नीध्रं च १४ उलुखलबुध्नो यूपः प्रकृष्य उपोप्त एव १५ नोपरवान्खनन्ति १६ त एतमापूर्यमाणपक्षमामावास्येन हविषा यान्ति १७ पौर्णमास्यां गोष्टोमं बृहत्सामानमुपयन्ति १८ तस्मिन्संस्थिते पौर्णमासेन यजन्ते १९ त एतमपरपक्षं पौर्णमासेन हविषा यान्ति २० अमावास्याया-

मायुष्टोमं रथंतरसामानमुपयन्ति २१ तस्मिन्संस्थिते सांनाय्येन यजन्ते २२ त एवमेव व्यत्यासं सरस्वत्या दक्षिणेन कूलेन २३

इति द्वादशी कण्डिका

आक्रोशन्तः प्राञ्चो यान्ति १ दृषद्वत्या अप्ययेऽपोनप्त्रीयं चरुं निरुप्यातियन्ति २ दशसु गोषु शते वर्षभमुत्सृजन्ति ३ यदा दशशतं कुर्वन्त्यथैकमुत्थानं यदा वा शतं सहस्रम् । यदा वा गृहपतिर्म्रियेत यदा वा सर्वस्वं जीयेरन्यदा वा प्लाक्षं प्रस्रवणं प्राप्नुवन्ति ४ प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायेष्टिं निर्वपन्ति ५ तस्यामश्वां पुरुषीं च धेनुके दत्त्वा कारपचवं प्रति यन्मुनामवभृथमभ्य वयन्ति ६ द्वितीये त्रिवृद्गृहपतिसवो गोआयुषी इन्द्रकुक्षी ७ अत्यन्याः प्रजा भवन्त्योजिष्ठा भवन्ति ८ तृतीये ज्योतिर्गौरायुरयनं विश्वजिदभिजिताविन्द्रकुक्षी ९ अर्यम्णः पन्थानमारोहन्ति देवलोकं यन्ति १० दार्षद्वते संवत्सरं ब्राह्मणस्य गा रक्षेदनष्टगुः ११ संवत्सरं व्यर्णे नैतन्धवेऽग्निमिन्धीत १२ परिणह्यग्निमाधाय दृषद्वत्या दक्षिणेन कूलेनाग्नेयेनाष्टाकपालेन शम्यापरासीयात् १३ त्रिःप्लक्षं प्रति यमुनामवभृथमभ्यवैति १४ तदैव मनुष्येभ्यस्तिरो भवति १५

इति त्रयोदशी कण्डिका

तुरायणेन सर्वामृद्धिमृध्नोति १ अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते । मानुषीं तेनर्द्धिमृध्नोति २ यत्तपस्तप्यते दैवीं तेन ३ हविरुच्छिष्टव्रतो भवति ४ संवत्सरं सवनविधा इष्टीर्निर्वपति । आग्नेयोऽष्टाकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालः ५ चरुरित्येके ६ प्रातःसवने वा सर्वा ७ सर्पाणां सत्त्रेणाप जरां घ्नते । आदित्यानामिवैषां प्रकाशः ८ सर्वो दशदशी संवत्सरो द्वादशो विषुवान् ९ त्रिषंवत्सरं गवामयनमादित्यानामङ्गिरसाम् १० प्रजातिं भूमानं गच्छन्त्यभि स्वर्गं लोकं जयन्त्येषु लोकेषु उप्रतितिष्ठन्ति ११ प्रजापतेः सहस्रसंवत्सरेण प्रजापतेर्ऋद्धिमृध्नुवन्ति १२ अतिरात्रः सहस्रं त्रिवृतः संवत्सरा अतिरात्रः १३ पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः पञ्च पञ्चाशतः पञ्चदशाः पञ्च पञ्चाशतः सप्तदशाः पञ्च पञ्चाशत एकविंशा विश्वसृजां सहस्रसंवत्सरम् १४ एतेन वै विश्वसृज इदं विश्वमसृज-

न्त । यद्विश्वमसृजन्त तस्माद्विश्वसृजः । विश्वमेनाननुप्रजायते १५ तत्र श्लोकः । विश्वसृजः प्रथमा सत्त्रमासत सहस्रसमं प्रसुतेन यन्तः । ततो ह जज्ञे भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्मनामेति १६ ब्रह्मणः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति य एतदुपयन्ति १७

इति चतुर्दशी कण्डिका

इति त्रयोविंशः प्रश्नः

यज्ञं व्याख्यास्यामः १ स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च २ स त्रिभिर्वेदैर्विधीयते ३ ऋग्वेदयजुर्वेदसामवेदैः ४ ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ ५ यजुर्वेदेनाग्निहोत्रम् ६ सर्वैरग्निष्टोमः ७ उच्चैर्ऋग्वेद-सामवेदाभ्यां क्रियते ८ उपांशु यजुर्वेदेन ९ अन्यत्राश्रुतप्रत्याश्रुतप्रवरसं-वादसंप्रैषैश्च १० अन्तरा सामिधेनीष्वनूच्यम् ११ मन्द्रेण प्रागाज्यभागाभ्यां प्रातःसवने च १२ मध्यमेन प्राक् स्विष्टकृतो माध्यंदिने च १३ क्रुष्टेन शेषे तृतीयसवने च १४ वाक्संद्रवश्च तद्वत् १५ ऋग्वेदेन होता करोति १६ सामवेदेनोद्गाता १७ यजुर्वेदेनाध्वर्युः १८ सर्वैर्ब्रह्मा १९ वचनाद्वि-प्रतिषेधाद्वान्यः कुर्यात् २० ब्राह्मणानामार्त्विज्यम् २१ सर्वक्रतूनामग्नयः सकृदाहिताः २२ जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयाम् २३ अध्वर्युं कर्तारम् २४ जुहूं पात्रम् २५ व्यापृतायां स्रुवेण २६ आहवनीये प्रदानम् २७ आधानप्रभृति यावज्जीवं पात्राणि धार्यन्ते २८ तेषां प्रतितन्त्रं संस्कारः २९ मन्त्रब्राह्मणे यज्ञस्य प्रमाणम् ३० मन्त्रब्राह्मणयोर्वेदनामधेयम् ३१ कर्मचोदना ब्राह्मणानि ३२ ब्राह्मणशेषोऽर्थवादो निन्दा प्रशंसा परकृतिः पुराकल्पश्च ३३ अतोऽन्ये मन्त्राः ३४ अनाम्नातास्त्वमन्त्रा यथा प्रवरोहना-मधेयग्रहणानीति ३५ रथशब्दो दुन्दुभिशब्दश्च ३६ स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात् ३७ एकमन्त्राणि कर्माणि ३८ अपि सं-ख्यायुक्तचेष्टापृथक्त्वनिर्वर्तीनि ३९ कण्डूयनस्वप्ननदीतराववर्षणामेध्यप्र-तिमन्त्रणेषु च तद्वत्कालाव्यवेतेषु ४० प्रयाणे त्वार्थनिर्वृत्तेः ४१ असंनि-पातिकर्मसु च तद्वत् ४२ हविष्कृदधिगुपुरोऽनुवाक्यामनोतस्यावृत्तिर्भिन्न-कालेषु ४३ वचनादेकं कर्म बहुमन्त्रम् ४४

इति प्रथमा कण्डिका

मन्त्रान्तैः कर्मादीन्संनिपातयेत् १ आघारे धारायां चादिसंयोगः २ आदि-प्रदिष्टा मन्त्राः ३ उत्तरस्यादिना पूर्वस्यावसानं विद्यात् ४ होत्रायाजमानेषु समुच्चयः ५ विकल्पो याज्यानुवाक्यासु ६ संख्यासु च तद्वत् ७ क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चयः ८ रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदन-निरसनात्माभिमर्शनानि च कृत्वाप उपस्पृशेत् ९ उत्तरतउपचारो विहारः १० नाग्नेरपपर्यावर्तेत ११ न विहारात् १२ अन्तराणि यज्ञाङ्गानि । बाह्याः कर्तारः १३ न मन्त्रवता यज्ञाङ्गेनात्मानमभिपरिहरेत् १४ प्रागपवर्गाण्युदगपवर्गाणि वा यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति १५ प्राचीनावीती प्रसव्यं दक्षिणापवर्गाणि पित्र्याणि १६ यानि शुल्बानि समासं गच्छन्ति प्रसव्यं तान्यावेष्ट्य प्रदक्षिणं समस्येत् १७ अथ यानि न समस्यन्ते प्रदक्षिणं तानि १८ अमावास्यायाममावास्यया यजेत १९ पौर्णमास्यां पौर्णमास्या २० यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् २१ श्वः पूरितेति वा २२ खर्विकां तृतीयां वाजसनेयिनः समामनन्ति २३ यदहर्न दृश्यते तदहरमावास्या २४ श्वो न द्रष्टार इति वा २५ एक-प्रकरणे चोद्यमानानि प्रधानानि समानविधानानि २६ प्रकरणेन विधयो बध्यन्ते २७ अनिर्देशात्साधारणानि २८ निर्देशाद्व्यवतिष्ठन्ते २९ आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयाजश्च पौर्णमास्यां प्रधानानि ३० तदङ्गमितरे होमाः ३१ आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो द्वादशकपालो वा मावास्यायामसोमयाजिनः ३२ सांनाय्यं द्वितीयं सोमयाजिनः ३३ नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते ३४ नैन्द्राग्नः संनयतो वर्णाविशेषेण ३५ पितृयज्ञः स्वकालविधानादनङ्गं स्यात् ३६ तुल्यवच्च प्रसंख्यानात् ३७ प्रतिषिद्धे च दर्शनात् ३८ सहाङ्गं प्रधानम् ३९

इति द्वितीया कण्डिका

देशे काले कर्तरीति निर्दिश्यते स्वशब्दं यत् १ अपूर्वो दर्विहोमः २ जुहोति चोदनः ३ स्वाहाकारप्रदानः ४ सकृद्गृहीत्वा ५ आहुतिगणे प्रत्याहुति गृहीत्वा ६ न वा समवद्येत् ७ समिदभावश्चाग्निहोत्रवर्जम् ८

अपरेणाग्निं दक्षिणं जान्वाच्यानाच्य वासीनो दर्विहोमाञ्जुहोति ९ वचना-
दन्यथा १० अपरेणाहवनीयं दक्षिणातिक्रम्योदगावृत्तः सर्वा आहुतीर्जुहोति
११ वचनादन्यथा १२ आश्रुतप्रत्याश्रुते याज्यानुवाक्ये अवदानेषु चोपस्त-
रणाभिघारणे चतुर्गृहीतं वषट्कारश्चादर्विहोमानाम् १३ वषट्कृते वष-
ट्कारेण वाहुतिषु संनिपातयेत् १४ उपयामेन ग्रहेषु १५ तयादेवतेनेष्ट-
कासु १६ पुरोडाशगणे यथाभागं व्यावर्तध्वमित्येकैकमपच्छिन्द्यात् १७
उत्तमौ यथाभागं व्यावर्तेथामिति १८ तयोरेव देवतोपदेशनं करोति १९
चरुपुरोडाशगणे चरुपुरोडाशीयान्प्रागधिवपनाद्विभजति २० यथादेवतमु-
पलक्षयति २१ इदंशब्दस्तन्त्रं स्यात् २२ व्यतिषक्तेष्वपि २३ कपाला-
नामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति २४ ध्रुवोऽसीति मन्त्रं
संनमति २५ पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति २६ अधिश्रयणका-
लेऽधिश्रयणमन्त्रेण तण्डलानावपति २७ अनुद्धृत्य चरुमासादयति २८
पञ्चदश सामिधेन्यो दर्शपूर्नमासयोः २९ सप्तदशेष्टिपशुबन्धानां यत्र श्रूयन्ते
३० उपांशु काम्या इष्टयः क्रियन्त इति तत्र यावत्प्रधानमुपांशु ३१ दर्शपू-
र्णमासाविष्टीनां प्रकृतिः ३२ अग्नीषोमीयस्य च पशोः ३३ स सवनीयस्य
३४ सवनीय ऐकादशिनानाम् ३५ ऐकादशिनाः पशुगणानाम् ३६ वै-
श्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम् ३७ वैश्वदेविक एककपाल
एककपालानाम् ३८ वैश्वदेव्यामिक्षामिक्षाणाम् ३९ तत्र सामान्याद्विकारो
गम्येत ४० एव देवता आग्नेयविकाराः ४१ द्विदेवता अग्नीषोमीयविकाराः
४२ बहुदेवताश्च ४३ ऐन्द्राग्नविकारा वा ४४ अन्यत्र प्रकृतिदेवताभ्यो
यथैन्द्रः पुरोडाशः सौम्यश्चरुरिति ४५ हविर्देवतासामान्ये हविर्बलीयः ४६
द्रव्यसंस्कारविरोधे द्रव्यं बलीयः ४७ अर्थद्रव्यविरोधेऽर्थो बलीयान् ४८
न प्रकृतावूहो विद्यते ४९ विकृतौ यथार्थमूहोऽर्थवादवर्जम् ५० परवा-
क्यश्रवणादर्थवादः ५१ शिष्टाभावे सामान्यात्प्रतिनिधिः ५२ तद्धर्मा च
स्यात् ५३ मात्रापचारे तच्छेषेण समाप्नुयात् ५४

इति तृतीया कण्डिका

स्वामिनोऽग्नेर्देवतायाः शब्दात्कर्मणः प्रतिषेधाच्च प्रतिनिधिर्निवृत्तः १ त्रि-
भिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात्प्रतिषेधादर्थलोपाच्च २ अग्निष्टोम

एकाहानां प्रकृतिः ३ द्वादशाहोऽहर्गणानाम् ४ गवामयनं सांवत्सरिकाणाम् ५ निकायिनां तु प्रथमः ६ अग्निष्टोम उत्तरवेदिः ७ उत्तरेषु क्रतुष्वग्निः ८ अन्यत्र साद्यस्क्रेभ्यो वाजपेयात्षोडशिनः सारस्वताच्च सत्रात् ९ क्रत्वादौ क्रतुकामं कामयेत १० यज्ञाङ्गादौ यज्ञाङ्गकामम् ११ अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रतिविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि १२ अल्पीयांसि कर्माणि भूयांसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्यात् । अवशिष्टा विकल्पार्था यथा यूपद्रव्याणीति १३ अन्ताल्लोपो विवृद्धिर्वा १४ प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात् १५ कुम्भीशूलवपाश्रपणीप्रभुत्वात्तन्त्रं स्यात् १६ जातिभेदे तु भिद्येत पक्तिवैषम्यात् १७ स्विष्टकृद्विकारे वनस्पतौ याज्यायां देवतानिगमाः स्युः प्रकृत्युपबन्धात् १८ अन्वारम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात् । कृता हि तदर्थेन १९ स्याद्वा कालस्याशेषभूतत्वात् २० आरम्भविभागाच्च २१ अर्थायार्थायाग्निं प्रणयति । अपवृत्ते कर्मणि लौकिकः संपद्यते यथा समारूढे २२

इति चतुर्थी कण्डिका

प्रवरान्व्याख्यास्यामः १ आर्षेयं वृणीते । बन्धोरेव नैत्यथो संतत्या इति विज्ञायते २ न देवैर्न मनुष्यैरार्षेयं वृणीते । ऋषिभिरेवार्षेयं वृणीत इति विज्ञायते ३ आर्षेयमन्वाचष्टे । ऋषिणा हि देवाः पुरुषमनुबुध्यन्त इति विज्ञायते ४ यो वा अन्यः सन्नथान्यस्यार्षेयेण प्रवृणीते स वा अस्य तदृषिरिष्टं वीतं वृङ्क्त इति विज्ञायते ५ त्रीन्वृणीते । मन्त्रकृतो वृणीते । यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते ६ अथैकेषाम् । एकं वृणीते । द्वौ वृणीते । त्रीन्वृणीते । न चतुरो वृणीते । न पञ्चातिवृणीत इति विज्ञायते ७ अत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होतेति विज्ञायते ८ पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते ९ पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते ९ भृगूणामेवाग्रे व्याख्यास्यामः १० जामदग्न्या वत्साः ११ तेषां पञ्चार्षेयुः प्रवरः । भार्गव च्यावनाप्नवानौर्व जामदग्नयेति । जमदग्निवदूर्ववदप्नवानवच्चयवनवद्भृगुवदिति १२ आर्षेयमु हैके । भार्गवौर्व जामदग्नयेति । जमदग्निवदूर्ववद्भृगुवदिति १३ एष एवाविकृतः सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डुप्राचीनयो-

ग्यानाम् १४ अथार्ष्टिषेणानां पञ्चार्षेयः । भार्गव च्यावनाप्नवानार्ष्टिषेणानूपेति । अनूपवदृष्टिषेणवदप्नवानवच्चयवनवद्भृगुवदिति १५ त्र्यार्षेयमु हैके । भार्गवार्ष्टिषेणानूपेति । अनूपवदृष्टिषेणवद्भृगुवदिति १६

इति पञ्चमी कण्डिका

अथ वीतहव्या यास्कवाधूलमौनमौकाः १ तेषां त्र्यार्षेयः । भार्गव वैतहव्य सावेदसेति । सवेदोवद्वीतहव्यवद्भृगुवदिति २ अथ गार्त्समदाः शनकाः ३ तेषामेकार्षेयः । गार्त्समदेति होता । गृत्समदवदित्यध्वर्युः ४ अथ वाध्र्यश्वा मित्रायुवः ५ तेषामेकार्षेयः । वाध्र्यश्वेति होता । वध्र्यश्ववदित्यध्वर्युः ६ अथ वैन्याः पार्थाः ७ तेषां त्र्यार्षेयः । भार्गव वैन्य पार्थेति । पृथु वद्वेन वद्भृगुवदिति ८ इमे भृगवो व्याख्याताः ९ अथातोऽङ्गिरसामायास्या गौतमाः १० तेषां त्र्यार्षेयः । आङ्गिरसायास्य गौतमेति । गोतमवदयास्यवदङ्गिरोवदिति ११ अथौचथ्या गौतमाः १२ तेषां त्र्यार्षेयः । आङ्गिरसौचथ्य गौतमेति । गोतमवदुचथ्यवदङ्गिरोवदिति १३ अथौशिजा गौतमाः १४ तेषां त्र्यार्षेयः । आङ्गिरसौशिज काक्षीवतेति । कक्षीवद्वदुशिजवदङ्गिरोवदिति १५ अथ वामदेवा गौतमाः १६ तेषां त्र्यार्षेयः । आङ्गिरस वामदेव बार्हदुक्थ्येति । बृहदुक्थ्यवद्वामदेववदङ्गिरोवदिति १७ अथ भरद्वाजानां त्र्यार्षेयः । आङ्गिरस बार्हस्पत्य भारद्वाजेति । भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति १८ एष एवाविकृतः १९

इति षष्ठी कण्डिका

कुक्काग्निवेश्योर्जायिनानां सर्वेषां च स्तम्बस्तम्बशब्दानाम् १ अथ द्व्यामुष्यायणानां कुलानां यथा शुङ्गशैशिरयः २ भरद्वाजाः शुङ्गाः । कताः शैशिरयः ३ तेषां पञ्चार्षेयः । आङ्गिरस बार्हस्पत्य भारद्वाज कात्यात्कीलेति । अत्कीलवत्कतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति ४ त्र्यार्षेयमु हैके । आङ्गिरस कात्यात्कीलेति । अत्कीलवत्कतवदङ्गिरोवदिति ५ अथर्क्षाणां पञ्चार्षेयः । आङ्गिरस बार्हस्पत्य भारद्वाज वान्दन मावचसेति । मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति ६ त्र्यार्षेयमु हैके । आङ्गिरस वान्दन मा वचसेति । मतवचोवद्वन्दनवदङ्गिरोवदिति ७ अथ

कपीनां त्र्यार्षेयः । आङ्गिरसामहीयौरुक्षयेति । उरुक्षयवदमहीयवदङ्गि-रोवदिति ८ अथ गर्गाणां त्र्यार्षेयः । आङ्गिरस गार्ग्य शैन्येति । शिनि वद्गर्गवदङ्गिरोवदिति ९ भरद्वाजमु हैकेऽङ्गिरसः स्थाने । भारद्वाज गार्ग्य शैन्येति । शिनिवद्गर्गवद्भरद्वाजवदिति १० अथ हरितानां त्र्यार्षेयः । आङ्गिरसाम्बरीष यौवनाश्वेति । युवनाश्ववदम्बरीषवदङ्गिरोवदिति ११ मान्धातारमु हैकेऽङ्गिरसः स्थाने । मान्धात्राम्बरीष यौवनाश्वेति । युव-नाश्ववदम्बरीषवन्मान्धातृवदिति १२

इति सप्तमी कण्डिका

अथ कुत्सानां त्र्यार्षेयः । आङ्गिरस मान्धात्र कौत्सेति । कुत्सवन्मान्धा-तृवदङ्गिरोवदिति १ अथाजमीढाः कण्वाः २ तेषां त्र्यार्षेयः । आङ्गि-रसाजमीढ काण्वेति । कण्ववदजमीढवदङ्गिरोवदिति ३ अथ विरूपा रथीतराः ४ तेषाम् त्र्यार्षेयः । आङ्गिरस वैरूप पार्षदश्वेति । पृषदश्व-वद्विरूपवदङ्गिरोवदिति ५ अष्ट्रादंष्ट्रमु हैकेऽङ्गिरसः स्थाने । आष्ट्रादंष्ट्र वैरूप पार्षदश्वेति । पृषदश्ववद्विरूपवदष्ट्रादंष्ट्रवदिति ६ अथ मुद्गलानां त्र्यार्षेयः । आङ्गिरस भार्ग्यश्च मौद्गल्येति । मुद्गलवद्भर्म्यश्ववदङ्गिरोवदिति ७ तृक्षमु हैकेऽङ्गिरसः स्थाने । तार्क्ष्य भार्म्यश्च मौद्गल्येति । मुद्गलवद्भृ-म्यश्ववत्तृक्षवदिति ८ अथ विष्णुवृद्धानां त्र्यार्षेयः । आङ्गिरस पौरुकुत्स त्रासदस्यवेति । त्रसदस्युवत्पुरुकुत्सवदङ्गिरोवदिति ९ एष एवाविकृतः शठमर्षणभद्रणमद्रणबादरायणौपमिन्यौपगविसात्यकिसात्यं काम्यारुणिनि-तुण्डीनाम् १० अथात्रीणां त्र्यार्षेयः । आत्रेयार्चनानस श्यावाश्वेति । श्यावाश्ववदर्चनानसवदत्रिवदिति ११ अथ गविष्ठिराणां त्र्यार्षेयः । आ-त्रेयार्चनानस गाविष्ठिरेति । गविष्ठिरवदर्चनानस वदत्रिवदिति १२ अ-थातिथीनां त्र्यार्षेयः । आत्रेयार्चनानसातिथ्येति । अतिथिवदर्चनानस वदत्रिवदिति १३ एष एवाविकृतो वामरथ्यसुमङ्गलबै जवापीनाम् १४

इत्यष्टमी कण्डिका

अथ विश्वामित्राणां देवराताश्चिकितमनुतन्त्वौलकिवालुकियज्ञवल्कोलूकबृ-हदग्निबभ्रुगालविशालावतशालङ्कायनकालबवाः १ तेषां त्र्यार्षेयः ।

वैश्वामित्र दैवरातौदलेति । उदलवद्देवरातवद्विश्वामित्रवदिति २ अथ श्रौमतकामकायनानां त्र्यार्षेयः । वैश्वामित्र दैवश्रवस दैवतरसेति । देवतरसवद्देवश्रवोवद्विश्वामित्रवदिति ३ अथाज्यानां त्र्यार्षेयः । वैश्वामित्र माधुच्छन्दसाज्येति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति ४ अथ माधुच्छन्दसा एव धनंजयाः ५ तेषां त्र्यार्षेयः । वैश्वामित्र माधुच्छन्दस धानंजय्येति । धनंजयवन्मधुच्छन्दोवद्विश्वामित्रवदिति ६ अथाष्टका लोहिताः ७ तेषां द्व्यार्षेयः । वैश्वामित्राष्टकेति । अष्टकवद्विश्वामित्रवदिति ८ अथ पूरणा वारिधापयन्ताः ९ तेषां द्व्यार्षेयः । वैश्वामित्र पौरणेति । पूरणवद्विश्वामित्रवदिति १० अथ कतानां त्र्यार्षेयः । वैश्वामित्र कात्यात्कीलेति । अत्कीलवत्कतवद्विश्वामित्रवदिति ११ अथाघमर्षणाः कुशिकाः १२ तेषां त्र्यार्षेयः । वैश्वामित्राघमर्षण कौशिकेति । कुशिकवदघमर्षणवद्विश्वामित्रवदिति १३ अथ कश्यपानां त्र्यार्षेयः । काश्यपावत्सार नैध्रुवेति । निध्रुववदवत्सारवत्कश्यपवदिति १४ अथ रेभाणां त्र्यार्षेयः । काश्यपावत्सार रभेति । रेभवदवत्सारवत्कश्यपवदिति १५

इति नवमी कण्डिका

अथ शण्डिलानां द्व्यार्षेयः । दैवलासितेति । असितवद्देवलवदिति १ त्र्यार्षेयमु हैके । काश्यप दैवलासितेति । असितवद्देवलवत्कश्यपवदिति २ द्व्यार्षेयास्त्वेवंन्यायेन ३ एकार्षेया वासिष्ठा अन्यत्र पराशरेभ्यः । वासिष्ठेति होता । वसिष्ठवदित्यध्वर्युः ४ त्र्यार्षेयमु हैके । वासिष्ठैन्द्रप्रमदाभरद्वसो इति । आभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति ५ अथ पराशराणां त्र्यार्षेयः । वासिष्ठ शाक्त्य पाराशर्येति । पराशरवच्छक्तिवद्वसिष्ठवदिति ६ अथ कुण्डिनानां त्र्यार्षेयः । वासिष्ठ मैत्रावरुण कौण्डिन्येति । कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति ७ अथ संकृमिपूतिमाषाणां त्र्यार्षेयः । शाक्त्य सांकृत्य गौरिवीतेति । गौरिवीतिवत्संकृतिवच्छक्तिवदिति ८ अथागस्तीनामेकार्षेयः । आगस्त्येति होता । अगस्तिवदित्यध्वर्युः ९ त्र्यार्षेयमु हैके । आगस्त्य दार्ढच्युतैध्मवाहेति । इध्मवाहवद्दढच्युतवदगस्तिवदिति १० अथ क्षत्रियाणाम् ११ यद्यत्र सार्ष्टिं प्रवृणीरन्नेक एवैषां प्रवरः । मानवैड पौरूरवसेति । पुरूरवोवदिडा-

वन्मनुवदिति १२ अथ येषामु ह मन्त्रकृतो न स्युः सपुरोहितप्रवरास्ते प्रवृणीरन् १३ अथ येषां स्युरपुरोहितप्रवरास्ते १४ सपुरोहितप्रवरास्त्वेवंन्यायेन १५ एकार्षेया विशः । वात्सप्रेति होता । वत्सप्रवदित्यध्वर्युः १६ अथासंप्रज्ञातबन्धुराचार्यामुष्यायणमनुप्रब्रवीताचार्यप्रवरं प्रवृणीत १७ अथाह तारिडन एकार्षेयं सार्ववर्णिकं समामनन्ति । मानवेति होता मनुवदित्यध्वर्युः । मानव्यो हि प्रजा इति हि ब्राह्मणमिति हि ब्राह्मणम् १८

इति दशमी करिडका

पुरस्तात्सामिधेनीनां होता हृदयदेश ऊर्ध्वं प्रादेशं धारयमाणो जपति मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इति १ अन्तराहवनीयमुत्करं च प्रतीचीनं गच्छञ्जपति कं प्रपद्ये तं प्रपद्ये । यत्ते प्रजापते शरणं छन्दस्तत्प्रपद्ये । यावत्ते विष्णो वेद तावत्ते करिष्यामि । नमो अग्नय उपद्रष्ट्रे नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे । जुष्टामद्य देवेभ्यो वाचमुद्यासं स्वधावतीं पितृभ्यः शुश्रूषेरायां मनुष्येभ्यः । प्रशास्त आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्ये । अभयं मे अस्तु । प्राजापत्यमनुवक्ष्यामि । वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु । वाचं प्रपद्ये भूर्भुवः सुवरिति । सत्यं प्रपद्य इति वा २ विष्णो स्थाने तिष्ठामीत्यवतिष्ठते ३ अन्तर्वेदि दक्षिणः पादो भवति । बहिर्वेदि सव्यः ४ अथोर्ध्वस्तिष्ठन्ब्रह्मन्सामिधेनीरनुवक्ष्यामीति ब्रह्माणमामन्त्र्य दशहोतारं व्याख्याय व्याहृतीश्च जपित्वा त्रिर्हिङ्कृत्योत्तमेन हिङ्कारेणार्धर्चमुपसंदधाति ५ त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ६ यं कामयेत सर्वमायुरियादिति तस्य त्रिरनवानं प्रथमोत्तमे अनुब्रूयात् ७ एकैकामेव संतन्वन्ननवानमनुब्रूयादित्येके ८ तृतीयां सामिधेनीं त्रिविगृह्णाति । संततमन्वाहेति सामिधेनीनामविशेषात् ९ विज्ञायते च । ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यः । ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरन् । अर्धर्चौ संदधाति संयुनक्त्येवैना इति ते मन्यामहे १० पूर्वस्याश्चोत्तरमुत्तरस्याश्च पूर्वं तौ संदध्यात् ११ संततमन्वाहेति सामिधेनीनामनुच्छ्वासवादो विज्ञायते च १२ नान्तरर्चौ व्यन्यात् । यद्यन्तरर्चौ व्यन्यादपाने प्राणं दध्यात् । अतिहाय पूर्वस्या अर्धर्चमुत्तरस्या अर्धर्चे व्यनिति १३ त्रिरनुवचनेनार्धर्चसंतानो विद्यत एकर्षित्वात् १४ त्वं

वरुण इति वसिष्ठराजन्यानां परिधानीया । जुहोतेतीतरेषां गोत्राणाम् १५ नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् । तनूनपादितरेषां गोत्राणाम् १६ सामिधेनीरनूच्य प्रवरमुक्त्वा निविदोऽन्वाह १७ तासां सप्त पदान्युक्त्वापानिति १८

इत्येकादशी कण्डिका

अथ चत्वार्यथ चत्वारि १ ता अनूच्य देवता आवाहयति या यक्ष्यमाणो भवति २ स वै खलु वाजिनो नावाहयेद्देविका देवसुवो यच्च किं चैतादृक्ते मन्यामहे ३ परप्रधानानां परतन्त्रव्यवेतानां च प्रतिषेधः स्यात्तल्लिङ्गत्वाच्छब्दस्य ४ एकदेवतानां नानादेवताव्यवेतानां तन्त्रमावाहनं विभवात् ५ अथोर्द्ध्वज्ञुः प्रादेशेन भूमिमभिनिधाय जपतीदमहं त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेणास्यै पृथिव्या अस्यै प्रतिष्ठाया अस्मादायतनाद्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तं हन्मि । यदद्य होतृवर्ये जिह्मं चक्षुः परापतत् । अग्निष्टत्पुनराभरज्जातवेदा विचर्षणिः । वसूनां रातौ स्याम रुद्राणामूर्म्यायां स्वादित्या अदितयेऽनहसः । चारुमद्य देवेभ्यो वाचमुद्यासं चारुं ब्रह्मभ्यश्चारुं मनुष्येभ्यश्चारुं नराशंसायानुमतां पितृभिः । ये ते शतं वरुण ये सहस्त्रं यज्ञियाः पाशा वितताः पुरुत्रा । तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्येति ६ अथ यदेनमाहासौ मानुष इति तदुपोत्थाय दक्षिणेन पाणिना दक्षिणमध्वर्योरंसमन्वारभ्य जपति । सव्येनाग्नीध्रस्य दक्षिणम् । षष्टिश्चाध्वर्यो नवतिश्च पाशा होतारमग्निमन्तरा विचृत्ताः । सिनन्ति पाकमति धीर एत्यृतस्य पन्थामन्वेति होता । अग्निमन्वारभामहे होतृवर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ७ मयि प्राणापानाविति पाणी प्रत्याहृत्योरोदेशं स्पृशते ८ आ पृणोषि संपृण प्रजया मा पशुभिरापृणेतीध्मसंनहनानि मुखं प्रति विधूनुते ९ अथाप उपस्पृश्याग्ने नय सुपथा राये अस्मान् । एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः । अवतां मा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवानित्येते ऋचौ जपन्होतृषदनाय प्रव्रजति १० जघनेन होतृषदनं प्राङ्मुख उपविश्याथ होतृषदनमभिमृशत्यहे दैधिषव्येति ११ अथास्मात्तृणं निरस्यति १२

इति द्वादशी कण्डिका

शुष्कं प्रच्छिन्नाग्रं वा निरस्तः पराग्वसुः सह पाप्मनेति १ अथ होतृषदन उपविशति पातं मा द्यावापृथिवी उपस्थ इति दक्षिणपूर्विणं सव्योत्तरिणं वोपस्थं कृत्वा २ अथ जपति सीद होतर्नि होता होतृषदन इति द्वे । पि-प्रीहि देवाँ उशतो यविष्ठेत्येषा । वेषि होत्रमुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋतावा । स्वाहा वयं कृणवामा हवींषि देवो देवान्यजत्यग्नि-रर्हन् । आ देवानाम् । त्वमग्ने व्रतपा असि । यद्वो वयं प्रमिनाम । यत्पाकत्रा मनसा । विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा ज-जान । स आ यजस्व नृवतीरनु क्षाः स्पार्हा इषः क्षुमतीर्विश्वजन्याः । यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान । पन्थामनु प्रविद्वान्पितृयाणं द्युमदग्ने समिधानो वि भाहीत्येतस्य सूक्तस्य षट् सर्वं वा । विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि । यमिच्छामि मनसा सो ऽयमागाद्यज्ञस्य विद्वान्परुषश्चिकित्वान् । स नो यक्षद्देवताता यजीयान्नि हि षत्सदन्तरः पूर्वो अस्मन्निषद्य । तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम । ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् । नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम दे-वान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवा इति ३ एतज्जपित्वा स्रुचावादापयति ४ सर्वत्र पुरस्ताद्याज्याया येयजामहमुक्त्वा व्याहृतीर्द-धाति ५ नानूयाजेषु येयजामहं करोति ६ अनवानमनूयाजान्यजति । अमत्सतेति वापानिति ७ पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या । उपरिष्टाल्ल-क्ष्मा याज्या । एतद्वा विपरीतम् ८ उभयतोलक्ष्मा पुरोऽनुवाक्या तथा याज्येत्येके ९ तिष्ठन्पुरोऽनुवाक्यामन्वाह । आसीनो याज्याम् । उभे तिष्ठन्नासीनो वा १० सा ह त्वै समृद्धा पुरोऽनुवाक्या यामभिव्याहरन्देव-तामेवाग्रेऽभिव्याहरति । सा ह त्वै समृद्धा याज्या यस्यै देवताया अधि वषट्करोति ११ ऋचि प्रणवं दधाति याज्यावर्जम् १२ ओमित्यृचोऽधि प्रणौति १३

इति त्रयोदशी कण्डिका

उत्तमस्याक्षरस्य विकारमेक आहुः १ अधिकः स्यादित्यपरम् २ विज्ञायते च । ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौत्यधिके पुनरेतदुपपद्यते संततमृचा वषट्करोतीति च तद्वद्याज्याया अधि वषट्करोति ३ अपगूर्य वषट्करोतीत्युच्चैर्वादः शब्दस्य ४ यं कामयेत प्रमायुकः स्यादिति तस्योच्चैरपगूर्य निखिदन्निव वषट्कुर्यात् । यं कामयेत पापीयान्स्यादिति नीचैस्तरां तस्य याज्याया वषट्कुर्यात् । यं कामयेत वसीयान्स्यादित्युच्चैस्तरां तस्य याज्याया वषट्कुर्यात् । न वसीयान्न पापीयानिति समं तस्य याज्याया वषट्कुर्यात् । उच्चैः क्रौञ्चमिव वषट्कुर्यात्स्वर्गकामस्येति विज्ञायते ५ बलीय ऋचो वषट्करोतीति तद्वत् ६ यां देवतां यजेत्तां मनसा ध्यायेत्पुरा वषट्कारात्स्वर्गकामस्येति विज्ञायते ७ वषट्कृत्य प्राणयापान्य निमिषेत् ८ अपानेनैव प्राणं धारयेन्निमिषेण चक्षुरिति विज्ञायते ९ यं द्विष्यात्तस्यौषडिति वषट्कुर्यात् । ओषत्येवेति विज्ञायते १० वाषडित्येके समामनन्ति । वौषडित्येके । वौषाडित्येके । वाक्षडित्येके । वौक्षडित्येके । वौक्षाडित्येके ११ वषट्कार मा मे प्र वाङ्गो अहं त्वां बृहता मन उपह्वये । न मां न मे वाचं हिनसात् । हव्यं देवेभ्योऽभिवहाम्योजः सहः सह ओजः । वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीरित्येतद्वषट्कृते जपति । वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीरिति वा १२ अङ्गुली मुक्त्वा मिषे प्राणायेति मुखदेशमूर्ध्वमुत्कृष्योर्जेऽपानायेत्यवाचीनं नियच्छति १३ अवानरेडामवत्तामङ्गुलीभिर्निगृह्य न मुष्टिं करोति १४ मुखमिव प्रत्युपह्वयते १५ यं कामयेतापशुः स्यादिति पराचीं तस्येत्युक्तम् १६ पदाभ्यासप्रतिषेधस्तु १७ विज्ञायते चेडोपहूतेति तत्पराची । उपहूतेति तत्प्रतीची १८ आध्वर्यव एवातोऽन्यानि कर्माणि होतुराम्नातानि भवन्ति । उपदेशादितराणीतराणि १९

इति चतुर्दशी कण्डिका

इति चतुर्विंशः प्रश्नः